॥ श्रीः ॥

श्रीपद्मलक्ष्मीवेङ्कटेशाभ्यां नमः

# विषमपदवाक्यवृत्तिः ।

श्रीमन्महामहोपाध्याय नागोजीभट्टविरचित
लघुशब्देन्दुशेखरव्याख्या

पदवाक्यप्रमाणपारावारीण राघवेन्द्राचार्यविरचिता

वञ्चटङ्कोपाह्वश्रीयुत नारायणशास्त्रिणा संशोधिता ।

श्रीकाश्यां

राजराजेश्वरीनाम्नि मुद्रणालये
मुद्रयित्वा प्रकाश्य
नीता ।



सं० १९४८ ज्ये० शु० २ सोमे

सुरासुरासेवितपादपङ्कजा ।
करे विराजत्कमनीयपुस्तका ।
विधेश्च पत्नी कमलासनप्रिया
सरस्वती नृत्यतु वाचि मे सदा ॥ १ ॥

॥ श्रीः ॥

## श्रीगुरुचरणसरोजेभ्यो नमः ॥

---

प्रसिध्यति किल वेदमुखतया परमपवित्रभूतं निखिलभारतवर्षप्रचलितं विशेषतो विद्यापीठेषु वाराणस्यादिमान्यस्थलेषु पठनपाठनगोचरीभूतं पाणिनीयं व्याकरणं नाम शास्त्रं सर्वत्र । तत्र भवता पाणिनिमुनिना कृताङ्कुरारोपणे महर्षिकात्यायनेन विरचितपल्लवे पूज्यपादपतञ्जलिना दृढीकृतस्कन्धेऽत्र शाखिनि समारुरुक्षूणां तत्फलास्वादरसिकानां सुखसमारोहणाय व्यरच्यन्त सोपानपरम्परा इव नानाविधाः प्रबन्धाः लोकोत्तरविपश्चिद्भिर्मनीषिभिर्येष्वद्यत्वे श्रीमन्महामहोपाध्यायनागेशभट्टोपनिबद्धो लघुशब्देन्दुशेखरः समाद्रियते शेखरतया सर्वैस्तत्रापि च समासादयति कारकान्तो भागो मध्यमणिताम् । कुशाग्रबुद्धिनिर्ग्राह्यस्यास्य साधारणजनदुरवगाहतां पर्यालोच्य बहुभिर्विद्वद्वरैर्विरचितेषु बहुषु व्याख्यानेषु विषमस्थले प्रदीपकल्पः श्रीमता विद्वत्कुलमौलिमालायितेन राघवेन्द्राचार्येण विरचितो विषमीनामकोऽयं ग्रन्थोऽतीव पठनपाठनोपकारीति विचार्य शिलाक्षरैः पूर्वं मुद्रितोऽप्ययमजन्तस्त्रीलिङ्गाजन्तनपुंसकहलन्तप्रकरणैर्विरहितो नालं साकल्येन संतोषजननाय सुधियामिति साकल्येन कारकान्तं भागं मुद्रयितुं चेष्टोत्साहोऽन्विष्यान्विष्य दुर्लभानि तानि प्रकरणानि सांप्रतं "सातारा" नाम्नि दक्षिणदेशनगरे मान्यवरगजेन्द्रगडकरोपाह्व श्रीमदनन्ताचार्य बुधवरसकाशादुपलभ्य किंचिद्विकलं कारकान्तं भागं वजूटकोपाह्वनारायणशास्त्रिभिः कृतसंशोधं स्वच्छतामभिलष्यतां जनानां संतोषाय सीसकाक्षरैर्मुद्रयित्वा प्रकाशितवानस्मि । प्रार्थये च सकलहृदयवर्तिनं भगवन्तं श्रीविश्वेश्वरं विदुषामत्र प्ररोचनोत्पादनेन मामकीनं परिश्रमं सफलयितुमिति शम् ॥

श्रीकाश्याम् ।

ज्ये० शु० २ सोमे

द्राविडवीरेश्वरशास्त्री

सं० १९४८

श्रीगणेशाय नम ॥

यद्भोशायै सुरवरगणै स्तूयमानो ऽप्यपारो
व्यक्ताव्यक्ते सृजति भरति प्रापयत्युच्चभावम् ॥
यद्भ्रूभङ्गात्सृजति भुवन ब्रह्मरुद्रादि सा श्री
वक्ष श्लिष्टा जयति स विभु श्रीनिवासो यदादौ ॥ १ ॥
आत्रेयवशविधुना सकलकलापारदृश्वना सुधिया ॥
श्रीराघवेन्द्रगुरुणा क्रियते शब्देन्दुशेखरव्याख्या ॥ २ ॥
नवयुक्तिगुम्फितनया मोदा ता चन्द्रिका तु सक्षिप्य ।
विषमपदवाक्यविनुति कुर्वे ऽह बालबोधाय ॥३॥

पातञ्जलइत्यादि श्लोकत्रयमेकान्वयम् । सतो दीप्यतीति विग्रह । कक्ष शुष्ककाननम् । कक्षस्तु दोर्मूले शुष्ककानने इत्यभिधानम् । मनोरमोमा देहमिति । तेन मनोरमोक्तार्थप्रकाशनम् । मनोरमाया कचिद् गुणत्व सूचित भवति । समुचितेनेति । तत्र चैतच्छास्त्रप्रवर्तकमन्वितत्वात् । निरस्कत्येत्यर्थ इति । निवृत्तप्रेषणात्धानेर्हेतुमण्णिजिति भाव । वृत्तिपरिच्छेदकत्वेनेति । शक्तिग्राहकत्वेनेत्यर्थ । स्वरसन्धिस्तु नप्रवर्तते । वर्णोपदेशकाले ऽजादिसञ्ज्ञानामनिष्पादादिति कैयटोक्त तु नयुक्तम् । तदुपदेशकाले ऽजादिसञ्ज्ञानामनिष्पादेपि सवर्णसञ्ज्ञादिफलस्य दीर्घादेस्तुल्याम्यसूत्रादाविव स्वरसन्धेरत्र प्रवृत्तौ बाधकाभावात् इति दीक्षितोक्त दूषणमुद्दिधीर्षुणा रत्नकोशकारेणोक्त कैयटग्रन्थ उपजीव्यविरोधात्सन्धिर्नेत्यर्थकतया व्याख्यातस्तद् दूषयितुमनुवदति । यत्त्विति । तथाचाविकृताकारश्रवणमुपजीव्य जातशक्तिग्रहणउपजीव्याविकृतश्रवणविरोधिसन्धिकार्यं न जनयतीति भाव । शक्त्यग्रहेणेति । इदमयुक्तम् । नह्यकारादिषु शक्तिग्रहमुपजीव्य प्रवर्तमान सन्धिकार्यमर्थान्तरे श क्तिग्रहजननद्वारा स्वोपजीव्यशक्तिग्रह न विहन्तीति रत्नकोशग्रन्थार्थ । कि तूक्तरीत्याऽविकृताकारादिश्रवणमुपजीव्य जात शक्तिग्रह स्वोपजीव्याविकृताकारादिश्रवण न विहन्तीति । तथा च तद्दूषणमपराध्येपोधानुष्कस्य कण्ठाऽच्छेदमनुकरोति । अकारादिषुशक्तिनिश्चयमुपजीव्य प्रवर्तमान सन्धिकार्यमुक्तनिश्चयनिरोधिसन्देहाधायकतया भ

सन्धिकार्यं प्रवर्तयतीत्याशङ्कते । नचेति । आम्नायशब्दो दृष्टान्तार्थः । अनुबन्धानां महेश्वरकृतत्वे तत्प्रत्याख्यानासङ्गतिमाशङ्क्य समाधत्ते । जमडणनमिति । प्रत्याख्यानभाष्यस्य दृष्टार्थकत्वखण्डनपरत्वे वृद्धिसूत्रस्थभाष्यासङ्गतिमाशङ्क्य समाधत्ते । वृद्धिसूत्रस्थेति । अतएवेति । चतुर्दशसूत्र्या वेदत्वादेवेत्यर्थः । शरीरीति । अनेनाशरीरेणेश्वरेण वेदः कृत इति लभ्यते । इदन्तु न युक्तम् । तस्य पौरुषेयत्वात् । अस्य महतो भूतस्य निःश्वसितमिति श्रुतेश्च । अनायासेनोच्चारितार्थकत्वात् । विमर्शे विचारे क्रियमाणे शिवादागतमेवैतत्सूत्रजालं न तु ढक्कानिनाद एव । अन्त्या वर्णाश्चतुर्दश यत्र समुदाये इति विग्रहः । अजिति योगविभागादच् । यद्वा चतुर्दशानां पूरणाश्चतुर्दशाः सर्वेषामप्यविशेषेण तथात्वात् । विग्रहस्तु पूर्ववत् । अन्त्यमित्यस्यासमस्तत्वेन्त्यभूतश्चतुर्दशवर्णसमुदाय इत्यर्थः । तत्करणम्चेति । अन्ये त्वनुबन्धाः पाणिनिकृता एव । समुपादिष्टमित्यस्यैवमनुबन्धा आसक्तव्या इति महेश्वरेणोपदिष्टमित्यर्थं इत्याहुः । ननूपदेशपदस्यादेच उपदेशे इत्यादौ पाणिनीयापूर्वोच्चारणार्थकत्वमिव महेश्वरीयापूर्वोच्चारणार्थकत्वं तथाच तन्निमित्तत्वं प्राप्तमित्यत आह । मन्त्रोपदेशवदिति । नहि मन्त्र उपदेष्टृनिर्मित इति भावः । अतएवेति । महेश्वरकर्तृकत्वाभावादेवेत्यर्थः । इदं चिन्त्यम् । श्रीबादरायणकर्तृकस्यापि भारतादेः सर्ववेदपारायणजपुण्यफलकत्वोक्तेः । ननु हल्प्रत्याहारसिद्धेः प्राक् उपदेशे ऽजित्यस्य वाक्यार्थबोधाभावे ऽप्यणप्रत्याहारकाले लणित्यकारस्येत्सञ्ज्ञालोपाभ्यामपहारसम्भवेनाक्षरसमाम्नायिकानामेव ग्राहकशास्त्रे ऽण्पदेन ग्रहणेन सानुनासिकाकारस्याग्रहणत्वेन दीर्घसानुनासिकग्रहणं न संभवतीत्याशङ्क्याह । जातिग्रहणस्येति । मामिति । आनिति अशब्दस्य द्वितीयाबहुवचनम् । तस्य नश्छव्यप्रशानिति रुत्वे आँ इति रूपम् । यद्यपि जातिपक्षे निरनुनासिकाकारस्यापि हल्त्वं सुवचं तथापि सानुनासिकोच्चारणवशात्सानुनासिकस्यैवाच्त्वजात्यवच्छिन्नस्य हल्त्वमित्यभिप्रेत्य सानुनासिकाकार इत्युपपादितं वस्तुत आनुनासिक्यगुणस्येत्सञ्ज्ञार्थतया कृतार्थत्वान्निरनुनासिकस्यापि हल्पदेन ग्रहणमित्याह ॥ सोऽस्तीति ॥ केचित्तु हलन्त्यमित्यत्र हल्पदेन सानुनासिकाकारग्रहणसंभवेपि मोनुस्वार इत्यत्र हल्पदेन न तस्य ग्रहणं ततः पूर्वमुपदेशेऽजित्यस्य वाक्यार्थसंभवे इत्संज्ञालोपाभ्यां तदपहारात् ॥ नाज्झलावणुदित्यनयोः सूत्रयोरजण्पदाभ्यामाक्षरसमाम्नायिकानामेव ग्रहणे ऽप्यन्यत्र दीर्घादीनामपि ग्रहणवदत्तेन वल्प्रत्याहारे

ऽप्यकारस्य ग्रहणापत्तौ अयत इत्यादौ लोपोव्योर्वलीति लोपापत्तिः परास्तेत्याहुः । अतएवेति । लण्सूत्रस्थाकारस्येत्संज्ञालोपयोरङ्गीकारेण "लोपश्च बलवत्तरइति" तृतीयहेत्वविषयत्वादित्यर्थः । अप्रधानत्वादिति । द्वितीयहेतोरव्यापकतामाशङ्कते । नचेति । पुनः पुनरिति । न पुनरन्तरेणाच्चं व्यञ्जनस्योच्चारणमपि भवतीति भाष्योक्तन्यायेन पुनः पुनरकारोच्चारणमावश्यकत्वाददुष्टमेतत् । हश्प्रत्याहारे तु न टकारग्रहणम् । यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति इति भाष्यस्यान्तःस्थानामन्तःस्थेषु पञ्चमानां पञ्चमेषु चतुर्थानां चतुर्थेषु तृतीयानां तृतीयेषु द्वितीयानां द्वितीयेषु प्रथमानां प्रथमेषूपगामूप्रसूत्रदेशस्य मङ्गलार्थत्वेन नैतरेषामितरेष्वित्यर्थकत्वात् । अचो ऽप्सु हलो हल्ष्विति भाष्यस्योत्कृतमार्थत्वान्न कश्चिद्दोषः । अनभिधानाच्चेति । कोयष्टिकटीकेत इति मालत्याः प्रयोगदर्शनेनासुकरमेतदिति केचित् । अन्येतु हशिचेति शास्त्रदृष्ट्या त्रैपादिकभावकार्यमानस्याऽप्युत्वग्रहणसामर्थ्येन सिद्धत्वकल्पनात्परत्वाद्विसर्ग इत्याहुः । आहुरिति । अत्र पाठकल्पनप्रत्याहारमण्डनखण्डनप्रपञ्चस्तु शब्देन्दुशेखरव्याख्यायां चन्द्रिकायां बोध्यम् । आवृत्त्येति । हलित्यनेनोद्देश्यविधेयभावेन हल्संज्ञाविधानार्थमेकम् । आदिरन्त्येनेत्यनेनैकवाक्यतया यरादिप्रत्याहारार्थमपरमिति भावः । रूपभृताविति । रुशब्दइत्यादौ । इणगताविति । इदं चिन्त्यम् । तस्मिन्नेत्येभत्यूह्रितेनेद्वौ मेहतोते रूपानिष्पत्तेः । व्यर्थत्वञ्चेति । येन अमङगेति णादिभिरणादिप्रत्याहारापत्तिर्बोध्या । सम्बन्धसामान्येति । अवयवावयविभावस्यैकत्वे ऽप्येकत्र तस्य मुख्यत्वमपरत्र तत्त्वारोपितत्वमित्येतावता भेदमाश्रित्येदमुक्तमिति ध्येयम् । नचास्यामवस्थायां मध्ये विवक्षायां असम्भवादेकशेषस्याप्यसम्भवः इति वाच्यम् । एकशेषनिर्देशाद्वा सिद्धं हल् च हल् च हलिति भाष्यप्रामाण्येनाऽसहविवक्षायामप्येकशेषकल्पनादित्यूह्यमिति कैयटोक्तव्याख्यैव युक्ता । मुख्यारोपितयोरेकशब्दार्थत्वाभावात् । भाष्याक्षराण्यपि कथञ्चित्तदानुगुण्येनैव योज्यानीति बोध्यम् । कैयटइति । तन्मते चापवादविषयं प्रकल्प्य सर्वोत्यर्थः । तथा च यथापवादविषयसम्पत्तिस्तथैवोत्सर्गेण प्रवर्त्तितव्यमित्यर्थः । प्रतिपन्नइति । तन्निमित्तत्वमित्यर्थः । एवमुक्तमिति । एतदेव ज्ञापयतीत्याद्युक्तिः । नन्वेवं संग्राहकवाक्यार्थबोधे हलन्त्यं नविभक्तावित्यनयोरन्योन्याश्रयाभावेऽपि लक्ष्यसंस्कारके उपप्लूयमानवाक्यार्थबोधे ऽन्योन्याश्रयः सुस्थ एवापवादवाक्यार्थबोधं विना तद्विषयपरिहारेणोत्सर्गवाक्या-

र्थपङ्क्त्यायोगात् । यद्वा नविभक्ताविस्येतद्वाक्यार्थबोधे तद्विषयपरिहारेणेतस्य प्रवृत्तिः। एतत्प्रवृत्तौ सुप्तिङादिप्रत्याहारसिद्धिः । तत्सिद्धौ च नविभक्ताविस्येतद्वाक्यार्थबोध इत्यन्योन्याश्रय इत्यत आह । नविभक्ताविति । पदार्थज्ञानमात्रेणेति । तथा च न-विभक्ताविस्येतद्वाक्यार्थबोधाभावेपि तद्घटकप्रतियोगिसमर्पकतुस्मा इति प्रथमान्त-पदार्थज्ञानमात्रेण पादीनां तद्भिन्नत्वेन तन्निषेधाविषयत्वग्रहेण तत्रेत्सञ्ज्ञाप्रवृत्तिः सुलभेत्याशयः । अणुदित्सूत्रोदिदिति क्कादीनां सञ्ज्ञेति बोध्यम् । तद्वल्लभ्यमिति तेन हलविलेखनइति धातौ लस्य नेत्वम् । उपदेशेनन्त्यत्वादिति भावः । इदन्त्य-सद्देशेनेत्यर्थ इति । प्रत्याहारनिष्पत्तिकाले ऽन्त्यस्यासत्त्वेपि तस्य स्मरणमात्रेण तत्सा-दृश्यज्ञानमिगादिशब्दघटककादिषु सुलभमित्याशयः । व्यक्तिपक्षार्थइति । प्रत्युच्चा-रणं वर्णव्यक्तिर्भिन्नेति पक्ष इत्यर्थः । अत्र साहश्यात्प्रयोगिनः समुदायावटकत्वेपि तत्प्रतियोगिनस्तथात्वात् । तेनैव समुदायाक्षेपः सुलभः । आह्नुरित्युत्तरमाचिश्नुधा-त्विन्यारभ्य स्पष्टमित्यन्तो ग्रन्थः प्रक्षिप्तः प्रकृतासङ्गतेः । एवं विधेनाग्रिमग्रन्थेन पुनरुक्तेश्च । समासाभावस्येति । निपात एकाजनाङ्यादौ कर्मधारयदर्शनादयुक्त-मेतत् । नान्तरीयकतयेति । अन्तरा विना भवो ऽन्तरीयः । गहादित्वाच्छः । ततः स्वार्थिकः नशब्देन समासश्च । प्राधान्यादित्सञ्ज्ञाभवनक्रियायामुपदेश इत्यस्यान्व-यभ्रमवारणायाह । तत्र विद्यमानमिति । क्रियामात्रं कालोपाधिरिति मते उपदेश-शब्द आद्योच्चारणपरः । मतान्तरे लक्षणया तदधिकरणकालपरः । तेनैधादीनां धादेर्नेत्वं । उपदेशे ऽनन्त्यत्वात् प्रधानक्रियान्वये तु तद् दुर्वारम् । यद्यप्यधिकर-णसप्तम्यन्तस्य साक्षात्कर्तृकर्मणोरेवान्वयः तद्द्वारा क्रियान्वयइति वक्ष्यमाणस्व-सिद्धान्तरीत्या विद्यमान इत्यध्याहारो नात्रावश्यकः । अत एवाक्षेषु शौण्ड इत्यत्र प्राचां विद्यतिक्रियाध्याहारो नव्यैर्दूषयिष्यते तथाप्येधादेर्धस्येत्त्ववारणायाप्रधानान्त्य-विशेषणतया विद्यतिक्रियाध्याहारः फलः । न चैवं क्रियान्वयो ऽप्यस्य कर्त्राद्यन्व-यद्वारेणैवेति कारकप्रकरणस्थशेखरविरोधः साक्षादन्वयस्यैवात्र स्वीकारादिति वा-च्यम् । तस्याक्षशौण्डस्तिष्ठतीत्यादिविषयत्वात् । यत्र हि कर्तृकर्मविशेष्यतया क्रिया-भासं तत्र तद्द्वारैव सप्तम्यन्तस्य क्रियान्वयसम्भवे क्रियान्तराध्याहारो न युक्तः । साक्षादप्रधानक्रियायामन्वयश्चायुक्तः । अक्षशौण्डपदयोः समासानापत्तेः । यत्र तु कर्तृकर्मक्रिये तद्विशेषणे यथा कटे शेते देवदत्तः, स्थाल्यां पक्व ओदन इत्यादौ ।

तत्र तु साक्षादेव क्रियान्वयं । तत्र विद्यमानमन्त्यमित्यत्रापीत्थमेव । एवमक्षेषु शौण्डस्य यत्रास्मि याचावप्यन्याहृतविद्यातिक्रियायामेव सप्तम्यन्तार्थस्यान्वय इत्यलं प्रसक्तानुप्रसक्त्या । यद्यप्येधादेर्थकारादिरुपदेशे विद्यमानाकारस्येत्सञ्ज्ञोत्तरमन्त्यश्रेण्युक्त्याऽन्यायामप्येधादौ धन्येत्सञ्ज्ञा दुर्वारा । तथाप्यादे यद्यपि धनी देवदत्त इत्यादाविव धर्मिपारन्तन्त्र्येणोपदेशकालावच्छिन्नान्यत्वेपि भासते इति न कश्चिद्दोष । तेनेति । उपदेश इत्यस्येत्सञ्ज्ञाभवनक्रियायामन्वयं विहायान्यपदार्थान्वयिविद्यमानक्रियायामन्वयकरणेनेत्यर्थ । अन्यत्रान्त्विति । अहल्लोण्यदित्यादौ तत्पूर्वमपि हल्प्रत्याहारसिद्धिसम्भवादिति भाव । अन्तरङ्गत्वादिति । तेन न धातुलोप इति सूत्रस्थ धातुग्रहण किं लूञ् लवितेति भाष्य सङ्गच्छते । धातुसञ्ज्ञाया क्रियावाचकत्वज्ञानाधीनत्वेन बहिरङ्गत्वात् । सिद्धयुत्तरमिति । वर्णोपदेशकाले तदव्यवहितोत्तरकालेन हल्प्रत्याहारस्यासिद्धेरिति भाव । प्रायइति । मतिनादेर्नकारादभिप्रायेण प्राय पद । तत्रापि तवर्गान्तर्गतत्वेन निषेधविषयतासम्भावनया न विभक्ताविति वाक्यार्थबोधोत्तरमेव तत्रेत्सञ्ज्ञा । एव सुप पकारेऽपि विभक्तिघटकत्वेन निषेधविषयत्वमगत्यात् । तस्येतार्थवत्त्वादिति । तेनैवेति ॥ इदमयुक्तम् । सानुबन्धकेनानुबन्धान्तरनिर्मुक्तोपस्थितेरसम्भवात् । आर्धधातुकस्येडित्यादौ उपदेशोत्तरमेवेत्सञ्ज्ञालोपाभ्यामपहारे जश्त्वानापत्तेश्च । तस्माद्वाक्यार्थबोधोत्तरमेव विधेयत्वप्रतिपत्त्युत्तरमेवेत्सञ्ज्ञालोपौ । उपदेशोत्तरकाले इत्सञ्ज्ञेति भाष्यमप्येवमेव कथ चिन्तेयम् । अन्ये तूच्चारण परिनिष्ठितस्येवोच्चारणोत्तरमेव तदपहारेण काकस्येव न शब्दाद्बहिरेत्याहु । तदुपस्थाप्यएवेति । कीति चेत्यादौ तद्बोध्य इत्यर्थ इति भाव । तत्त्वाभावादिति । इद चिन्त्यम् अत्राऽपीत्सञ्ज्ञाप्रवृत्तौ बाधकाभावात् । 'चित सप्रक्तेर्बह्वकजर्थ" इति वार्तिकस्वारस्येन चितिप्रत्यय एव तत्प्रवृत्त्या न दोष इति तु वक्तुमुचितमिति केचित् । कुण्डिनचि चित्स्वरप्रवृत्तिरुचिबीजम् । भाष्योक्तमिति । इद च भाष्य अनुबन्धाना प्रयोगासमवायित्वात् प्रयोगासमवायिनश्चाग्रहणाद्ग्रहणकशास्त्रे पुनरप्रवृत्तिरित्यभिमानेन । नव्यमतेपीशि समुदायस्यैवार्थवत्त्वेन तदेकदेशे कारस्य निरर्थकत्वात् । अणुदित्सूत्राप्राप्ते न अत्र केचिदित्यारभ्याहुरित्यन्तो ग्रन्थोऽस्मत्कृतबृहच्छब्देन्दुशेखरनिरूपणाया निरूपित । विधाविति । इदमयुक्तम् । नविधौ पर शब्दार्थ इति न्यायविरोधात् । ञनित्यादिर्नित्यमित्यादेर्निर्बोध्यार्थकत्वेन सो भवतीत्यर्थेऽपि स्वरसि-

शोजनीयत्वात् । उदात्तत्वादीनां सावर्ण्यानुपयुक्तत्वं तूदात्तादिजनकयत्नस्येत्यादिना वक्ष्यमाणं द्रष्टव्यं। नन्वेवं ङादीनामपि स्वरूपोत्पत्तौ कण्ठाद्यवच्छिन्नवायुसंयोगस्यैव हेतुत्वं। तदगतानुनासिक्यजननेतु नासावच्छिन्नवायुसंयोगस्य हेतुत्वमिति कण्ठ्योरपि तुल्यस्थानत्वं नासिकाया आस्यान्तर्गतत्वेपि सुवचमिति तस्यास्तद्बहिर्भावोपपादनप्रयासो व्यर्थ इत्या-शङ्क्याह । ङादीनामिति । नन्वेवं शिक्षायां ङादीनां नासिकास्थानानुक्त्या न्यूनत्व-स्याशङ्कयाह । अनुस्वारेति । एतेन प्रथमदूषणं निराकृतं वेदितव्यम् । द्वितीयं निराचष्टे । कण्ठ्योस्त्विति । अतएव वाधेति । नासिकाया आस्यशब्देन तत्स्थप्रयत्नस्य च प्रयत्नशब्देनाग्रहणादेवेत्यर्थः । अन्येतु मुखनासिकावचन इति सूत्रे मुखनासिकया-वचनमस्य मुखनासिकावचनः । किमिदमावचनं । ईषद्वचनमावचनं । किञ्चिन्मुख-वचनं किंचिन्नासिकावचनमिति भाष्येण भागस्य मुखेनांशस्याग्रणाङ्गस्य नासिकयेति कैयटग्रंथेन च ङादीनां भागतो नासिकास्थानत्वं भागतो मुखस्थानत्वमिति पक्ष ऽवनिष्टते । मुखोपसंहिता वा नासिका वचनमस्य सोयं मुखनासिकावचनमिति भाष्येण मुखस्य नासिकायाश्चयदन्तरालं स्थानान्तरमेवानुनासिकस्येति दर्शयतीति कैयटेनच मुखनासिकयो रन्तरालं स्थानान्तरमेवेत्यपरः पक्षः । मुखद्वितीया वा नासिका वचनमस्येति भाष्येण यदातु सर्व एव वर्णो मुखेन नासिकया चोच्चार्यते इति कैयटेन च सर्वभागावच्छेदेन मुखेन नासिकयाचोत्पत्तिरिति तृतीयः पक्षः । त्रिष्वपि पक्षेषु नासिकानास्यान्तर्गतेति स्पष्टमेव । किञ्च मुखग्रहणं किमर्थं नासि-कावचनो ऽनुनासिक इत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत । अथ नासिकाग्रहणं किमर्थं मुखवचनो नुनासिक इत्युच्यमाने कचटतपानामेव प्रसज्येतेति भाष्येण नासिका नास्यान्तर्गतेति स्पष्टमेवोक्तं भवति । नासिकायान्तदन्तर्भूतत्वे नासिकास्था-नानां यमानुस्वाराणामपि मुखवचनत्वेन कचटतपानामिवेत्यत्राग्रणासङ्गतेः । प्रासाद-वासिन्यायेन मुखग्रहणखण्डनपरभाष्येण च नासिका नास्यान्तर्गता । मुखनासिका-वचनमिति सूत्रमपि नासिकाया आस्यवहिर्भावे समञ्जसम् । तथाच ! सानुनासिका-कारादीनां चोभयावच्छिन्नवायुसंयोगेनैव स्वरूपोत्पत्तिः । आनुनासिक्यं तूभयेषां धर्मः । इयाँस्तु विशेषः । अकारादीनामनुनासिक्यादयो न नियताः ङकारादी-नान्तु नियता इत्यनुस्मर्यमाणा चेति शिक्षायास्त्वेषां नासिकैवस्थानमित्यर्थः । गुणशब्दस्तु अप्रधान एव नत्वेव लोकप्रसिद्धः । सावर्ण्यानुपयुक्तत्वं तु नगुणशब्दार्थः

मानाभावात् एकोयमात्मोदक नाम । तस्य गुणभेदादन्यत्वं भवत्यन्यदिदमुष्णमिति भाष्यस्वारस्येन च गुणशब्दो धर्मपर इति लभ्यते । आन्तरतम्यपरीक्षोपयुक्तश्चेति विशेषणवैयर्थ्यं च । नच पृथक्पृथक् द्वयमद्वीत्तिनिमित्तत्वेपि तद्विवक्षितु शक्यम् । त्वन्मते आभ्यन्तरप्रयत्नानामपि गुणत्वापत्तेः । स्थानार्थगुणप्रमाणकृतमित्यभियुक्तोक्तौ प्रमाणस्य पृथक्करणं ब्राह्मणवसिष्ठन्यायेन । यद्वा पाणिनीयशिक्षाया यस्य यस्य वर्णस्य यत्स्थानमुक्तं तत्तदेवास्यशब्देन गृह्यते । पच्यमाना च नासिकास्थानानुक्तया न तस्यास्यशब्देन ग्रहणम् । अनुस्वारयमाना चेति । चशब्दो ऽवधारणे स च भिन्नक्रम । नासिकैव स्थानमित्यर्थ । तथाच यस्य वर्णस्य पाणिनीयशिक्षायामुक्तं स्थानं वर्णान्तरस्यापि तत्रोक्तं तद्द्वय परस्परं सवर्णसञ्ज्ञं भवतीति तुल्यास्यसूत्रार्थ । वलयोस्तु न सावर्ण्यम् । शिक्षोक्तकण्ठादिस्थानपर्याप्तस्थानताया एव सवर्णसञ्ज्ञोपयोगित्वात् । नचैवं कङयो सावर्ण्यानापत्ति । शिक्षान्तरे ङकारस्य नासिकास्थानत्वोक्तया कण्ठपर्याप्तस्थानत्वाभावादिति वाच्यम् । पाणिनीयशिक्षोक्ततत्तत्स्थानकत्वे सति तदुक्ततदितरस्थानराहित्यस्यैव तत्पर्याप्तस्थानकत्वशब्दार्थत्वेन विवक्षितत्वात् । शिक्षान्तरोक्तस्य च प्रायेणैतच्छास्त्रीयकार्यनिर्वाहानुपयुक्तत्वात् । अत एवाइउण्सूत्रे ऽकारस्य विवृतोपदेश कर्तव्य इति वार्तिकभाष्ये सङ्गच्छेते । अन्यथा शिक्षान्तरे अकारस्य विवृततरोक्तया तदसङ्गति स्पष्टैव । यावत्साम्य तु न तुल्यशब्दार्थ तेजसा सूर्यतुल्यो ब्राह्मण इत्यादौ यत्किंचित्साम्येपि तुल्यशब्दप्रयोगदर्शनात् । ऋलृवेतिसूत्रे उदोष्ठ्येतिसूत्रे च पर्याप्तिर्न विवक्षितेति अद्रुह्रि ब्रुरूपतीत्यादौ नदोष इत्याहु । समुदितमिति । तदेव स्थानत्वपर्याप्त्यधिकरणमित्यर्थ । तथा च न वलयो सावर्ण्यमित्यर्थ । प्रत्येकमिति । अत एवाग्नेय चतुर्धा करोतीत्यस्याग्नापोमीये ऽप्सूत्स्योमौ वा ऽविशेषादिति कात्यायनसूत्रस्याप्रामाण्य जैमिनिनोक्तम् । वस्तुतो देवतार्थकतद्धितस्यैन्द्राग्नादौ चतुर्धाकरणादिवारणाय तथा स्वभावाङ्गीकारेपि इतरतद्धिते तथा ऽनङ्गीकारात् । अत एव देवदत्तस्य तद्भार्यायाश्चापत्ये दैवदत्तिरित्यादिप्रयोगप्रतिज्ञाविरोधश्चेत्युक्तरीत्या ऽद्रुह्रि ब्रुरूपतीत्याद्यसिद्धिरिति दूषण द्रष्टव्यम् । नाज्झलाविति सूत्रेणेति । वस्तुतस्तूष्मणामीषद्विवृतत्वेपीषत्स्पृष्टलकारलभारयो सावर्ण्ये होत् कार इत्यत्र तोर्लीति परसवर्णापत्त्या तयोस्तदभावाय नाज्झलाविति सूत्रस्यावश्यकत्वात् । अधिकं नाज्झलाविति सूत्रे ऽग्र

स्कृतव्याख्यायां कौस्तुभप्रभायां बोध्यम् । स्पर्शेत्यादेः क्रमेण स्पृष्टेषत्स्पृष्टविवृत-संवृतव्याख्यानरूपत्वम् । ईषद्विवृतत्वं चेति । ईषत्स्पृष्टत्वमित्यर्थः । यणामिति । यणामीषत्स्पृष्टत्वे स्पृष्टत्वस्यापि व्यापकधर्मस्य सत्त्वेन यकारस्य चवर्गेण रेफस्य टवर्गेण सावर्ण्यापत्तिः तथाच स्थानांश इव प्रयत्नांशे ऽपि यावत्साम्यमेव विवक्षित-मिति भावः । अविवृतइति । ननु यकारगतानुनासिक्यस्य नासिकास्थानत्वेऽपि य-कारस्य तत्स्थानत्वाभावान्न तस्यानुस्वारेण स्थानत आन्तर्यम् । किन्तु अकारस्यैवेति स एव प्रवर्तते । अत एव भुङ्क्तेत्यत्र अकारः परसवर्णो नेति विवरणे उक्तमित्य-स्वेराह । आद्यादिति । तेन यरोनुनासिक इत्यत्र सवर्णग्रहणाकर्षेऽपि चतुर्मुख इत्यादौ णकारापत्तिर्न । प्रयत्नभेदादिति । ननु अनेनैव विवृतस्य संवृतादेशे तस्यासिद्ध-त्वेनोत्तरोप्यकारो विवृत एवेति दीर्घो दुर्वार इति चेन्न । अथ इति पृथङ्निर्दे-शेनोत्तराकारस्य मूलत एव संवृतत्वकल्पनात् । यत्वजश्त्वानुनासिकेष्विति । ननु यत्वे कृते जश्त्वमपवादत्वात् बाधित्वा ऽनुनासिकं चान्तरङ्गत्वाद्बाधित्वा भष्भावे न कश्चिद्दोष इत्यरुचेराह ॥ वस्तुतइति ॥ परत्वाज्जश्त्वेति ॥ न च क्षय इति यत्वं जश्त्वानुनासिकत्वयोरपवादः । तान्ते चरितार्थत्वात् । तत्र तसौ मत्वर्थे इत्यनेन भत्वाज्जश्त्वाद्यप्राप्तेः । इदमुपलक्षणमधिकारत्वाभावे गोमानित्यादौ तलो पाद्यापत्तेः । अतएवनमुनेइति । अतएव । वाक्यभेदेनान्वयादेव । तन्निषेधो ऽसिद्धत्वनिषेधः । एकवाक्यतया ऽन्वये तु अदसोमेरित्यादिना ऽसिद्धत्वविशिष्टस्य मुत्वस्य विधाने न मुने इत्यनेनापि तथाविधस्य मुत्वस्यैव निषेधव्यत्यनामुनेत्यत्र मुत्वानापत्तिः । असिद्धत्वस्य प्राधान्येनाविहितत्वेन तन्निषेधायोगात् । शास्त्रप्रवृ-त्ताविति । तेनाम्नी३इतीत्यत्र प्लुते प्रवृत्ते ऽपि तस्यासिद्धत्वात् प्रगृह्यसञ्ज्ञाप्रवृत्तिः । अन्तरङ्गत्वादिति । पूर्वत्रासिद्धनिमित्तकत्वादित्यर्थः । वस्तुतो ऽस्यान्तरङ्गशब्दार्थ-त्वाभावात् । उदाहरणाभावाच्चासङ्गतमेतत् । सपादसप्ताध्यायीस्थकार्यसम्भावनायां त्रिपादिकस्याप्रवृत्तेः । अग्नी इतीत्यादावपि ययोद्देश्यत्वाश्रयणेन प्लुतात्पूर्वमेव प्रगृह्यसञ्ज्ञा शास्त्रप्रवृत्तौ नियामकमिति । पूर्वोक्तं त्वणोप्रगृह्यस्येति सूत्रस्थवक्ष्यमा-णशेखरादिशेषपन्नम् । सोढोर्णमिति । सोचि लोपे द्विचेति सुलोपः । उद्गीणइति । ऊगता-विन्यस्योत्पूर्वस्य रूपम् । आत्मान्तः करणमिति । इदमसङ्गतं । आत्मपदस्य जीव-परत्वे बाधकाभावात् । इच्छयोपपन्नयेनेति । इच्छयासत्रो यत्नो यस्मिन्निति

विग्रह । तथा च विवक्षयेत्येतत् यत्नेनेत्येतस्याप्युपलक्षणमिति भाव । ततो यत्नविशेषेणेति । इदमेक एव यत्न कार्यजनको वर्णनाशकश्चेति परः सन्निकर्ष इति सूत्रस्थभाष्यविरुद्धम् । तस्मात्तेनैव यत्नेनेति वक्तुमुचितम् । औपाधिकभेदाभिप्रायेण वा कथञ्चिद्योज्यम् । वायुप्रेरणारूपमिति । अल्पवायुमहावायुप्रेरणारूपमित्यर्थ । अविवक्षेति । कार्यानुपयोगित्वमित्यर्थ । अतएवेति । पूर्वत्वाभावादेवेत्यर्थः । तथा च वर्गेष्वाद्याश्चत्वार एव यमा इति प्राचीनविवरण तत्सदृशार्थकतया योज्यमिति भाव । ननु गजा मज्ञामित्यादौ ङत्वं न स्यात् यमेन व्यवधानादिति चेन्न । अशरीर यम प्राहुरित्यादि वचनेन यमादीनामशरीरोक्त्या तद्व्यवधानस्याकिञ्चित्करत्वात् । अयोगवाहाइति । द्वितीयचतुर्थयमभिन्ना इत्यर्थ । जिह्वामूलीयइति । उपध्मानीयस्य स्थानकथनं तृपध्मानीयोपधास्योष्ठे जस्त्वेन बकारार्थ कथं चित्र्र-यतीति भाव । यमादीनामिति । आदिपदेनानुस्वारविसर्गौ अत्र यमानुस्वारयोर्नासिकास्थानकथनम् । अथ मुखग्रहणकिमर्थ नासिकावचनो ऽनुनासिक इतीयत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत इति भाष्योक्तादिशा मुखग्रहणव्यावृत्तिबोधनाय । आद्यन्तइति । रुड्‌कदेति कमप्रत्ययान्तो ऽदन्तस्ततष्टाप् । नित्यस्त्रीलिङ्गो ऽयम् । अन्तस्थाभिश्च सयुतामिति शिक्षावाक्यानुरोधादिति भाव । एतेन विश्वपाशब्दवदादन्तत्वे ईषन्मृष्टमन्तस्थानामिति निर्देशासगतिरित्यपास्तम् । स्पर्शोष्मणामिति । मातृकापेक्षयेदम् । नाज्झलावित्यादिनिर्देशेनेति । चश्चयो सावर्ण्याभावे हस्य स्थाने ऽक्षः पूर्वसवर्णो न स्यादिति भाव । अशक्यत्व स्यादिति । इदमयुक्तम् । अयोगवाहानां दीर्घादीनां सानुनासिकयलवाना तु सूक्ष्मतत्क्लकारस्येपरत्स्वद्लकारल्कारयोश्चासत्त्वापत्ते । अक्षरसमाम्नाये एषामनुपदिष्टत्वात् एओङ्सूत्रस्थमनुपदिष्ट सत्कथ विद्यात् ग्रहणमिति भाष्य तु वेदलोकसाधारण्येन सावर्ण्यानित्यत्वज्ञापकत्वायोगात् । न च स्थानेन्तरतमसूत्रेण निर्वाह । वकारस्य स्थाने लकारस्वरूपसम्प्रसारणापत्ते । तस्माल्कारस्य ऌकाराभावाय वर्णोपदेशे ऌकारपाठ इत्येव तत्त्वम् । एवमनुबन्धस्येति । गम्लृसृप्लृगतौ, एनृआनृदीप्तावित्यादौ । ओकारस्यौष्ठ्यत्वमिति । एतच्च प्रकृतानुपयुक्तत्वादुपेक्ष्यम् । एकारककारादीनामिति । अन्येत्वाकारहकारयोरादिपदेन ग्रहणमित्याहु । अनादिशब्दग्राह्य, चिन्त्यमिति केचित् । यजुष्येकेषामिति । निर्देशादिकारकारयो र्न सावर्ण्यम् । नन्वकारहकारयो सावर्ण्ये शिवो ऽर्च्य

इत्यादौ हशिचेत्येवसिद्धे ऽतोरोरिति व्यर्थं तस्मात्तयोस्तन्त्रेत्याशङ्क्याह । हशिचे- त्येवेति । तथा च अकारहकारयोरपि सवर्णसंज्ञासत्त्वादाकारे परतो ऽपि हशि चेत्युत्वे प्राप्ते ह्रस्वाकार एवेति नियमार्थमतो रोरिति सूत्रमिति भावः । अतएवभाष्यइति । आकारप्रश्लेषादेवेत्यर्थः । अणमुद्दिश्येति । तेन संज्ञायाः संज्ञिनः पूर्वमुच्चारणं न दोषाय । तस्या एवोद्देश्यत्वादिति सूचितं भवति । एतत्परिभाषाज्ञापकमिति । स्थाली- पुलाकन्यायेनैकदेशानुमत्येति बोध्यम् । दूषणान्तरं चाह । जातिपक्षेइति । अप्रत्यय- इत्यस्याविधीयमानार्थकत्वे तु जातिपक्षप्राप्तस्य निषेधो न स्यात् अनन्तरस्येति न्यायात् तस्य पर्युदासत्वाच्चेति भावः । परात्स्तमिति । तथा चाणुदित्सूत्रे च:णग्रहणमेव कार्यम् हयवरट्सूत्रस्थमय किमर्थमन्तस्थानामणसूपदेशः क्रियत इति भाष्यं त्वेकदे- श्युक्तिरिति भावः । सवर्णस्य चेति । चकारादसवर्णस्यापीत्यर्थःस्यादित्यत आह । चोभिन्नक्रम इति । ग्राहकसूत्र एवेति । एतन्नियमपरं तपरसूत्रेपि बोध्यम् । इति तुनयुक्तमिति । तपरसूत्रे ऽणुपदानुवृत्तौ तु युक्तमेवैतत् । अत्र परेणाणग्रहणे उरदिति तपरकरणं भाष्योक्तमपिज्ञापकं बोध्यम् । तदुपपादनप्रकारस्तु कौस्तुभप्रभायां बोध्यः । नप्राप्नोतीति । अत्र हेतुर्व्यक्तिपक्षे तत्रत्यात्रत्यव्यक्त्योर्भेदेनेत्येतावानेव चारिताथ्र्येनेत्यन्तस्तु अणग्रहणसार्थक्यप्रदर्शनपरः । नन्वाद्यवर्णस्युरणित्यादौ कथं ग्रहणकशास्त्रप्रवृत्तिः । व्यक्तिपक्षे पाणिन्युच्चारितस्याक्षरसमाम्नायस्याभेदादित्यत आह । णकारादिचिन्हेनेति । नन्वादिरन्त्येनेत्यत्र सहग्रहणात्समुदायस्यैव संज्ञात्वं तथाचाणित्यत्राकारस्य निरर्थकत्वात्कथं तत्राणुदित्सूत्रप्रवृत्तिरित्यत आह । तद्घत्येति । ननूपस्थितस्यानुच्चारितत्वात्कथं प्रत्यायकत्वमत आह । उच्चारिताभेदेनेति । नन्वेवं च णकारादिचिन्हेनेति पूर्वग्रन्थो ऽसंगतः । अणपदेन वर्णसमाम्नायस्थानामेवोपस्थितेः । आद्यवर्णोपस्थितेरिति तु असङ्गतमनुपयुक्तं च । तस्य निरर्थकत्वेनानुपस्थापक- त्वादिति चेन्न । प्रत्याहाराद्यवर्णे णकारादिचिन्हेनाक्षरसमाम्नायस्याभेदग्रहणं विनो- च्चारिताद्यवर्णाभेदेनाक्षरसमाम्नायस्थस्य ग्रहणासंभव इत्याशयात् । प्रकृतेइति । अस्य त्वाविल्यादौ दूषणान्तरं चाह । प्रत्याहारवत्केति । तत्र हेतुमाह । उच्चारित- स्यैवेति । अणग्रहणं चेति । चेन नाज्झलाविति सूत्रसंग्रहः । ननु ऋलृवर्णयोः सावर्ण्येपि ऋकारेण न लृकारग्रहणं विभिन्नजातित्वात्सावर्ण्यं तु हातृ लृकार इत्य- त्राकःसवर्णे दीर्घार्थं स्यादित्याशङ्क्याह । ऋलृवर्णयोरिति । ननु समानजातित्वादेवे

सावर्ण्याभावाद्दोर्वृल्कार इत्यत्र सवर्णदीर्घो न स्यादित्यत आह । एतद्व्यतिरिक्तेति ।
तथा च सावर्ण्यमपि समानजातित्वाव्यापकत्वात्समानजातित्वातिदेशेनैवातिदिष्टमिति
भाव । ननु ऋलृवर्णयो सावर्ण्यस्याविधानेन पृथगनुबन्धकरणेन कल्यानित्यत्व
ज्ञाप्यमित्यत आह । पृथगिति । अत्र पक्षे इति पाठ । व्यक्तिपक्षे इति तु अपपाठ ।
अनन्वयात् । तस्यसर्वस्येति । सयोगान्तलोपादे । शब्दबोध्योवर्णइति । इदम-
युक्तमुच्चारितस्यैव प्रत्यायकत्वात् । इण्प्रत्याहारे प्लुतैचो ऽघटकत्वापत्तौ तत्र परत्व
पन्वानापत्तेश्च । भाष्यप्रामाण्यात्तत्परकरणाच्च तात्परशब्द स्वबोध्यसमकालग्राहक
इति तूचितम् । सल्प्रत्याहारव्यवहारस्येति । इदमयुक्तम् । आकडाराधिकारादन्यत्र
सज्ञयोर्बाध्यबाधकभावाभावात् । न च स्वतो विरोधरहितयोस्तदबहिर्भूतयोर्बाध्यबा-
धकभावेपि स्वतो विरुद्धयोस्तदबहिर्भूतयोरपि सो ऽस्त्येवेति वाच्यम् । सङ्कोचे
मानाभावात् । किञ्च तपर षण्णा सञ्ज्ञा अण् त्वष्टादशाना सञ्ज्ञेत्युक्तधा स-
वर्णग्राहकत्वतात्कालिकसवर्णग्राहकत्वयोरविरोधेन च विप्रतिषेधशास्त्राप्रवृत्ति ।
एतेन गुणानामभेदकत्वे त्वनवकाशत्वाद्बाध इत्यग्रिमग्रन्थो ऽप्यपास्त । तस्माद-
णुग्रहणानुवृत्त्या नियमार्थ एवाय युक्त । गोतो णिदित्यादौ तु तकारोच्चारणसाम-
र्थ्यादुकारो ऽविवक्षितः । सिद्धान्तपक्षेपीति । इद गुणानामभेदकत्वे त्वनवकाश-
त्वाद्बाध इति पूर्वग्रन्थेन विरुद्धम् । तत्र विधित्वमङ्गीकृत्यानवकाशत्वाद्बाधोक्ते ।
पञ्चमीसमासाभावेति । ऐऔच् ऐऔजिति सूत्रे किं दकारे प्रयोजन अथ किन्त-
कारे पयसन्देहार्थस्तकारे दकारोपीति भाष्यस्य पञ्चमीसमासतदभाववादिपरतया
कैयटेन योजितत्वात्तदनुसारेणेद नतु पञ्चमीसमासस्य पाक्षिकत्वाभिप्रायेण ।
धकारस्थानिकइति । इदमप्ययुक्तम् । दकारपक्षे पञ्चमीसमासानाश्रयणेनादोषात् ।
त्रिमात्रचतुर्मात्रव्यावृत्तय इति युक्त पाठ । अन्यत्र विस्तर इति ।
मञ्जूषादौ विस्तर इत्यर्थ । वस्तुतस्तु पदपदार्थयोस्तादात्म्यमयुक्तम् । वन्हिरि-
त्युक्ते मुखे दाहापत्ते । न च भेदाभेदयोरङ्गीकारेणोक्तदोषनिस्तार । भेद-
मात्राङ्गीकारेणोक्तदोषनिरसनोपपत्तौ अभेदाङ्गीकारे मानाभावात् । रामेति द्व्यक्षर
नामेति लक्षणया ऽर्थपर । आदैचो वृद्धिपदाभिन्ना इति वाक्यार्थ इत्यप्ययुक्तम्
तथा सति शक्तिग्राहकत्वानुपपत्तेः । अभेदस्य त्वया ससर्गत्वानङ्गीकाराच्च । तत्प-
दाभिन्नत्वेन तच्छक्यत्वानुमानात् । परम्परया शक्तिग्राहकत्वमित्यपि न । वृद्धिप-

दाभेदस्तद्वाच्यत्वयोः सहचारग्राहकमानाभावात् । तयोर्व्याप्तिग्रहासंभवात् । वृद्धिसूत्रे भाष्ये साक्षात्संज्ञासंज्ञिभावस्यैव वाक्यार्थत्वोक्तेश्च । तद्भाष्यं चोपपादयिष्यामः । तस्मादादैचो वृद्धिपदवाच्या इत्येव वाक्यार्थः । आदैचां वृद्धिपदस्य च वाच्यवाचकभावस्य संसर्गमर्यादया भानाङ्गीकारात् । न च समानविभक्तिकनामार्थयोरभेदेनैवान्वय इति व्युत्पत्तिभङ्गः । प्रतीतपदार्थकतदर्थयोरभेदान्वयः । अप्रतीतपदार्थकतदर्थयोस्तु वाच्यवाचकभावेनान्वय इति व्युत्पत्त्यङ्गीकारात् । तदुक्तं भाष्ये । इदं खल्वपि भूयः सामानाधिकरण्यं एकविभक्तिकत्वं च द्वयोश्चैतद्भवति कयोर्विशेषणविशेष्ययो र्वा सञ्ज्ञासञ्ज्ञिनोर्वा तत्रैतत्स्याद्विशेषणविशेष्य इति तच्च न द्वयोर्हि प्रतीतपदार्थकयोर्विशेष्यविशेषणभावो भवति । नचादैच्छब्दः प्रतीतपदार्थकः तस्मात्सञ्ज्ञासञ्ज्ञिनावेवेति । वाच्यवाचकत्वे ऽपीति । सर्वार्थवाचकत्वे पीति । सर्वस्य शब्दस्य सर्वत्रार्थे सङ्केतयितुमशक्यत्वादिति भावः । सामान्यतस्तथा ज्ञानमिति । घटशब्दो जातिमद्वाचकः शब्दार्थस्य वाचक इत्येवं रूपेण शक्तिग्रहेपि घटपदेन घटत्वविशिष्टार्थबोधात् । प्रकरणादिति । प्रकरणस्य स्वविषयविषयकशाब्दबोधे हेतुत्वादन्यार्थग्रहणमर्थसिद्धम् । अतएवप्यङ्गेति । संपूर्णसञ्ज्ञाशास्त्रोपस्थितेरेवेत्यर्थः । एतेनेति । उक्तभाष्यविरोधेनेत्यर्थः । भूवादयोधातवः । कालसंबन्धाभावेनेति । तथाच कालपरिच्छिन्नत्वं क्रियात्वं तच्च साक्षात् क्रियायामेवेति कालः परिमाणिनेति प्राचीनग्रन्थेषु स्फुटम् । एतेन न तावद्धात्वर्थत्वं क्रियात्वं क्रियावाचित्वं ज्ञाते सति धातुत्वज्ञानं धातुवाच्यत्वे च क्रियात्व ज्ञानमित्यन्योन्याश्रयात् । नापि लिङ्गसङ्ख्याकारकानन्वयि तत् । निपातसंज्ञकवाशब्दार्थेपि तत्सत्वेनोक्तदोषानिस्तारात् । नापि साध्यतया प्रतीयमानत्वं तत् । धात्वर्थे तथात्वस्य निपातार्थे तदभावस्य च शपथैकनिर्णेयत्वादित्यपास्तम् । साध्यत्वेन प्रतीयमानत्वस्यापि धात्वर्थमात्रवृत्तित्वसमर्थनसंभवाच्च । अभिव्याप्येति । आङोध्याहार इति भावः । विप्रादिवदकेति । विपूर्वात्प्रापूरण इत्यस्मात्कर्तरि के रूपमिति भावः । इत्यर्थबोधनायेति । अयं भावः । क्रियेति लुप्ततृतीयान्तम् । योग इति । पदान्तरस्याध्याहारः स्तोत्सुनेत्यादिवत् । सूत्रस्थं योगपदं च अश्रावयनन्तं प्रान्वयि धात्वर्थपरं त्वियसप्तम्यन्तम् । तथा च क्रियया युक्ताः प्रादयः स्वान्वयिक्रियाविषये क्रियावाचकं प्रति उपसर्गसञ्ज्ञका इति । विगताः सेचका इति पाठः । अभेदविवक्षेति । इदं

प्राचामनुरोधेन स्वमते तदभावस्य वक्ष्यमाणत्वात् । सान्तग्रहणइति । निरन्तपता-विन्यादौ । यत्तुरुत्वमसिद्धमिति । इदमयुक्तम् । इणुनिष्ठायामितिसूत्रस्थभाष्य-विरोधात् । तथा हि । इडित्यनुवर्तमाने पुनरिड्ग्रहण किमर्थं नित्यार्थमारम्भ । नैतदस्ति प्रयोजनम् सिद्धात्र विभाषा निर कुष इत्यनेन । तत्रारम्भसामर्थ्यान्नित्यो विधिर्भविष्यति नात्र पूर्वेण विभाषा प्राप्नोति किं कारण यस्य विभाषेति प्रतिषे-धात् । तत्रारम्भसामर्थ्याद्विभाषा लभ्येत । पुन पुनरिड्ग्रहणादिड्वेति । इणुनिष्ठायां तत्र यदुपाधेर्विभाषा तदुपाधे प्रतिषेध इति भाष्यकृता सिद्धान्तितत्वात् । निर कुषो निष्ठाया यस्य विभाषेति प्रतिषेधेपि निम कुषो निष्ठाया इट्संभवेन निष्कुषित निष्कु-ष्टमिति रूपद्वयस्य सिद्धौ नात्र पूर्वेण विभाषा प्राप्नोतीति भाष्यासङ्गते । इड्ग्रहणे क्रि-यमाणे प्युक्तरीत्येड्विकल्पावस्त्या पुनरिड्ग्रहणादिड्वेति भाष्यासङ्गतिश्च । उक्तरीत्या वि-कल्पप्राप्तावीणुनिष्ठायामिति सूत्रवैयर्थ्यं च । तस्मादिणुनिष्ठायामिति सूत्रारम्भसामर्थ्या-दुक्तभाष्यप्रामाण्याच्च यत्र रुत्वस्यासिद्धत्व सिद्धत्व वा तत्र सर्वत्र रान्तग्रहणे सान्तग्रहण व्यर्थमेवेत्युक्त तद्वैयर्थ्यं स्पष्टमेवेति । ननु रेफान्तदुपूर्वकात्स्थाधातो क्तप्रत्यये षत्वाभावघटितप्रयोगवारणाय सुषामादिषु दुष्टुशब्दपाठ इति चेन्न । अपसुदु पु-स्थ इति न्यासे रेफान्तस्य रो सुपीति नियमेन विसर्गाप्राप्त्या सान्तपूर्वकात्स्थाधा-तोरेव क्तप्रत्ययविधानेनादोषात् । श्रुतक्रमानुरोधादिति । यद्यपि शब्दस्य विरम्य-व्यापाराभावस्तथापि शाब्दबोधोत्तरकालिको बोद्धॄणा प्रतिपत्तिक्रमो ऽयमित्यदोष । व्यक्तिपक्षे तु लक्ष्यभेदेन लक्षणभेदात्कचित्किंचिल्लक्षणं विधिमुखेन प्रवर्तते इती-ष्टसिद्ध्या सूत्र न कर्तव्यमिति कैयटोक्तमयुक्तमित्यभिप्रेत्याह । जातिव्यक्तिपक्षयो-रुभयोरपीति । स्व रूप शब्दस्य । कल्पितान्वयव्यतिरेकेति । पदस्याखण्डत्वेन तत्र प्रकृतिप्रत्ययान्वयव्यतिरेकौ कल्पिताविति भाव । ई हल्यघोरिति । नात्र श-ब्दस्य रूपग्रहणमस्भव । तस्याकारासम्भवात् । प्रकारतयाभासमानस्येति । न सो ऽस्ति प्रत्ययो लोके य शब्दानुगमादृते, इत्यभियुक्तोक्त्या ग्रन्थे शाब्दबोधे शब्दस्वरूपस्य प्रकारतया भानाभ्युपगमात् । येन विधि । । सर्वसमतत्वादिति । उपलक्षणमेतत् । विधिरित्यस्यानन्वयापत्ते । । अचाघातोर्यतविधत्तइति । अत्र चैत्रमसमशीलो धातु सग्राममसमशीलश्च स्येन इत्यादिसमशीलो ऽच् सेना-पतिसमशीलश्चाचार्य हन्त्यथादिभिर्विधत्त इत्यत्र सेनापति कर्ता । तत्र

यथा चैत्रस्य सङ्ग्रामोत्पत्तौ हस्त्यश्वादयः करणमेवं धातो यदुत्पत्तावच् करणम् । यत्र धातावन्ते ऽच् तत्रेव यत उत्पत्तेः । भाष्ये उदाहरणान्तरं च देवदत्तस्य समापः शरावैरोदनेन च यज्ञदत्तः प्रतिविभक्त इति । अन्येन चान्यस्येत्यस्याचा धातो विधिरित्यर्थः । नन्वन्येन चान्यस्येत्यनेन कार्यसंबन्धिभिन्नस्यैव करणत्वसूचनेपि यस्मिन्परतः कार्यं तस्याकरणत्वं कथं दर्शितम् । नचान्यस्येति संबन्धसामान्यषष्ठ्या धातुप्रातिपदिकयोः पञ्चम्यन्तार्थयोरिव सप्तम्यन्तार्थस्यापि संग्रह इति वाच्यम् । अन्यस्येत्यस्योद्देश्यत्वार्थकषष्ठ्यन्तत्वेन प्रत्ययविधौ पञ्चम्यन्तार्थस्योद्देश्यत्वेन तेन तस्य संग्रहेपि सप्तम्यन्तार्थस्या ऽसंग्रहादित्यत आह । अन्यस्मिन्नित्यस्यापीति । ननु सप्तम्यन्तार्थस्याकरणत्वे एतदपवादो यस्मिन्विधिरित्यपि सप्तम्यन्ते न प्रवर्त्तेतेति चेन्न । सप्तम्यन्तं विना तस्याविषयाभावात । साक्षात्कार्यनिमित्तस्य विशेष्यस्यैवाकरणबोधनाच्च । अन्ये तु विधिरिति कर्मणि किः तदन्तस्येति संबन्धिन उपादानात्तस्येत्यध्याहारः । तथाचायं सूत्रार्थः । यत्संबन्धी योविधिर्यत्कार्यं यत्कारणकं तदन्तस्य तस्य बोध्यमिति । अचो यदिति धातुसंबन्धी यद्विधिरच्करणक इति तदन्तस्य धातोः संबन्धी स बोध्यः । तदन्तस्येति । संबन्धसामान्येपष्ठ्यन्तमिति । प्रत्ययविधौ प्रकृतेरादेशविधौ स्थानिन आगमविधावागमिनःसंग्रहः । तथा च देवदत्तस्य समापं शरावैरोदनेन च यथा यज्ञदत्तः प्रतिविभक्तः । यथा धातोर्यतमचा शास्त्रं विधत्ते । इकोयणित्यादौ तु न तदन्तविधिः यत्संबन्धी विधिर्यत्करणकः स तदन्तस्य तस्येत्यनेन कार्यसंबन्धिभिन्ने करण एव तदन्तविधिप्रवृत्तेस्तदभावात् । इदं च कार्यसंबन्धिनो व्यधिकरणविशेषणे करणे न प्रवर्तते । कार्यसंबन्धिनः करणत्वासंभवात् । एवं यत्र कार्यसंबन्धिनि समानाधिकरणत्वमसंभवि । तत्रापि न तदन्तविधिः । एवं च तदन्तस्येत्युक्तिबलात् समानाधिकरणविशेषणरूपमेव करणं पर्यवस्यति । तयोरकरणत्वं दर्शितमिति मूलोक्तं तु न युक्तम् । इक इत्यनेनानिको ऽचीत्यनेन हल्परकेकश्च व्यावृत्तिकरणत्वसंभवात् । तत्रान्तरङ्गत्वात्समानाधिकरणमेवेत्यपि न । शब्दतो विशेषणमित्युक्तौ ह्यन्तरङ्गत्वात्समानाधिकरण एवेति कथञ्चिल्लभ्येत । येनेति शब्देन हि करणमेवात्रोपात्तम् । अन्तरङ्गत्वमपि । अन्तरङ्गत्वं च यत्र द्वयोर्ग्रहणासंभवः । किन्त्वन्यतरस्यैव तत्र ह्यन्यतरस्य ग्रहणे नियामकं प्रकृते तु द्वयो

रपि ग्रहणसम्भवेनान्तरङ्गत्वनियामकसकृदुच्चारितशब्दस्यैकार्थकत्वे ऽपि प्रतिलक्ष्य तस्य प्रवृत्ते । समानाधिकरणत्वे प्रायेण तदन्तविध्युत्तरकालिकसम्भावनासमधिगम्यत्वाविशेषणत्वस्याचो यदित्यादेरनेकास्वपि प्रवृत्ते । तदन्तत्वसम्बन्धित्वञ्चात्र परम्परयापि बोध्यम् । तेनोनश्च प्रत्ययादित्यत्र हेरेव साक्षात्कार्यसम्बन्धित्वे ऽप्यङ्गस्य परम्परया तथात्वान्न दोष । एव तथा विशेषणत्वयोग्यतापीत्यसङ्गतम् । समानाधिकरणविशेषणत्वस्य तदन्तविधिप्रयोजकताया सूत्राक्षरास्पर्शत्वादिति दिगित्याहु । तस्य चेति पाठ्यमिति । ननु व्यपदेशिवद्भावेन सिद्धेरिदं व्यर्थमिति चेन्न । वनो रच, रोणीत्यादौ व्यपदेशिवद्भावाप्रवृत्ते । व्यपदेशिवद्भावो ऽप्रातिपदिकेनेति निषेधात् । गृह्यमाणप्रातिपदिकेनेति । ननु किमिदं गृह्यमाणत्वम् । न तावदानुपूर्वीविशेषरूपेणोपादीयमानत्वम् । ऋत्यन्धकवृष्णिकुरुभ्यश्च, वृद्धाच्छ, स्तत्र जनपदतदवध्योश्च, द्विगोश्चेत्यादौ तदन्तविधिनिषेधानापत्ते नापि यथाकथञ्चिदुपादीयमानत्वम् । उगिद्वर्णग्रहणेष्वपि निषेधापत्ते । नाप्युगिद्वर्णग्रहणभिन्नत्वम् । उगिद्वर्णे इति त्वेकदेशानुवाद इत्युत्तरग्रन्थासङ्गतेरिति चेन्न । प्रातिपदिकत्वव्याप्यधर्मपुरस्कारेणोपादीयमानत्वमित्यर्थेनादोषात् । प्रत्ययग्रहणेति । सोऽप्येतन्मूल इति भाव । वाचनिक स इत्यन्ये । विरामो वसान । वर्णानां नित्यत्वादभावासम्भवादाह । उच्चारणेति । वर्णवदिति । यावद् ब्रह्म विष्ठितं तावती वागिति श्रुत्या वर्णानां सर्वदेशकालवृत्तित्वेन दैशिककालिकक्रियासम्भवादिति भाव । पर सन्निकर्षइति । वर्णाद्वर्णान्तरोच्चारणे ऽर्धमात्राकालव्यवायस्य नित्यत्वेन तदधिककालव्यवायराहित्यमेव पर सन्निकर्ष इत्यभिप्रेत्याह । स्वभावसिद्धेति । संहिताधिकारइति । तयोर्यानचि संहितायामित्यधिकार इत्यर्थ । विषयभेदेइति । इदमयुक्तम् । तदुद्देश्यतावच्छेदकव्याप्योद्देश्यतावच्छेदकत्वं बाधकत्वे तन्त्रम् । तदुद्देश्यतावच्छेदकव्यापकोद्देश्यतावच्छेदकत्वं च बाध्यत्वे तन्त्रम् । यथा द्वितीयैकाच द्विर्वचनमुद्देश्यतावच्छेदकमजादिधातुत्वमप्रथमैकाच द्विर्वचनोद्देश्यतावच्छेदक धातुत्वमात्रम् । न च तथा प्रकृते ऽवसानसंज्ञोद्देश्यतावच्छेदक वर्णोच्चारणाभावत्व संहितासंज्ञोद्देश्यतावच्छेदकत्व तु वर्णयोरर्धमात्राधिककालव्यवधानराहित्यमिति कथमनयोर्बाध्यबाधकभाव । किञ्चास्तु संज्ञाभिन्नस्थले यथातथा भूतयोरपि बाध्यबाधकभाव संज्ञयोस्त्वेकसंज्ञिकत्वे एव बाधकत्वम् । अत एव गजपुष्प इत्यादौ समुद्रायगतभसञ्ज्ञा

राजन्शब्दे परत्ववाधो न । अत एवोत्तरपदत्वे चेति वार्तिकप्रत्याख्यानावसरे ऽजादिस्वादिषु पूर्वं भसञ्ज्ञं भवत्येतद्वटकं यदस्ति तदपि भसञ्ज्ञकमित्याकरे उक्तम् । किञ्चाऽशब्दात्संबुद्धौ वाक्यैकदेशे वाक्यप्रयोग इति न्यायेन प्रयुज्यमाने ऽवसानसञ्ज्ञा चरितार्था । एकवर्णात्मकत्वेन वर्णद्वयासत्त्वेन संहितासञ्ज्ञाया अप्रवृत्तेः । तत्रावसानसञ्ज्ञाफलं त्वणोप्रगृह्यस्येत्यनुनासिकप्रवृत्तिरिति दिक् । स्वशास्त्रसञ्ज्ञामात्रेति । इदमप्ययुक्तम् । एवं सति गुरुलघुसञ्ज्ञयोरपि वाध्यवाध कभावानापत्तेः । तयोरपि तच्छन्दशास्त्रादिप्रसिद्धत्वेन लोकविदितत्वात् । नचेष्टापत्तिः । वन्धुशब्दस्य शब्दान्तरेण द्वन्द्वे लघ्वक्षरं पूर्वमिति पूर्वनिपातस्याचिक्षणादित्यादौ दीर्घो लघोरिति दीर्घस्य चानापत्तेरिति दिक् । सुप्तिङन्तं । सुपः पकारेणेति । न तु टापः कपो वा पकारेणेत्यर्थः । आक्षिप्तस्येति । शब्दादुपस्थितस्यैव शाब्दबोधे ऽन्वयात् । अन्यथा घटमानयेत्युक्ते समवायसंबन्धेन घटशब्दसंबन्धितयोपस्थितस्या काशस्य शाब्दबोधे ऽन्वयापत्तेः । द्वारमित्यादौ तु पिधेहीति शब्दस्यैवाऽध्याहारः । नन्वेवं ल्यब्लोपेत्यस्य निर्विषयत्वम् । अन्विताभिधानवादाङ्गीकारात् । स्पष्टं चेदं सर्वादीनि सर्वनामानीति सूत्रे भाष्ये, तथाहि नेदं सञ्ज्ञाकरणं पाठविशेषणमिदं स- र्वेषां यानि नामानि तानि सर्वादीनि सञ्ज्ञोपसर्जनेति विशेषणे ऽवतिष्ठते । यद्येवं सञ्ज्ञाश्रयं यत्कार्यं तन्न सिध्यति सर्वनाम्नः स्मै अन्वर्थग्रहणं तत्र विज्ञास्यते सर्वेषां यन्नाम तस्मादुत्तरस्य ङेः स्मै इति । यद्येवं सकलं कृत्स्नं जगदित्यत्रापि प्राप्नोति । एतेषां च शब्दानामेकैकस्य स स विषय इति कैयटश्चैतेषां चापीति । ततश्च सर्वस्मिन्नोदन इत्यादौ ओदनशब्दस्यापि सर्वनामकार्यं प्राप्नोति सामाना- धिकरण्यादनयोरिति । गौरी ब्राह्मणितरेति । नेदं परिनिष्ठितं किन्तु ह्रस्वापा- दनाय कल्पितमलौकिकमेव परिनिष्ठितत्वे गौरीशब्दे पुंवद्भावापत्तेः । ननु घसञ्ज्ञा- यां तदन्तविध्यभावेपि प्रदेशेषु तदन्तविधौ पुनरुक्तदोषतादवस्थ्यमित्याशङ्क्याह । एतन्निषेधेति । इदमप्ययुक्तम् । सञ्ज्ञाविधौ तदन्तविध्यभावे घरूपेत्यत्रापि न तदन्तविधिः । ह्रृद्वयस्य ह्र्लेरवेत्यत्राणग्रहणेन सप्तम्यन्ते प्रत्ययग्रहणे तदन्तविध्य- भावज्ञापनात् । सञ्ज्ञाविधौ तदन्तविधौ तु घरूपेत्यत्र पुनस्तदन्तविधिर्दुर्वारः । सप्तम्यन्तप्रत्ययग्रहणाभावेनोक्तनिषेधाप्रवृत्तेः । किञ्च प्रगृह्यत्वस्य प्रत्ययाप्रत्ययसा- धारणतया प्रदेशे तदन्तविध्यभावेनदूदेद्द्विवचनमित्यादौ सञ्ज्ञाविधाविति नि-

पेधश्वारितार्थ इति क्व सामर्थ्यमित्येपा दिक् । इत्याद्यनुवृत्तेरिति । यद्यपि तदन्ताशास्त्रावापि प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादीत्युपतिष्ठत इति परिभाषाबलेनापि पदसमुदायस्य पदत्वं वारयितुं शक्यम् । तथाप्यनुवृत्त्या ऽपि निर्वाहप्रदर्शनपरमेतत् । सर्वस्य द्वे इति सूत्रे कैयटे ऽप्येवमेवोक्तम् । ननु इयानि यत्रैकदेशविकृतन्यायेन स्थानिवद्भावेन वा प्रातिपदिकत्वं सुलभमत आह । अतएवेति । इदं सर्वमयुक्तम् । प्रकृतिसत्त्वघटितस्य यस्माद्विहितस्तदादित्वस्य व्यपदेशिवद्भावासाध्यत्वात् । अवयवस्तदव्याप्यान्तत्वादित्वव्यवहारमात्रस्य तदतिदेशसाध्यत्वात् । अत एवासिद्धवत्सूत्रे भाष्ये प्रश्नतष्य शत इत्यादावल्लोपस्यासिद्धत्वादयादेशाभावमाशङ्क्य व्याश्रयत्वेन समाहितम् । त्वद्रीत्या त्वसिद्धत्वेपि स्वात्मगतलघुपूर्वत्वमादायायादेशसिद्ध्या तदसङ्गतिः । अत एव च हरिशब्देनादन्तत्वम् । नन्वेवं पूर्वादिनि सपूर्वाच्चेति सिद्धे योगविभागो व्यपदेशिवद्भावो ऽप्रातिपदिकेनेति परिभाषाज्ञापनार्थ इत्याकरासङ्गतिरिति चेन्न । सपूर्वादिति पूर्वशब्दस्य पूर्वावयववाचित्वात् सपूर्वादित्यस्य प्रातिपदिकविशेषणत्वात् । एवं मेकगोपूर्वादित्यत्रापि । पूर्वादित्यस्य सामर्थ्यात्पूर्वान्तादित्यर्थः । अन्यथा व्यस्ते ऽप्यापत्तेः । इयन्मात्रमित्यादौ त्वन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति न्यायेन यस्येति लोपं बाधित्वा पूर्वं मात्रच् प्रत्ययस्ततो लोप इति न कश्चिद्दोषः । एवमस्यापत्यमिरेयुवापत्यमायान इत्यादौ यञिञोश्चेति फक् सिद्धिरपि बोध्या । नन्वस्य मात्रच फकश्चान्तरङ्गनिमित्तविनाशकलक्ष्यप्रयोजकत्वाभाव इति चेत्सत्यम् । प्रक्रियायामुपसर्गसमानाकार इत्येतद्व्याख्यावसरे यस्माद्विहित इत्यनेनाधिकव्यावृत्तिरेव न तु न्यूनव्यावृत्तिरिति शेखरोक्तस्यदिगोक्तस्थलेपु दोषाभावात् । नन्वेवं हरिष्वित्यादौ सो पदत्वापत्तिः । हलि सर्वेषामिति निर्देशेन सात्पदाद्योरित्यत्र सातिग्रहणेन चाधिकस्य यस्माद्विहितस्तदादेः सग्रहसम्भवे न्यूनस्यापि व्यावृत्तिकल्पनात् । सुमनायत इत्यादौ [illegible] एथकरणेन स्वादे क्यङ् प्रकृतिघटकत्वासम्भवादधिकस्य सङ्ग्राह्यत्वासम्भवेन न्यूनव्यावृत्त्यभाव । एतेन व्यतिम इत्यादौ निर्दृतिह इति निरातो व्याख्यातः । असे इत्यस्य स्थाने से इत्यादेशकल्पनाद्वा ऽर्थवत एवादेशत्वाद्भावस्यानर्थकत्वेनादेशत्वासम्भवात् । हरिष्वित्यादावेकस्मिन्नित्यस्याभावेपि सो- पदत्वमुक्तरीत्या वारयितुं शक्यमित्येकस्मिन्निति व्यर्थमिति चेन्न । सभामन्त्रयनशब्दस्य वृद्धत्वाभावाय

दरिद्रातेरिवर्णान्तत्वाभावाय च तदावश्यकत्वात् । ससहायेइति । असहायत्वं च मुख्यव्यपदेशभागघटकत्वं । नन्वेवं कुम्भकारेभ्य इत्यादौ कृन्मेजन्त इति सूत्रे भाष्ये ऽव्ययत्वमापाद्य सन्निपातपरिभाषया समाहितम् । तदेतदसङ्गतम् । एकारस्य मुख्यैजन्तत्वव्यपदेशिभागघटकत्वमिति चेन्न । कृत्त्वसमानाधिकरणमुख्यैजन्तत्वव्यपदेशभागघटकत्वेनासहायत्वस्य सूपपादत्वात् । अत एव खट्वे इत्यादौ व्यपदेशिवद्भावेन द्विवचनस्यैदन्तत्वात्प्रगृह्यत्वम् । द्विवचनत्वसमानाधिकरणे तदन्तत्वं व्यपदेशभागघटकत्वस्य तत्र सत्त्वात् । एतेन निजौ चत्वार एकाच इति भाष्यमपि योजितं वेदितव्यम् । धात्ववयवत्वविशिष्टैकाच्त्वव्यपदेशस्य निजावप्यमुख्यत्वेन तद्घटकेकारे मुख्यधात्ववयवत्वविशिष्टैकाच्त्वव्यपदेशभागघटकत्वस्य सत्त्वात् । ध्वनितंचेदमिति । ससहाये व्यपदेशिवद्भावप्रवृत्तिरित्येतत्प्रमेयमित्यर्थः । असहाय एवेति । यद्यपीयायेत्यादावपि प्रत्ययः सहायोस्त्येव तथापि प्रकृतिघटकः स्वसजातीयः सहायो नास्ति । एतावतैवासहायत्वव्यपदेशः । एकाकी हयमारुह्य जगामेत्यादौ विजातीयहयरूपसहायसत्वेपि तथा व्यपदेशदर्शनात् । तथाचार्थवता व्यपदेश इत्यत्रार्थवत्पदमर्थवत्सहचारितासहायत्वे लाक्षणिकमिति भावः । हलोनन्तराः । नन्वानन्तर्यस्योपलक्षणत्वे एकस्यापि हलो हलन्तरानन्तर्योपलक्षितस्य स्यादेव संज्ञा । उपलक्षणत्वं च संज्ञिकोट्यप्रविष्टे सति संज्ञिव्यावर्तकत्वमित्याशङ्क्याह । विशेषणतायाएवेति । विशेषणत्वं च संज्ञिकोटिप्रविष्टत्वम् । यथोक्तं मधुसूदनेन । सर्पज्ञानस्य भयकम्पादिजनकत्वे सर्पस्यापि तज्जनकत्वम् । सर्पादेर्ज्ञानविशेषणत्वसम्भवे उपलक्षणत्वायोगादिति । तत्रोपलक्षणत्वं च भयादिजनकव्यावर्तकत्वेसति भयादिजनककोट्यप्रविष्टत्वम् । वस्तुतस्त्वेतदनन्तरो ब्राह्मणो भोज्यतामित्युक्ते आनन्तर्यस्य तत्प्रतियोगिनश्च कार्यान्वयादर्शनात् । आनन्तर्यविषयविषयिभावस्वस्वामिभावादिप्रतियोगिनामुपलक्षणत्वमेव । यत्र हि विशेषणत्वोपलक्षणत्वयोर्दर्शनं तत्र विशेषणत्वमेव न्याय्यमिति न्यायविदः । न हि आनन्तर्यादिप्रतियोगिनां विशेषणत्वं कुत्रापि तात्त्विकानां सम्मतम् । एतेन सर्पादेर्भयजनकत्वोक्तिरप्यपास्ता । व्युत्पन्नत्वेनेति । इदमप्ययुक्तम् । व्रीहयः संयुज्यन्ते यत्र राशावित्यादावुक्तनियमव्यभिचारात् । यद्यपि घटपटौ संयुज्येते यत्रेत्यत्र घटपटातिरिक्तस्यैवान्यपदार्थतया प्रतीतिः । व्रीहयः संयुज्यन्ते यत्रेत्यत्र व्रीहीणामेव तथा प्रतीतिस्तथापि प्रकृते हलां विशेष्यत्वेन

यो इग्य सयुज्यन्ते येनेतिवदेव व्यवस्था युक्ता । तद्‌गादिरेति । हल्पदस्योक्तव्यु-
त्पत्त्यनुरोधेन हल्पद तद्‌गादिते लाक्षणिक स्यादिति भाव । हलौच हलश्चेति । स्व-
ग्निात्सहितायामिति सूत्रस्थभाष्यप्रामाण्येन द्विवचनबहुवचनान्तयोरेकशेष शिष्य-
माण च द्वित्वविशिष्टहलोर्बहुत्वविशिष्टहला च बोधकमिति भाव । फलाभावादिति ।
भूयादित्यत्र तु स्कोरिति सूटो निवृत्तौ पश्चात्तेनैव यासुटस्सस्य निवृत्तिरिति
भाव । इदमप्ययुक्तम् । पङ्क्तेत्यादौ सयोगादिलोपानापत्ते । अन्त्यात्पूर्वो मस्जे
मिदिति वार्त्तिकेन जकारात्पूर्व नुम्प्रवृत्ते नच जकारे झलि परतो द्वयो सयोगमा-
श्रित्य सलोप सुलभ । सहित्यधिकारेण झलादौ प्रत्यय एव तत्प्रवृत्ते । भूया-
स्तामित्यादौ तु द्वयो सकारयो श्रवणमिष्टमेव । एव च सति प्रयादिषु वर्णेषु
सयुक्तेष्वित्याद्यभियुक्तव्यवहारा अपि सगच्छन्ते इत्येषा दिक् । इतिसूचिनेति ।
अग्भिरित्युक्तावर्कप्रत्याहारप्रशयापत्तिरिति भाव । वस्तुतस्त्वल्पाचूतर, नाज्झला,
यजादौ गुणवचनादेवो,कालेऽज्झलो,पदेशे ऽजनुनेत्यादिनिर्देशेनाच्पदेन पदान्ते कु-
त्वाभावकल्पनेनादोषात् । सुप्प्रत्ययपरतन्तु कुत्वं भवत्येव । अश्विति भाष्यप्र-
योगात् । अत एवाचूमन्थिग्रहणेन ग्रहणमस्कार्याणि यथा स्युरित्यादयो भाष्यका-
राणामभियुक्ताना च प्रयोगा उपपद्यन्ते । तितउदेवेति । इद प्रत्येक सञ्ज्ञापक्षे स-
मुदाये सयोगसञ्ज्ञाया तु वाक्ये सहिताया अविवक्षाया तितउ आगच्छेत्युदाहर्तव्यम् ।
न च सहिताया अविवक्षाया सन्निकर्षाभाव इति वाच्यम् । एवमपि तित औं इती-
त्युदाहरणसंभवात् । अत्र हि सबुद्धौ शाकल्यस्येति प्रगृह्यत्वम् । लोपसञ्ज्ञेति ।
यद्यपि लोपसञ्ज्ञा एतत्तदो,रोरीत्यादि सन्निकार्योपयोगिनी लोपसञ्ज्ञा । यदि च
सन्धिकार्यं कार्यतया निमित्ततया वा नोपयोगिनी सा सञ्ज्ञेति ब्रूषे तर्हि वृद्धि
सञ्ज्ञापि न तथेति वक्तव्या भवति च सोवि लोपे चेत् दूलोप इत्यनयोर्लोपसञ्ज्ञापि
निमित्ततयोपयोगिनी । किञ्च लघुसञ्ज्ञा न कथञ्चिदपि सन्धिकार्योपयोगिनी । यदि च
गुरुसञ्ज्ञावाच्यतया तदुपन्यास, तर्हि पदसञ्ज्ञावाचकतया भसञ्ज्ञा ऽप्युपन्यस्यताम् ।
किञ्च स्वादिष्विति पदसञ्ज्ञापि भाभ्यामित्यादौ सन्धिकार्योपयोगिनीति तदनुपन्या-
सान्न्यूनता । एव टिसञ्ज्ञाया अनुपन्यासेनापि न्यूनता एव निपातसञ्ज्ञापि न
सन्धिकार्योपयोगिनीति सापि न वक्तव्या स्यात् । एव सम्प्रसारणसञ्ज्ञा सप्रसार-
णाच्चेति सन्धिकार्योपयोगिनीति वक्तव्या तथापि प्रायेण सन्धिकार्योपयोगिनीना

सञ्ज्ञानां प्रकरणं प्रायेण समाप्तमित्यर्थान्न कश्चिद्दोषः । शेखरोक्तविशेषणेतु व्यर्थे एवातद्वानेप्यननुगमादिति सर्वेष्टसिद्धिः ॥ इति विषमपदविवृतौ शेखरव्याख्यायां सञ्ज्ञाप्रकरणम् ॥

इको गुण ॥ सञ्ज्ञाकरणेनेति । वृद्धिरादैजिति सूत्रे ऽदेङ्गुणइति सूत्रे च वृद्धिगुणसञ्ज्ञयोः सञ्ज्ञिविशेषे सङ्केतकरणेनान्यत्रोच्चारिताभ्यां ताभ्यां सञ्ज्ञिन एव प्रतीतेरित्यर्थः । पूर्वं सञ्ज्ञाशास्त्रप्रणयनात् । सञ्ज्ञासूत्रे सञ्ज्ञाशब्दस्य शब्दस्वरूपपरत्वेपि ततो ऽन्यत्र सञ्ज्ञित्वमेव । सञ्ज्ञिविशेषे ततः पूर्वं शक्तिग्रहात् । तदप्यनुवर्त्येति । गुणवृद्धिग्रहणमनुवर्त्येत्यर्थः । अनुवर्तमानं च शब्दस्वरूपपरमर्थाधिकारानुरोधादिति भावः । पूर्वं गृहीतशक्तिकस्य न शब्दस्वरूपपरत्वं किन्तु यत्रार्थसङ्केतस्तत्परत्वमेवेति नियमादिदमप्ययुक्तमित्याशङ्क्य स नियमो ऽप्यसिद्ध इत्याह । स्वादिष्विति । नियमस्तु सञ्ज्ञाशास्त्रायत्र सञ्ज्ञापदमनुवर्तते तद्भिन्नस्थल एवेति भावः । ननु सञ्ज्ञासूत्रादनुवर्तमानसञ्ज्ञापदस्यार्थाधिकारानुरोधाच्छब्दस्वरूपपरत्वाङ्गीकारे ष्णान्तेति सूत्रे ऽनुवर्तमानसंख्यापदस्यापि तथात्वापत्तिरित्याशङ्क्याह । ष्णान्तेति । इति वा र्थादिति । इति चार्थादिति शुद्धः पाठः । आद्यस्योदाहरणं विभाषाप' इति अन्त्यस्योदाहरणं विभाषादिक्समासे इति, तत्र हि दिक्शब्देन दिग्वाचकशब्दाननूद्य विहितसमासस्यैव ग्रहणं प्रकृते तु मिदेर्गुण इत्यादावपि गुणशब्देन गुणसञ्ज्ञकाननूद्य न कश्चिद्विहित इति न प्रतिपदोक्तपरिभाषावसर इति भावः । ननु लाक्षणिकत्वं विलम्बोपस्थितिकत्वं प्रतिपदोक्तत्वं च झटित्युपस्थितिकत्वम् । त्यदादीनाम इति च न झटित्युपस्थितिकं गुणशब्देनाकारादेरविधानादित्युक्तपरिभाषयैवोक्ताधिकाया निर्वाहे तस्या भवदुक्तार्थो नोचित इत्याशङ्क्याह । ध्वनितं चेति । तत्र चेत्थं भाष्यं सञ्ज्ञाविधाने नियमः सञ्ज्ञया ये विधीयन्ते तेषु नियमः किं वक्तव्यमेतत् न हि कथमनुच्यमानं गंस्यते गुणवृद्धिग्रहणसामर्थ्यान्नयाच द्यौः, पंथाः, स, इममित्यादौ न दोषइति । यदि चोक्तपरिभाषया निर्वाहः स्यात्तदा सञ्ज्ञया विधाने इत्युक्तप्रकारो ऽनर्थकः स्यात् तेन मन्यामहे लक्षणप्रतिपदोक्तयोर्मदुक्त एवार्थो भाष्यकृतो ऽभिप्रेत-इति । तदाहेति । गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते इत्यस्य गुणवृद्धी भवत इत्यर्थके गुणवृद्धिपदे यत्र श्रूयेते इत्यर्थं इति भावः । एवमत्रश्चेत्यत्राप्यज्भवतीत्यर्थकानि ह्रस्वदीर्घपदानि यत्र श्रूयन्ते इत्यर्थः । एतेन गुणवृद्ध्योर्लक्ष्ये

विधाने न तेनेकृपदेपस्थितिः स्यादित्याशयः । अतएवेति । तथा च भवन्ति शालीय इत्यादौ च न दोषः अन्यथा ऐङ्ग्रे औपगवीय इत्यादावेव तौ स्यातामिति भावः । इत्यपास्तमिति । तन्वतो गुण इत्यत्र गुणइति प्रथमान्तं पदं न श्रूयत इति न दोष इति चेन्न । वृद्ध्यश एव दोष इत्यभिप्रायात् । प्रत्ययस्थादिति । आपि परे इद कक्कारस्य विशेषणमिति भावः । तदन्तस्येति । वृद्धिर्यस्येत्यादौ तु यच्छब्दसमभिव्याहारात्तद्वृद्धमिति विधेयनिर्देशाच्च वृद्धिपदस्य प्रथमान्तत्वे ऽपि यद्विधेयसमर्पकत्वनिर्णय इति । एतेन गुणवृद्ध्योर्विधेयत्वस्य वाक्यार्थबोधोत्तरकालिकत्वेन तदुत्तरमेवास्योपस्थित्या ऽलोन्त्यस्येत्यस्यापि तदुत्तरमेवोपस्थित्या तस्यानेन बाधः स्यादित्यपास्तम् । वाक्यार्थबोधात्पूर्वमपि यच्छब्दासमभिव्याहृतप्रथमान्तत्वेन मिदेर्गुण इत्यादौ गुणपदस्य विधेयसमर्पकनिश्चयसम्भवेनास्यालोन्त्यपरिभाषातः पूर्वमेव प्रवृत्तेः । आद्यन्तौ । सूत्रारम्भसामर्थ्यादिति । न च हलो यमामित्यादौ तच्चरितार्थम् । लोके उपस्थितिक्रमेणान्वयस्य क्लृप्ततया तेनैव निर्वाहात् । सञ्ज्ञाया निर्देशेषु लोकन्यायेन सिद्धेर्यथासङ्ख्यसूत्रे भाष्ये उक्तत्वेन सञ्ज्ञया द्वन्द्वेन च निर्देशे एतत्सूत्रारम्भसामर्थ्येनैव क्रमेणान्वयस्य वक्तव्यत्वात् । लोके त्वेवमिति । समूहयोरन्वयबोधोत्तरं पुनः प्रत्येकान्वयविवक्षया प्रयोगो ऽसाधुरिति भावः । तथा च तीर्णदग्धाभिलङ्क इति प्रयोगो ऽसाधुरिति केचित् । अन्ये त्वजाजाविधनौ देवदत्तयज्ञदत्तावित्युक्तेर्न ज्ञायते कस्याजाधनं कस्याऽव्य इति भाष्यस्वरसात् । द्वन्द्वगर्भबहुव्रीह्यर्थस्य समूहस्य द्वन्द्वार्थसमूहेनान्वयोत्तरं न प्रत्येकमन्वयः । परस्य द्वन्द्वार्थयोस्तु प्रत्येकमन्वयो भवत्येवेत्याहुः । भाष्ये स्पष्टमिति । तथा च भाष्यं यद्यपि तावल्लोके एष दृष्टान्तो दृष्टान्तस्यापि पुरुषारम्भो निवर्तको भवति कः सङ्ख्यातानुदेशो नामेति । परत्वादिति । इदमयुक्तम् । प्रत्ययः परश्चेत्यस्य एकवाक्यतया ऽन्वयस्य वक्ष्यमाणत्वेन वाक्यार्थबोधात्पूर्वमेव प्रवृत्तेः । अस्य च टकितौ यमुद्दिश्य विहितौ तदाद्यन्तौ भवत इत्यर्थेन वाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोर्योगपद्याभावात् । यथासङ्ख्यं सिद्धमिति । ननु गुणानां च परार्थत्वादसम्बन्धः समत्वाच्च स्यादिति न्यायविरोध इति चेन्न । एतत्सूत्रभाष्यप्रामाण्येनोभयनिर्देशे पञ्चमीनिर्देशो बलवानन्तरङ्गत्वादिति, तत्र भाष्योक्त्या ऽऽद्दे परस्येति सूत्रे ऽपवादविप्रतिषेधात्सर्वादेशो भविष्यतीति भाष्येण च तन्न्यायस्यैतद्भाष्ये ऽनाश्रयणबोधनात् । अ-

तपरत्वेन रपर, इग्यणः सम्प्रसारणमित्यादौ षष्ठीस्थाने इत्यादेः प्रवृत्तिः । पर्यायेणेति । इदमप्ययुक्तम् । इतावित्यस्याभावे टकाराद्यन्तौ भवत इत्यर्थे ऽनुबन्धविनिर्मुक्तपदार्थोपस्थितेः स्वसिद्धान्तत्वेनाद्यन्तयवस्थैवापत्तेः । इडादौ टकारोच्चारणसामर्थ्येनेत्सञ्ज्ञकटकारादिसंबन्धिनष्टकारान्तस्य वा ऽऽदित्वादिबोधनं तु क्लिष्टमितीद्ग्रहणं सार्थकमिति बोध्यम् । मिदचोन्त्यात् । निर्देशादिति । उपलक्षणमेतत् । श्नमो मित्वस्य । सौत्रमेकवचनमिति । कारके इत्यत्र निर्धारणसप्तम्यन्तत्वे कारकेष्विति वदेदिति भाष्येण निर्धारणार्थकविभक्तेर्बहुवचनरूपाया एव विभक्तेः साधुत्वबोधनादिति भावः । इतिभाष्यमिति । मिदचोन्त्यादिति सूत्रस्थमिति शेषः । परिभाषाणामिति । इदमप्ययुक्तम् । अलोन्त्यस्यादेः परस्येत्येतयो रनियामकत्वात् । तयोरभावे इत्यस्यानन्त्यस्यादेरनादेश्चाप्राप्तेः सन्देहे ऽनियमः । नचावयवषष्ठ्यादिषु सन्देह इति प्रकृतसूत्रस्थं भाष्यं तु सामान्येनार्थोपदेशस्य संशयस्थल एव प्रवृत्तिरित्यभिप्रायकम् । लौकिकोयं दृष्टान्तः । तद्यथा लोके कश्चित्कञ्चित्पृच्छति ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशत्विति स तस्मै चष्टे ऽमुष्मिन्नवकाशे हस्तदक्षिणो गृहीतव्य इति यस्तत्र नियतपथो भवति न तत्र सन्देह इति नासावुपतिष्ठते एवमिहापि सन्देहे नियम इति भाष्येण तथैव लाभात् । यद्वा पाक्षिकप्राप्तिकबाधेनोपपत्तौ नियतप्राप्तिकबाधो न न्याय्य इत्यभिप्रायकं भाष्यम् । निपातनात्साधुत्वस्येति । स्थानत्वस्यैव सम्बन्धत्वे तु स्थानं योगो ऽस्या इति वदेदिति भावः । संबन्धस्य प्रतियोगितानुयोगितान्यतरसंबन्धेन द्विष्ठत्वनियमात्स्थानस्य चानर्थत्वादिति भावः । दर्भाणां स्थाने इति । इष्टिविशेषे इदम् । शराश्च स्थूलास्तृणविशेषाः । प्रस्तरो मुष्टिविशेषः । किंचेति । अस्मिन्पक्षे शब्दानित्यत्वं रेखागवयन्यायेन समाधेयम् । तृज्वत् क्रोष्टुरिति । यद्यपि नात्र स्थानषष्ठी तथापि वर्ति. विहाय प्रथमायाः षष्ठ्यर्थत्वमङ्गीकृत्य क्रोष्टुशब्दस्थाने तृजन्त आदेश इत्यभिप्रेत्येदम् । इतिशब्द इति । इदमयुक्तम् । इतिशब्दस्य स्वसमभिव्याहृतपदे पदार्थविपर्यासकारित्वं स्वभावो न तु तद्बोध्यस्य शब्दस्यार्थपरत्वव्यवस्थापनं तस्मादितिशब्दः कार्यिकार्योभयस्थापको निपातानामनेकार्थत्वात् । तच्छब्दः सप्तम्यन्तार्थपरामर्शकः । तथाच सप्तम्यन्तार्थोपश्लिष्टस्य कार्यिणो यत्कार्यमिति तस्मिन्नितीत्यस्यार्थः । निर्दिष्ट इत्यादेश्च सप्तम्यन्तार्थे व्यव-

द्वितोच्चारिते पूर्वस्य तन्दोच्यमित्यर्थ । एवं तस्मादित्यस्याप्यर्थो बोध्य । यद्वेति-शब्द प्रकारे एव प्रकारेण वर्तमान कार्यमिति । अर्थोल्लिङ्गमिति । न तु स्वरूप-सती सप्तमी पचमी च निमित्तम् । यस्मिन्विधिरित्यादेस्तु स्वरूपसती सप्तमी निमित्तम् तेन नेड्वशीत्यादौ तदुपस्थिति । एतदुपस्थितिश्च उपपदविभक्तेरिति कारकविभक्तिसभवे उपपदविभक्तिर्न न्याय्येत्यपि तन्न्यायार्थ इति भाव. । बोद्ध-मिति । वर्णाना सर्वदेशकालवृत्तित्वादिति भाव । इयमेवेति । औपश्लेषिके ऽधि-करणे सप्तम्येवेत्यर्थ । ननु प्रत्यय, परश्च, गाङ्कुटादिभ्य इत्यत्र दाक्षविशेषवि-कल्पपरिभाषोपस्थितौ परिभाषणा नियमत्व न सभवति । प्रत्ययार्थान्वितप्रकृत्यर्था-वोधासभवेन पञ्चम्यर्थायशविकल्पनियमशरीरस्योपपादयितुमशक्यत्वादुक्तविषयद्वये प-रिभाषाया नियामकत्वासभवादित्यत आह । परिभाषाणामिति । यद्वा पति समा-स एवेत्यादिनियमाविषये हरिशब्दादौ चरितार्थाया घिसञ्ज्ञायाः पतिशब्दे तेन नियम उपपद्यते । प्रकृते तु तस्मिन्निति परिभाषार्थ विना इकोयणित्यादीना वाक्या-र्थबोधमात्रेण लक्ष्यसंस्कारकत्वमेव नेति कृत्य नियामकत्वमित्यत आह । परिभाषा-णामिति । अथवा साक्षाल्लक्ष्यसंस्कारकयो शेषो घ्यसखि पति समास इत्येतयो र्भवतु नियम्यनियामकभाव । परिभाषाणा तु विधिवाक्येन सह वाक्यार्थबोधमन्तरा न लक्ष्यसंस्कारकत्वमिति न नियामकत्वसभव इत्यत आह । परिभाषाणामिति । यद्वा परिभाषाणामङ्गत्वेनाङ्गीभूतप्रधानविधिसंकोचकत्वे लक्षणनियामकत्वासभव इत्यत आह । परिभाषाणामिति । अलोन्त्य । ऋकारात्पूर्वइति । आद्यन्तौ टकितावच्चो-स्येत्यनयो समावेश स्यादिति भाव. । नियमद्वयमिति । इदमयुक्तम् । सिद्धे स-त्यारम्भाभावात् । अन्ये त्वनेकाल्शित्सर्वस्येत्यस्यारम्भसामर्थ्यादेकालादेशस्य स्था-नषष्ठीनिर्दिष्टावयवस्थानकत्व कल्पयित्वा नियामकत्व वर्णयन्ति । तन्न युक्तम् । इत पूर्वं नियमेनानेकाल्शित्सर्वस्य वाक्यार्थबोधकल्पने तद्वैयर्थ्यमूलकोक्तार्थकल्पने प्रातिगौरवेण लघुभूतविधित्वस्यौचित्यात् परिभाषाणामनियमे नियमकारिणीत्यप-वादस्तु यदि परिभाषात्वसामानाधिकरण्येन तदोमिति ब्रूम. । यदि तदवच्छेदेन तदुक्तिस्तदा निर्युक्तिक. प्रवादो न प्रेमवद्भिरादर्तव्य इति ब्रूम । परस्येत्यावर्तत इति । इदमप्ययुक्तम् । विभाषा दिक्समास इत्यादाविव परशब्देन परत्वबोधक-शब्देन वा परस्य यद्विहित तन्नैवैतत्प्रवृत्त्या ऽऽवृत्तिनैयर्थ्यात् । तस्मात्परस्येति

लघुन्याससम्भवात् तस्मादित्युत्तरस्येति न्यासाभिप्रायेणेदं कथं विवेच्यम् । भूत-
पूर्वानेकाल्त्वमादायेत्युक्तमुपपादयति । विधाविति । ननु किमिदं विधौ निर्दिष्टत्वं
न तावदनेकालपदबोध्यत्वम् । खरवसानयोर्विसर्जनीय इत्यादिविहित विसर्जनीयलोपा-
नुनासिकोदात्तादीनामपि सर्वादेशत्वापत्तेः । नापि इशादिपदजन्यप्राथमिकोपस्थितिः
विषयत्वं तथा सति सानुबन्धस्यैव विधेयत्वापत्तेः । पदार्थोपस्थितिशाब्दबोधयोः
समानविषयकत्वेनैव कार्यकारणभावादिति चेन्न । द्वितीयपक्षाङ्गीकारेणादोषात् । न च
तत्पक्षेऽतिदोषः गङ्गायां घोष इत्यादावपि गङ्गापदेन प्रथमोपस्थितप्रवाहस्य शाब्दबोधे
भानवारणाय शाब्दबोधस्य प्राथमिकपदार्थोपस्थित्या समानविषयकत्वानङ्गीकारात् ।
यदि च प्रवाहोपस्थितिर्न शाब्दबोधकारणं या च कारणं तीरोपस्थितिः सा शाब्दे
शाब्दबोधेन समानविषयैवेति ब्रूषे तर्हि प्रकृतेऽपि या सानुबन्धकोपस्थितिर्न सा
शाब्दबोधकारणं या च कारणं सा ऽनुबन्धविनिर्मुक्तविषयिणी पदार्थोपस्थिति-
रनुबन्धविनिर्मुक्तस्यैवेति ग्रन्थो ऽपि शाब्दबोधकारणोपस्थितिपर इति समानम् । तदे-
तदभिप्रेत्याह । उद्देश्यत्वविधेयत्वाविषयतयेति । धान्येन धनवानित्यादिवत्प्रकृ-
त्यादिभ्य इत्यभेदे तृतीया । शित्वस्य प्रयोजनान्तरमाशङ्क्य निराकरोति । इद-
सोरिति । नन्वनुबन्धानामनेकान्त्वे इशादेरनेकाल्त्वाभावेन सर्वादेशत्वासिद्ध्या
शिदिति सार्थकमित्याशङ्क्याह । अनुबन्धानामिति । ज्ञापनेनेति । ननु ज्ञापितेऽपि
शकारोच्चारणसामर्थ्यादनुबन्धकृतमप्यनेकाल्त्वमादाय सर्वादेशत्वं भविष्यतीति पुनः
शिद्ग्रहणं व्यर्थमिति चेन्न । अनुबन्धकृताऽनेकाल्त्वस्य सर्वादेशत्वप्रयोजकत्वे
सिद्धे शकारोच्चारणसामर्थ्येनाद्यादेशत्वस्यापि कल्पनापत्तेः । इत्संज्ञकशकारस्या-
द्यादेशत्वे सर्वादेशत्वे च निमित्तस्याभावविशेषादिति दिक् । इत्यादीनामिति ।
आदिपदेनार्वणस्तृ, ससजुषोरुरित्यादेः संग्रहः । एतेनेति । ऐसि आदेःपरस्येत्यस्य
प्राप्तत्वेनेत्यर्थः । इतिपरिभाषेति । ननूरण् रपरः, यथासंख्यमित्यादिपरिभाषाणामनु-
क्त्या न्यूनता तासामपि प्रथमाध्यायस्थत्वात् सन्धिकार्योपयोगित्वाच्च । किञ्च
ज्ञापकन्यायसिद्धानां वाचनिकीनां च कासाञ्चित्यागः कासां चिदुपादानमर्धजरतीयं
इकोगुणवृद्धी इत्यादिना सन्धिकार्यानुपयुक्तानां चात्र कथनं व्यर्थमिति चेन्न ।
प्रथमाध्यायस्थानां प्रायेण सन्धिकार्योपयोगिनीनां संज्ञानां प्रायेण कथनस्य प्रक्रा-
न्तत्वे तथाभूतानां परिभाषाणामपि प्रायेण कथनं कर्तव्यमित्यभिप्रायेण तासां

कथनस्य कृतत्वात् । परनित्यान्तरङ्गानामिति तु। परत्वादनेन बाध्यत इत्येतदुपादानायेत्यादि क्रमेण सूत्रभिन्नपरिभाषाकथनस्योपपत्तिः कथं चिचिन्त्या । ननु किमिदं परिभाषात्वं न तावत्स्वेतरत्वनैरपेक्ष्येण विध्युपकारकत्वं सज्ञाशास्त्रेष्वतिव्याप्तेः । नापि शक्तिग्राहकभिन्नत्वे सति तत्त्वम् । षष्ठीस्थाने योगा, यस्मिन्विधि., प्रत्ययग्रहणे यस्मात्स इत्यादिष्वव्याप्तेः । किं च स्थानिवदादेश इत्याद्यतिदेशे ष्वतिव्याप्ते । यदि चातिदेशभिन्नत्वे सति तत्त्वं तत् । तदा ऽसिद्धं बहिरङ्गमन्तरङ्गे इत्यादिष्वव्याप्तेः इति चेन्न । सज्ञानिर्देशयोरपि परिभाषात्वस्याङ्गीकारात् उक्तपरिष्कारस्य निष्टुत्वात् । तथाचाहुः । "परितो व्यापृता भाषा परिभाषा प्रचक्षत इति" सज्ञा च परिभाषा च नि.न्ति.म एव । अ. देशो ऽधिकारश्चेत्याभियुक्तोक्तौ सज्ञानिर्देशयो पृथगुक्तिर्ब्राह्मणवसिष्ठन्यायेनेत्येषा दिक् । इति प्रथमाध्यायस्थानां परिभाषाणां प्रायेण प्रकरणं समाप्तिमियात् ।

इकोयणचि । ननु यथासङ्ख्यशास्त्रेण न निर्वाहः स्यौनसित्यत्रानुनासिकस्य स्थाने ताद्दृशयण्प्रवृत्तये स्थानत आन्तर्यस्याश्रयणीयत्वात् इत्याशङ्क्याह । अनुनासिकस्थानेपीति । ननु तिशादिसूत्रेण लभ्योच्चारणप्रसङ्गे निष्पन्नेऽसाधुरिति बोधयितुमशक्य तत्स्थानिककार्यान्तराभावेपि सत्त्वादित्यत आह । यदिहपरिनिष्ठितमिति । इह लक्ष्ये. प्रत्यासत्योपसङ्ख्याशास्त्रविषये न एव । यथासङ्ख्यशास्त्रेण स्थानेन्तरतमसूत्रापेक्षया परेण व्यवस्थाङ्गीकारेण सर्वत्रइति । यत्र प्रमाणकृतमादेशान्तरं यथा चेत्वेत्यादौ भकार एकारश्च तत्र स्थानत आन्तर्यं बलवत् । यत्रापि स्थानप्रमाणोभयकृतमेक केवलस्थानकृत चापर स्थान्यादेशान्यतरत् तत्राऽपि स्थानकृतान्तर्यमेव व्यवस्थापकमिति स्थानेन्तरतमसूत्रस्यार्थ इत्यभिमान । सूत्रस्थेति । वस्तुतो यरो ऽनुनासिक इत्यतो वाग्रहणानुवृत्तिर्बोध्या । प्रत्यासत्तीति । ननु स्थान्यपेक्षया ऽऽदेश एव प्रत्यासन्न इति चेन्न । सूत्रे आदेशस्य प्रत्यासन्नत्वेपि शाब्दबोधाय कल्प्यमाने आदेश स्थानिवदिति वाक्ये स्थानिन प्रत्यासन्नत्वमित्याशयात् । अतएवेति । तन्मात्रवृत्तीयनिवेश्य तद्वृत्तीत्येव निवेशादित्यर्थ । पुनरिति । सज्ञासु स्वरूपं लक्षणमिति न्यायानाश्रयणादिति भाव । तस्यापीति । इदं चिन्त्यम् । द्विरुक्तोत्तरभागात्पूर्ववृत्तित्वस्य देवदत्तयज्ञदत्तौ देभतुरित्यादौ सत्वाद्देवदत्तादेरप्यभ्याससज्ञापत्ति । अभ्यासकार्ये

ऽङ्गाधिकारेण तद्दोषवारणे तु ऊर्णुनावेत्यत्र ह्रस्वो हलादिः शेष इत्यनयोरनापत्तिः । एवमेधामासेत्यादावेधामित्यस्य तत्त्वापत्तिः । अस्यापीति । धिन्वन्तीत्यस्यापि । एतेन धिन्वन्तीति प्रयोजनमपि शिथिलमिति सूचितम् । नव्यानां त्वयं भावः कश्चित्कृपञ्चमीसमासं विनैव धिन्वन्तीत्यस्य सिद्धौ गुरुभूततन्मात्रवृत्तिधर्माश्रय इत्यर्थो नोचित इति । स्थानिसंबन्धी च यो ऽलित्यस्य फलमाह । प्रदीव्येति । उपदेशामङ्गौ । शास्त्रप्रवृत्तौ । यच्च तादृशवल्त्वघटितमिति समस्तपाठः । तादृशेति च वल्त्व विशेषणम् । कार्य एवेति । न तु कार्याभाव इत्यर्थः । व्यवहार एवेति । अतिदिश्यत इति शेषः । इदं तुल्यमिति । तन्निमित्तातिरिक्तेरयुक्तमित्यर्थः । शास्त्रीयमेवेति । अत एव स्थानिभूताद्वचः पूर्वत्वेन दृष्टत्वं तासां नित्यानिट्त्वं च नातिदिश्यते । वस्तुतस्त्वशास्त्रीयमप्यतिदिश्यत एव । कथमन्यथा प्रदीव्येत्यादौ वलादित्वस्यानिदेशप्रसक्तिः । नन्वेवं उवयिथेत्यादौ तासौ नित्यानिट्त्वमादायेड्विकल्पापत्तिरिति वाच्यम् । वस्तुतस्तासि सत इत्यर्थाश्रयणेनादोषात् । अन्यथा तास्वदित्यनेनैव सिद्धौ तासीत्यस्यानुवृत्तिवैयर्थ्यम् । नन्वेवं कण्डूतिरित्यत्र ऊडनापत्तिरिति वाच्यम् । स्थानिभूताद्वचः पूर्वत्वस्य वल्रादित्वस्येव विशेषणतया ऽल्घटितत्वेनादोषात् । दकशब्दस्येति । तत्र भाष्ये पूर्वोत्तरपदनिमित्तकार्यात् प्रागन्तरङ्गोप्येकादेशो नेत्यपि समाधानान्तरमुक्तम् । परिच्छिन्नपरिमाणेति । गुडोदकमित्युक्तं भाष्यं तु अभ्युपेत्योक्तिरिति भावः । लौकिकन्यायानाश्रयणे पूर्वपक्षस्योत्थानमेव न स्यादिति पूर्वग्रन्थाशयः । एवं च न कश्चिद्दोष इति । न चामन्त्य इत्यस्येत्युक्तदोषो नेत्यर्थः । क्वचित्तदनाश्रयणं । लौकिकन्यायानाश्रयणं । उवद्यिणेवेति । कण्डूयेत्यस्य यगन्तत्वे उवङ् । क्यजन्तत्वे यणिति विवेकः । द्विधा हि कण्ड्वादयो धातवः प्रातिपदिकानि चेत्यभियुक्तोक्तेः । यणवार्थवत्सूत्रेति । अतिदिश्यमानधर्मविरुद्धेत्युक्तशास्त्रार्थाङ्गीकारादित्यर्थः । अत्र च । इट ईटीत्यत्र । नन्वग्रहीदित्यत्र दीर्घे इट्त्वं दुर्लभम् । प्रदीव्येत्यादाविव शब्दतः स्थानितयोपात्तसमुदाय इडिति तदवयवोकारस्याल्वृत्तीट्त्वरूपधर्माश्रये दीर्घविधौ स्थानिवत्त्वस्य दुर्लभत्वादिति चेन्न । स्थान्यवयवाल्वृत्तित्वमित्यत्र मात्रपदनिवेशेनादोषात् । यद्वा समुदायमात्तादशायां तदवयवाल्वृत्तित्वं विवक्षितमिति न कश्चिद्दोषः । लिङ्गावेति । कित्त्वस्य स्वाविशेषधर्मत्वात् । अस्याह्लिङ्गत्व अशास्त्रीयधर्मातिदेशोऽपि । किन्त्वस्याशास्त्रीय

-त्वात्। अन्तरङ्गबहिरङ्गभावेति। इदं चिन्त्यम्। नदर्ष्टटकारमादाय "नद" इत्यत्र हरत्ष्ट्यादिलोपप्रसङ्गात्। अच परस्मिन्। परनिमित्तइति। "परस्मिन्नित्यस्यौपश्लेषिक-मप्तम्यन्तस्याज्विशेषणत्वे तु" न पदान्तेति सूत्रे चग्रहणवैयर्थ्यम्। जश्चतुरित्येन स्थानिवत्त्वाप्राप्ते। स्थानिवत्त्व सिद्ध्यतीत्युत्तरम्। अत एव चड्परनिर्ह्रासे" इति पाठ। अग्रिमदेशे ऽस्य पाठस्त्वसगत। "यलोपो न स्यादिति। यलोपे न स्थानिवदिति निषेधस्तु न। स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदित्युक्तेः"। निगाल्यतइति। इद वम्रश्रेत्यादेरुपलक्षणम्। पूर्वविधावित्यत्र षष्ठीस्थाने" योगेति न प्रवर्तते पञ्चम्या अश्रवणात्। अत एव अच" किमागत्येति भाष्य सगच्छते"। सवर्णदीर्घइति। इद प्रयोजनमन्यथासिद्धम्। अभ्यासकार्यप्रतिबन्धकस्तद्धुत्तरखण्ड-स्थानादेश स्थानिवद्भावो नेत्यनेन सिद्धे। उक्तार्थफल तु श्लेष्मा२ घ्नेत्यत्र सयोगसज्ञाया स्थानिवत्त्वाभाव। नकारस्थितिरिति। वस्तुतस्तु धर्मिग्राहकमानात्सन्नियोगशिष्टन्यायो लुग्विषय इति नात्र दोष इति तच्च वैयर्थ्यम्। विधेयस्याभावादिति। इद चिन्त्यम्। यस्येति लोपस्य विधेयस्य सत्त्वात्। भावसाधनइति"। इद भाष्यमेक-देशयुक्ति फलाभावात्। नपदान्त। वतिघटितान्येति। "असिद्ध बहिरङ्गमित्यस्य व्यावृत्तये वतिनाटितेति। अच परेत्यस्य व्यावृत्तये ऽन्येति। यतिनाटिता ये ऽच परेत्यतो ऽन्ये ऽतिदेशालोपामित्यर्थ। इद फलितार्थकथन न ज्ञाप्यांशकथन स्वस्मिन् चारितार्थ्याभावप्रसङ्गात्। ज्ञाप्यांशस्तु" वतिनाटिनातिदेशानां विषायां प्रवृत्तिरिति तेन स्थानिवदादेश, अन्तादिवच्चेत्यनयोविषाया प्रवृत्ति अच परेत्यस्य तु न प्रवृत्ति" द्विर्वचनादिग्रहणस्य नैयादिकोपलक्षणत्वात्। भावसाधनइति। विधिष्विति बहुवचन तु विधेयभेदेन विधिभेदात्। वस्तुत कर्मणि कि। कर्मधारय समास। तन सुलोपस्थानिवत्त्वादित्यस्य सुलोपो नेत्यनेनान्वय। तत्त्वेचेति। इद चिन्त्यम्। शे स्थानिभूतादच पूर्वत्वेन दृष्टत्वाभावात्। तस्योत्वे स्थानिवत्त्वाप्रसक्तेः। परे तु पदान्तस्य स्थाने इत्यर्थ शङ्कितुमशक्य। पदान्तस्य स्थाने विधौ 'द्विर्वचना-देश्च विधौ इत्यर्थाश्रयणे वैरूप्यापत्ते। एषो यन्नित्यसाधु परत्वान्नित्यत्वाच्च सुलोपस्य न्याय्यत्वात्। न च तत्र स्थानिवद्भाव"। पादस्य लोप" इति लोपस्येव सुलोपस्यापि पदचरमावयवत्वात्। लक्ष्यानुरोधेन पदसंस्कारपक्षस्यैवात्राश्रयणाच्च। अत एव स एवास्मि मसन्यजेति श्रौतप्रयोग एष यन्निति छान्दोग्यप्रयोगश्च सगच्छते।

लोकेऽपि सतसन्नित्येव प्रयुज्यते नतु सः सन्निती त्याहुः । नदोषइति । ननु पदे ऽन्त-इति सप्तमीसमासे ह्मतुपः पदत्वाभावेनैव चेतस्वानित्यत्र दोषवारणे परपदस्थाजादेश इत्यस्य नोपयोग इति चेन्न । चेतस्वानित्यादावित्यादिपदेनापीपचन् देवदत्तयज्ञदत्त-विष्णुमित्रा इत्यस्य ग्रहणेन तत्रोक्तार्थस्योपयोगसत्त्वात् । तत्र हि पदे परतोऽन्ते लुम्, अनादेशस्तु न परपदस्थः । पदचरमावयवविधायकातिरिक्तस्येति । नचैवं पिपठीरि-त्यत्र रुत्वं न स्यादिति वाच्यम् । पूर्वत्रासिद्ध इत्यस्याप्रवृत्तावपि क्वौ लुप्तमि-त्यस्य प्रवृत्त्या दोषाभावात् । एतेन पिपठीर्भ्यामित्यादिप्रयोगा उपपादिता ज्ञेयाः । नचैवमपि गर्दभमाचष्टे गर्दभयति ततः क्विपि गर्दब् इत्यत्र जश्त्वादनापत्तिः । न हि तत्र क्वौ लुप्तमित्यनेन निर्वाहः अल्लोपस्य क्विनिमित्तत्वाभावादिति वाच्यम् । नपदान्तसूत्रस्थभाष्यप्रामाण्येन ह्मतुपि त्रैपादिके कर्त्तव्ये पूर्वत्रासिद्धेनेत्यस्या प्रवृत्तिरित्यर्थाश्रयणेन सर्वसामञ्जस्यात् । चेतस्वान् महिम्मानित्यनयोः पूर्व-त्रासिद्धेत्यस्याप्रवृत्तावपि जशि न स्थानिवदित्यस्य प्रवृत्त्या जश्त्वं दुर्वारमि-त्याशङ्क्याह । सूत्रे जश्पदेनेति । इदं चिन्त्यम् । गर्धब्वानित्यत्र जश्त्वानापत्तेः । ननु पदचरमावयवसाधकस्थानिवद्भावस्यैव नपदान्तेति निषेधः । यथा गांधेत्यादौ तथा च चेतस्वानित्यत्र स्थानिवद्भावो न तत्साधकः किन्तु रुत्वप्रतिबन्धक इति न तस्य न पदान्तेत्यनेन निषेध इति पदेऽन्त इत्यर्थाश्रयणेन तत्र दोषवारणपर-भाष्यं न संगच्छत एवेत्याशङ्क्याह । प्रतिबन्धकश्चेति । तिङित्यादीति । आदि-पदेन चिण्णमुलोरिति सूत्रस्थं भाष्यम् । इदं च दीर्घग्रहणवर्जमित्यंशे साधकम् । ननु द्विर्वचनग्रहणादित्ययुक्तम् । द्विर्वचननिषेधस्यात्र कर्तव्यत्वादित्यरुचेराह । पूर्व-त्रासिद्ध इति । अनुत्पत्तेरेवेति । प्रक्षाल्नाद्धि पङ्कस्येति न्यायात् । प्रक्रियादशाया-मिति । परिनिष्ठिते तु जश्त्वेन दकार इति भावः । सार्थकेति । वस्तुतो ऽभावो नाक्तीरिति तन्न्यायविषयो नानाभिन्नार्थत्वसंपादनेति । यथा गवाम्पेषु च स्वा-मीत्यत्र । परएवेति । तेन लिङ्गविशिष्टपरिभाषया पुत्रयादिनीत्यत्र न द्वित्वनिषेधः । येन नाव्यवधानन्यायेनैकवर्णव्यवधान एव तत्प्रवृत्तेः । किञ्च पुत्रशब्दस्य विशेषण-त्वे उभयत आश्रयणे नान्तादिवदिति निषेधात्पुत्रशब्दस्यादिनीपरत्वमेकदेशविकृ-तन्यायेनोपपादनीयं स्यात् एकदेशविकृतन्यायश्चाक्तपरिमाणे न प्रवर्त्तते यद्विशे-षणत्वे तु पूर्वान्तवद्भावेन पुत्रशब्दत्वं परादिवद्भावेन चादिनीशब्दत्वे पौर्वापर्याश्र-

यणो एवोभयत आश्रयण इति निषेध ॱर्थन् परीमन्निति स्थानिवत्त्वं पूर्वत्रासिद्धमिति निषिद्धम् । न चादिनीशब्दस्य यविशेषेणत्वे यणो मय इति रेफस्य प्राप्त द्वित्वमेव निषिध्येन । सत्यादिनीशब्दपरत्वात् तेशब्दस्य तदभावादिति वाच्यम् । अच परस्य यर इत्यर्थाश्रयणेनादोषात् । नेमो रहौ कार्यणाविति माप्येण रेफस्य द्वित्वकार्यित्वाभावाच्च । अतएव । ध्यन्तानुकरणत्वादेव । आदिनीशब्दो यस्मादिति । अन्यथा ऽदिनुशब्दो यस्मादिति वदेत् । पुत्रःदीनि । पुत्रो हतो ययेति विग्रह । बहुव्रीहेश्चान्तोदात्तात्, यस्माद्गूपिदद्धेति ङीप् । अतएवेति । सजातीयाना ग्रहणादेत्यर्थ । इद चिन्त्यम् । विजातीयानां ग्रहणेऽप्यच परस्य यर इत्यर्थस्य वक्ष्यमाणत्वेनाचोरहाभ्यामित्यस्य वैयर्थ्याभावात् । शेषमित्यस्य फलमाह । आपत्यस्येति । यण मिति किमिति । हल परस्य लोप इत्युक्तावव्यवधिमतो साजात्यादव्र एव लोपो भविष्यतीत्याशय । इतराशे इकारोकाराशे । नन्वयायादेशे सयुतस्य श्रूयमाणस्यापि शास्त्रदृष्ट्या ऽसिद्धत्वाद्विद्युतत्वमेवेति चेन्न । एत्रायप्रामाण्येनासिद्धत्वाभावकल्पनात् । किंच सवर्णसंज्ञादृष्ट्या अ ध इति विहितस्य सवृतस्यासिद्धत्वेऽपि स्थानेन्तरतमसूत्रदृष्ट्या नासिद्धत्वम् । तस्य लौकिकन्यायसिद्धार्थानुवादकत्वस्य भाष्यसम्मतत्वात् । लौकिकन्याये च सचरणांये नासिद्धत्वम् । यस्मिन्विधिरिति परिभाषा विषेव धान्तप्रत्ययासंभवाद्यादाविन्यर्थो भविष्यतीत्याशङ्क्याह । तस्मादुदिति । प्राचस्त्विक्यैति । इदं चिन्त्यम् । नन्वपीति लिङ्गेन तस्मिन्निति के चित् । यस्मिन्विधिरिति । सप्तम्यन्ते विशेषणे ऽच्शब्दे उपादीयमाने यस्मिन्नलि स्थो विधि स तदादौ इत्यर्थ । हलि सर्वेषामित्यत्र वग्रहण नानुवर्तते इत्यभिप्रेत्याह । लोप शाकल्यस्येति । निमित्तत्वाभावात्क्रान्ते इति । यथा प्रकृते पूर्ववकारे न हि तन पूर्व लोपकार्यो तिष्ठति येन तस्य निमित्तत्व स्यात् । अचो रहाभ्यामित्यत्र तु रेफे द्वित्वनिमित्ते नियमेन द्वित्वकार्यित्व प्राप्नोति । विधेयविषयश्चेति । अचोरहाभ्यामित्यनेन रेफस्य द्वित्वनिमित्तत्वमपूर्वं बोध्यमाने विधेयमेवेति भाव । विशेषासमत्वादिति । कुटिल व्रजतीति वाक्यात्कुटिलं पन्थानं गच्छतीत्यस्यैव प्रतीतिर्न तु कौटिल्यविशिष्टव्रजनरूपविशेषस्य समन्वय । शब्दस्वाभाव्यादित्यर्थ । अनुकम्प्यतइति । अनुकम्प्यमानस्य च यडन्तेन क्रियासमभिव्याहारकृपविशेषासमत्वादित्यर्थ । लौकिको-

दाहरणेति । छन्दसि तु जीवे रदानुकि जीरदानुः स्रिवे रास्नेमाणमित्युदाहरणमस्त्ये-वेति भावः । व्यवस्थितत्वादिति । व्यवस्थितविकल्पत्वादित्यर्थः । इत्याहुरिति । परे तु लोपो व्योरिति सूत्रे वकारप्रत्याख्यानमेकदेश्युक्तिः । इको गुणेति सूत्रस्थभाष्य-विरोधात् अत एव न पदान्तसूत्रे स्त्रक्षवित्यत्र पदान्तस्य स्थाने इत्यर्थे लोपोव्यो-रिति लोप आपादितो दीक्षितेन । ऊणूमूत्रे च स्त्रक्षवित्यत्र क्विपि लोपो व्योरिति लोपप्रसङ्ग इति कैयटेनोक्तम् । लोपः शाकल्यस्येत्यत्र स्त्रक्षव् करोतीत्यत्र लोपो व्योरिति लोपस्याग्निमशङ्करे आशाङ्किष्यमाणत्वाच्च । अत एव "सुचे सुचे वारिद-ध्वान्तसुराणां सुका रणे लाघवतश्च रामः । विशेषणे द्वे य इहादि कर्तृवेदेदर्धानी स इह कैयटीये" इत्यभियुक्तोक्तिः सङ्गच्छते । तत्र हि सुचे सुकरिति विन्विक्षाण्विभ्यां विचि गुणे रूपम् । न च सुधे इत्यत्र न धातुलोप इति गुणनिषेधः शङ्क्यः । आर्ध-धातुकत्वतद्व्याप्यान्यतररूपेणार्धधातुकनिमित्तके लोप एव तत्प्रवृत्तेः । अन्यथा न धातुलोपेत्यस्य प्रत्याख्यानेन फलभेदापत्तेः । अगुपीदित्यादौ तिप्निमित्तकगुणवार-णाय लघूपधाद्विहिते प्रत्यये गुण इत्यर्थे तु अत्र गुणो दुर्लभः । अत एव च च्छ्वोःशूडिति सूत्रे भाष्ये ऊठ्स्त्वे ऊडादिः कस्मान्न भवत्यस्त्वादिर्लोपोव्योरिति वकारस्य लोपो भविष्यतीत्युक्तं भाष्ये । तत्रैव कैयटे क्विग्रहणानतुवृत्तिपक्षे द्विर्वेयङ्लुकि देदेतीत्युक्तम् । छन्दसि सर्वविधीनां वैकल्पिकत्वमाश्रित्य गव्यूतिरि-त्यत्र वलोपवारणं त्वगतिकगतिः । लोके ऽध्वपरिमाणे सवकारेणैवाध्वपरिमाणप्रतीत्या वलोपो नेत्यपि शिथिलम् । न हि पूर्वपदादित्यत्रैव सवकारेणाध्वपरिमाणगम्ये वान्ता-देश इत्यर्थो ऽस्ति । वस्तुतः पूर्वपदादित्यत्रापि णत्वेन सञ्ज्ञायां गम्यमाना-यामित्यर्थो न युक्तः । अग इत्यस्य वैयर्थ्यापत्तेः । रघुनाथादौ क्षुम्णादित्याणत्वं नेत्याहुः । तदा । तत्स्येन तच्छब्देन । तत्र धान्यंक्रय्यमिति तत्पुरुषविषये तद्धान्यं क्रय्यमित्यर्थः । तत्पुरुषं प्रति तद्धान्यं क्रय्यमिति फलितम् । तत्र धान्यं क्रेयमिति । तत्पुरुषंप्रति धान्यं क्रेयमिति फलितम् । द्रव्येति । मूल्यभूतस्वर्णरूप्यादिद्रव्य इत्यर्थः । लोपःशाकल्यस्य । बाधकमिति गार्ग्यग्रहणस्य पूजार्थत्वेन नित्यं तदिति भावः । शाकल्यमते इति । अत एव कौ बाहू का ऊरू इति शाकल्यानां वकाररहि-तःपाठः । तैत्तिरायाणां सवकारःपाठः । एतेनेति । वलोपे स्थानिवत्त्वेनेत्यर्थः । अन्योन्याश्रय इति । यथा ऽस्य न पदान्तसूत्रस्थशब्दस्त्वेनाविरोधस्तथा तट्टीका-

यामस्माभिर्निरूपितम् । पदत्वादिद्वारकेति । आदिपदेन पदत्वाभाव' ।' परम्परया वेत्येतत्प्रापकस्य प्रतिबन्धकस्य वेत्युभयत्रान्वयि । अत्र च स्थानिवद्भाव पदत्वाभावसम्पादनद्वारा पूर्वत्रासिद्धीयप्रतिबन्धक इति बोध्यम् । वस्तुतस्तु पूर्वत्रासिद्धीय इत्यस्यैवमर्थकरणे फलस्य प्रमाणस्य चाभाव । ननु पाचयते पाक्, याजयतेर्याट्, पिपठिषते पिपठीरित्यादौ कुत्वादिप्रवृत्ति फलम् । अन्यथा तत्र पदसञ्ज्ञाया चकारादे पदान्तत्वाभावेन कुत्वाद्यनापत्ते रिति चेन्न । कार्यकालपक्षे पदसञ्ज्ञाया अपि पूर्वत्रासिद्धीयत्वेनादोषात् । हलोण. सन्तीति भाष्ये क्वचित्परे ऽण सन्तीति पाठ । इत्याहुरिति । परेतु भोभगो इति सूत्रे भाष्ये वृक्षव् करोतीति प्रयोगस्य कण्ठत एव पठितत्वेनानभिधानोक्ति साहसादेव । न पदान्ता हलो ऽण सन्तीत्यत्र च कार्यभाज इति शेष इति कैयटेनैव ऌणूसूत्रे विस्पष्टमुक्तत्वेन वृक्षवादेरनभिधाने प्रमाणाभावाच्च वृक्षव् करोतीत्यत्र चाशीत्यनुवृत्त्या हलिसर्वेषामित्यस्याप्रवृत्तौ वकारस्य न कार्यभाक्त्वम् । यद्वा न पदान्ता हलोण इत्यस्य दोषसम्पादका इति शेष । तेन हर एहि विष्णविहेत्यादौ पदान्तहल्रूपाणा सत्वे ऽपि न क्षति' । वृक्षव् करोतीत्यत्राशीत्यनुवृत्त्या न दोष इति स्पष्टमेव भाष्ये उक्तम् । वकारनिवृत्त्यैवात तद्वारणमभवादिति तु न युक्तम् । द्वन्द्वनिर्दिष्टयोरेकदेशनिवृत्त्यसभवात् । अत एव द्वन्द्वनिर्दिष्टैकारस्य निवृत्त्यर्थमदसो मादिति सूत्रे मादग्रहण कृतम् । भोभगो इति सूत्रस्थश्चिन्त्यमेतदिति कैयटग्रन्थस्तु ऌणूसूत्रस्थस्वोक्तदिशोपपत्तिचिन्तन कार्यमित्येव पर इत्याहु । इनिवदिति । अनूद्यमानविशेषणे ऽपि सा परिभाषा प्रवर्तत इति भाव । वभ्रेइति । स्थानिवत्सूत्रे आरेत्यादौ स्वोक्तदिशा द्विरुक्तपूर्वभागस्य पुनरभ्यासत्वे ऽनादेस्तेन निवृत्तेश्चिन्त्यमेतदिति केचित् । अन्यपक्षे इति । अणमनूद्य रपरत्व विधीयत इति पक्षे इत्यर्थ । रलपरानिति । वृद्धिरादैजदेङ्गुण इति सूत्रयोराराल्लौ अरल्लौ च विशिष्य निर्देष्टव्यो । ऋत इद्धातोरित्यादौ तु रपर पाठ्य । मृजामिति । इद न युक्तम् । अभ्यासे हलादि शेषेणानादेर्हलो निवृत्तेर्विशेषाभावात् । अतएवाप्येति । इद चिन्त्यम् । विनिगमनाविरहेणार्थद्वयपरत्वे ऽपि विकल्पाभावात् । अर्थद्वयपरत्व तु तन्त्रावृत्त्यादिना बोध्यम् । पृथक्पदमिति । पूरणगुणेति षष्ठीसमासनिषेधादिति भाव । इणेवेति । न तु वीणेतीत्यत्र मश्लिष्ट इत्यर्थ । वृक्षे शाखेति न्यायनये । ऽनयवस्था-

वयक्तिन्याधारत्वप्रसिद्धावपि लोके ऽवयविनो ऽवयवाधारत्वं प्रसिद्धमिति भावः ।
ण्यन्तस्य शब्दान्तरत्वमभ्युपेत्य तुष्यतु दुर्जन इति न्यायेनाह । किं चेति । एकत्व-
व्यवहारे इति । तत्त्वेन दृष्टे इत्यर्थः । भेदेनापेक्षायामिति । इदं साध्यमित्यपेक्षाया-
मित्यर्थः । सर्वं साध्यमिति विवक्षायां तु नायं न्यायः । यथा ऽचिरादेशे । पूर्वं
धातुरिति । अवच्छेदमपि लिङ्गमिति भावः । अन्तादिवच्च । पूर्वपरशब्दाविति ।
तथा च पूर्वपरयोरित्यन्ताद्योर्विशेषणम् । यद्वा पूर्वपरयोरित्यवधारणवचनानुगामिन्यौ
तथा चान्तादिवर्णद्वयघटितसमुदाये प्रातिपदिकत्वादिव्यवहारानादरः संपादयति ।
समुदायस्यान्तादिस्थानमित्यग्रिमशेखरस्वारस्येन तु पूर्वपरयोरन्यान्तादिपदार्थे ऽन्वय
इति लभ्यते । अन्त्यपक्षे तु समुदायेत्यस्य ये व्यव[illegible]ारा इत्यनेनान्वयः । एतदर्थो-
नितत्वम् । अत्र च यत्तिन्तनतुल्यमित्यनेन । एकादेशइति प्रथमान्तश्रवणात्
क्वचैकादेशस्येति तु फलितार्थकथनम् । औड्यस्येति । तस्यैकादेशघटितत्वं व्यपदे-
शिवद्भावेन । तद्वयवेऽपीति । अधिपूर्वादेशादिकादुदन्तमिति धातोः रक्तो ल्यनि
तुगभावार्थमाशिङ्वचनस्य चारितार्थ्याच्चिन्त्यमेतदिति केचित् । इष्यत एवेति । इदं
चिन्त्यम् । स्थानिवत्सूत्रप्रात्स्थानिवत्वस्यैवोभयत आश्रयण इत्यनेन निषेधाङ्गी-
कारादिति । इतिदिगिति । अन्ये त्विदं देवदत्तस्येदं यज्ञदत्तस्येत्यादावेकदेशे मि-
त्यस्यैकदेशत्वविरहेण देवदत्तस्येदमिति स्थानिसमुदायस्य निरर्थकत्वेन देवदत्तस्येद-
मित्यादेशकल्पना न तत्र संभवति । अर्थवत्त्वात्मानिकस्थान्यादेशभावविश्रान्तेः ।
तथा च यज्ञदत्तयेन देवदत्तस्येति वेदमिति वा ऽऽदेशः कल्पनीयः । एवं
खाश्वशब्देऽपि । तत्र हि खाहत्यादेशकल्पना ऽऽश्व इत्यादेशकल्पना वा स्यात् ।
तथा चानुमानिकस्थान्यादेशभावे एकादेशविषये प्रत्येकं स्थानित्वेऽपि एकादेशान्त
पूर्वस्थानिवत्त्वस्य तदादौ परस्थानिवत्त्वस्य स्थानिवद्भावेन लाभो न तु वैपरीत्येन
यथैषान्तादिवच्चेति तात्पर्यग्राहकम् । एवं च आश्वशब्दे ऽश्वशब्दत्वं स्थानिवद्भा-
वेन स्यान्न खशब्दत्वमिति न दोषः । प्रिय इत्यादौ तु भीशब्दत्वं स्थानिवत्त्वेन
स्यादेव । आनुमानिकस्थान्यादेशभावे एकादेशघटित धातुत्वानयनसंभवात् ।
क्षीरपेणेत्यत्र तु पे शब्दे आनुमानिकस्थान्यादेशभावमाश्रित्याप्तपदत्वमानेतुमानीयत
इति णत्वसिद्धिरिति भावः । एवं च सन्यन्तादिवद्भावस्य स्थानिवत्सूत्रमूलकतया
न या तादृप्यानिर्देशादिति प्रतिपक्षखण्डनं सूपपद्यते । अत एव ह्याप्ग्रहणे ऽदीर्घ

इति स्थानिवत्त्वनिषेधे ऽपरदीर्घग्रहणं चारितार्थम् । एकानुत्तरपदस्यान्तरङ्गत्वेना-तिदेशे एङ्गाभिरित्यादावदन्तत्वस्याप्यतिदेशापत्तिः । पूर्वपरघटितसमुदायस्येत्यर्थेन तु न वा ऽताद्रूप्यातिदेशादिति वार्तिकार्थस्य तु न कोडीकारः रामानित्यादौ भत-दुक्तदिशा व्यपदेशिवद्भावो नाभिरित्यत्र-पूर्वान्तवद्भावेनात्वातिदेशे ऐसादेशापत्तिरि-त्याहुः । ज्ञापकानुसरण वेति । तस्मादित्युत्तरस्येति निर्देशात् ज्ञापकाच्छिवादीत्येऽ-न्तरङ्गे प्यन्तरङ्गपरिभाषा क्वचित्प्रवर्तते इति दध्यत्रेत्यत्र न संयोगान्तलोपः । बहि-रङ्गयणो ऽसिद्धत्वात् । परे तु पूर्वत्र कर्तव्ये परस्यासिद्धत्वे ऽपि तत्र कृते परस्यासि-द्धत्वे मानाभाव । एवमेव हलन्त्यन्ते शब्दरत्ने स्पष्टमेवोक्तम् । तथा च नाङ्कौदादौ पूर्वस्या कृतत्वेन ता भति परस्य विसर्गस्यान्तरङ्गस्य पूर्वत्रेत्यनेन सिद्धत्वबोधनमश-क्यत् । तथा च भावकभावात् । अन्तरङ्गपरिभाषाकार्यकालपक्षे परिभाषान्तरवत् त्रिपाद्या प्रवर्तन एव । विसर्जनीयसूत्रे शेखरोक्तयुक्तिमुपजीव्य प्रवृत्त अयुक्तो य परिहारो न वा बहिरङ्गलक्षणत्वादिति भाष्य-शिथिलमेव युक्त शैथिल्यात् । अत एव शिथिलयुक्तिमूलकयोगो वा विशेषादिति कात्यायनसूत्रस्यानङ्गत्वापकत्व-लक्षणशैथिल्य जैमिनिनोक्तम् । उभावामेयाग्नीषोमीयपुरोडाशौ चतुर्धा कर्तव्याव-विशेषात् आग्नेय चतुर्धा करोतीति श्रुतौ अग्निदेवताकपुरोडाशे चतुर्धा करणस्योक्त-त्वेनोभयोरापि पुरोडाशयोरग्निदेवताकत्वाविशेषादिति तत्सूत्रार्थ । तत्र चाविशेषा-दिति युक्ति- शिथिला ऐन्द्राग्ने चतुर्धाकरणवारणाय श्रुतावाग्नेयपदेनाग्निरर्यास्य दे-वताकत्वस्यैव विवक्षितत्वात् । तस्य दोष इति तु बहिःङ्गलक्षणत्वादित्येन सिद्धो ऽयर्थ-मेव । एव च तत्र तत्र वचनानि न कार्याणीति महच्छारवम् । तस्मादित्युत्तर-स्येत्यादिज्ञापक या कल्पित त्रिपाद्या कार्यकालपक्षे बहिरङ्गपरिभाषा प्रवर्तत इत्यर्थे ऽनुसर्तव्यमिति न कश्चिद्दोष इत्याहु । सुबन्तमप्रतिके इति । ननुसुबन्ते धाता-वित्यर्थ । तथा सति ऋतधातौ क्विपि सुप्येव प्रवृत्ति स्यात् । उपर्षभीयतीति । *नन्वन्तरङ्गत्वादेवात्र पूर्वं गुणस्य प्रवृत्त्या न वृद्धिरिति चेन्न । उपसर्गसमानाकार* पूर्वपद धातुसम्बन्धप्रयोजकप्रत्यये विवक्षिते पृथक् क्रियत इत्यङ्गीकारेणादोषात् । एव चेत्यत्र वक्तव्यपदाभावेन सूत्रत्वभ्रम निराकर्तुमाह । वार्तिकमिति । गमक-त्वादिति । वृत्त्यघटकपदार्थान्वितस्वार्थावगमकत्वेन शिष्टप्रयुक्तत्वादित्यर्थः । शा-ब्दज्ञानानुपातीति । शब्दज्ञानोत्तरमेव जायमान इत्यर्थ । पतन्तन्जलिना वृत्तत्वः

पक्ष तस्य इत्युपक्रम्यारोपात्पृथग्विकल्पात्मिकां वृत्तिमुक्त्वा तल्लक्षणमिदं सूत्रं प्रणीतम् । तदुदाहरणं तु चैतन्यस्य स्वरूपं घटस्य स्वरूपमित्युक्तं तद्भाष्यकृता । तत्र हि चैतन्यस्वरूपपदार्थयोरभेदेन तत्संबन्धरूपं यद्वस्तु तच्छून्यमविद्यमानं यस्य विषयः स विकल्प इत्यर्थः । अत्र मार्तण्ड इत्युदाहरणविषये ऽन्योन्यादिटीति शास्त्रं विकल्पात्मकज्ञानजनकमिति तात्पर्यम् । परे तु संग्राहकशास्त्रस्यान्यत्र चारिथ्यादेत-द्विषये वचनाभावे उपद्रव एव न स्यात् । विकल्पात्मकज्ञानजननं तु दूरतराम् । किं च संबन्धांशे एव विकल्पात्मकं ज्ञानं न तु आदित्यांशे विकल्पात्मकज्ञानस्य शास्त्रप्रवृत्त्युपयोगित्वं च निर्मूलम् । अत एवाद्यन्तवत्सूत्रे भाष्ये ऽपूर्वोत्तरत्वल-क्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन्नर्थे आद्यन्तवद्भावेनेति वार्तिकमतमुपन्यस्य गौन-र्दीयस्त्वाह सत्यमेतत्सति त्वन्यस्मिन्निति स्वमतेन सूत्रारम्भ एव कार्य इत्युक्तमि-त्याहुः । इतिशब्दलोपेइति । इति जस्त्वाभावेचेत्यपि पूरणीयम् । सन्ध्याकरणस-मय इति । सपरूपेणेति शेषः । ओत्वोष्ठयोः । ननु अत्र समर्थपरिभाषोपस्थिता-वस्य वासुदेवस्योष्ठ इति समासे एवेदं स्यान्न विम्बोष्ठइत्यादौ तत्राकारस्यानर्थ-कत्वेनोष्ठेनासामर्थ्यादित्याशङ्क्याह । अत्र समर्थेति । पदत्वेनेति । एतस्योदाह-रणं मृग्यम् । प्रत्युत युष्मदस्मदोः षष्ठीत्यादिसूत्रेषु पदस्य पदादित्यधिकारेणैतत्प-रिभाषाप्रवृत्तौ असामर्थ्ये आदेशानापत्तिः । परमव इत्यादावेव स्यात्प्रवृत्त्यापत्तिश्चे-त्यपि बोध्यम् । सुबन्तत्वेनेति । तिङन्तत्वेन चेत्यपि बोध्यम् । तेनाख्यातमाख्यातेने-त्यादावप्येतत्परिभाषोपस्थितिः सिद्धा । तद्धितविधौ प्रातिपदिकत्वेनोद्देश्यत्वे ऽपि बकालतनेष्वित्यादिज्ञापकेन स्वार्थे परिपूर्णमिति न्यायेन न चार्थिकं सुबन्तत्वेनो-द्देश्यत्वं नहि शब्दस्तेन रूपेणोद्देश्यत्वे एव तत्प्रवृत्तिरित्यत्र किञ्चिन्मानं ।तत्रैवेति । तेनान्यादितरेत्यादौ न तत्प्रवृत्तिः । ओत्वोष्ठादिमात्रस्येति । ओत्वोष्ठयोरादिरो-कारस्तन्मात्रस्य पदत्वाभावादित्यर्थः । एतदुत्तरं तदुत्तरपदके समासे इत्यर्थासंभ-वादिति शेषः । तद्घटितेति । अवर्णोत्वोष्ठसंबन्ध्यच् एतदुभयघटितेत्यर्थः । अन्य-थेति । अजाद्योरोत्वोष्ठयोरित्यर्थे इत्यर्थः । अयं भावः । ओत्वोष्ठयोः परत्वेना श्रयणे हि प्रत्यासत्त्या तदुत्तरपदके समासे एवास्य प्रवृत्तिः स्यात् । अत्र त्वो-त्वोष्ठयोरजेव परत्वेनाश्रितः तेनौष्ठस्य व्रणः योष्ठव्रणः तृपलस्यौष्ठव्रणः तृपलो-ष्ठव्रण इत्यत्रापि पररूपं भवति । न ह्योष्ठशब्द उत्तरपदं किं त्वोष्ठव्रणशब्दः समर्थ-

परिभाषानुपस्थितेर्न्द्र्यौद्यो ष्टपल्नोदृवण इत्यपि प्रयोजन योग्यम् । नह्यत्र दन्तस्य ओष्ठेन सामर्थ्यमस्ति । तयो. परस्परमनन्वयात् । एव सङ्गस्य कार्यं सगकार्यम-ङ्गुले. सगकार्यमङ्गुलिसगकार्यमित्यत्रापि षत्व भवत्येव । अङ्गुलिशब्दघटकेण. परस्य सगसकारस्य षत्वमित्यर्थाश्रयणेन प्रकृतसाम्यात् । ईषदर्थेति । तेन निपात इति न प्रकृतिभाव. । ऋत्यक इति पाक्षिकप्रकृतिभावस्तु स्यादेव । ननु आ ऋ-षभ इत्यत्र ऋत्यक इति प्रकृतिभावे पश्चादयशब्देन सबन्धे तेन सवर्णदीर्घे च पश्चा-दृत्यकइत्यस्य पाक्षिकत्वादप्रवृत्तौ गुणेन अर्षभीयसिद्धिरिति चेन्न । तस्मिन्नेव लक्ष्ये प्रथम भागोपक्रमे पश्चात्प्रकृतिभावस्याभावायोगात् । अन्यथा शुशुवतुरित्यादौ वैकल्पिकत्वाद्विभाषा श्वेरित्यस्य पूर्वमप्रवृत्तौ द्वित्वे श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेध इति अभ्याससलक्षणसप्रसारणाप्रवृत्तौ पश्चाद्विभाषा श्वेरित्यस्योत्तरखण्डे प्रवृत्तौ शिश्वि-यतुरिति रूपापत्ते । अव्यक्तशब्दस्य ध्वनौ योग दर्शयति । अविद्यमानेति । अविद्यमान व्यक्त कत्वादिधर्मो यत्र सो ऽव्यक्त इति विग्रह इति भाव । अनुकर-णएवेति । तथा च सूत्रे ऽनुकरणशब्द' स्पष्टार्थ इति भाव । अत इति किं पटगि-त्यपपाठ । शङ्कासमाधानयोर्निर्दलत्वात् । फलकल्पनेति । पटदितीति शब्दान्त-स्यानुकरणे द्वित्वे पटदिति पटदितीत्यत्राम्रेडितघटिततकारस्य द्वित्वाभाव । अन्त्य-स्येत्यस्य फलमिति । फलकल्पनाभिनिवेश इत्यर्थ । अइउण्सूत्रानन्तरमिति । इद चिन्त्यम् । तयोरिकप्रत्याहारे प्रवेशापत्ते । ऋलृक्सूत्रानन्तर तयो पाठस्तूचित । ल्कारेऽइति । ऋकारात्परत इति शेष । तादृशम्येति । विवृतत्वादिमत इत्यर्थ । प्रत्याख्यानमिति । लृऋवर्णयो. सावर्ण्यमाश्रित्येति शेषः । ननु ऋकारस्य ल्कारे परे निवृतऋकार एव स्यान्नत्वीषत्स्पृष्टल्कार ततोपि विवृतधर्मद्वयघटितान्तर्येणान्त-रतमत्वात् । एव मम् नित्यत्र लकारवत्तान्तर्येणेषत्स्पृष्टो दुर्वार इति चेन्न । ऋलृक्सू-त्रानन्तर पाठस्य होत्ल्कार इत्यत्राच्त्वसिद्धिद्वारा प्लुतार्थत्वेन पाठसामर्थ्येन यत्कि-ञ्चिदान्तर्येपीषत्स्पृष्टल्कारस्य लक्ष्ये प्रवृत्त्यङ्गीकारात् । मम् नित्यत्र त्वीषत्स्पृष्टस्य शङ्कैव नास्ति पूर्वसवर्णत्वाभावात् । एव धातृणा मित्यत्रेपत्स्पृष्टदीर्घस्य न शङ्का रेफद्वयाचिन्त्यविवृतत्वरूपधर्मद्वयकृतान्तर्यस्य विवृते एव सत्वात् । ननु "त्रिप-ष्टिश्चतु षष्टिर्वा वर्णा' शम्भुमते मताः । प्राकृते सस्कृते चापि स्वय प्रोक्ता. स्वय-म्भुवा । स्वरा विंशतिरेकश्च स्पर्शाना पञ्चविंशति. । यादयश्च स्मृता ह्यष्टौ चत्वारश्च

यमाः स्मृताः । अनुस्वारो विसर्गश्च ःक ःपौ चापि पराश्रितौ । दुस्स्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव चेति" शिक्षाविरोधः । ईषत्स्पृष्टयोरनयोराधिक्यात् । तत्र दुःस्पृष्टो ऌकारो मातृकान्यासेपि नैतौ परिगणितौ । तथा हि तत्र षोडश स्वराः, पञ्चविंशति स्पर्शा, यादयोष्टौ ळक्षेति द्वयं संकलनयैकपञ्चाशद्वर्णा भवन्तीति चेन्न । तुल्यास्यसूत्रस्थभाष्यवार्तिकप्रामाण्येनैतयोरपि तत्र पूर्णात् । यथा ऽक्षरसमाम्नाये मातृकापाठे च विद्यमाना अपि यमा उक्तशिक्षावल्लाद्वर्णराशिषु पूर्यन्ते । शिक्षायामपरिगणितो ऽपि दीर्घऌकारो मातृकापाठे पठ्यते । परे तु त्रिषष्टिश्चतुःषष्टिर्वेति संख्या धर्मकृता न तु व्यक्तिकृता । वर्णानां प्रत्युच्चारणे भेदपक्षे ऽसंभवात् । तथा चाभितोऽभक्तिसहितरेफघटितत्वतादृशकालघटितत्वरूपधर्माभ्यां द्वाभ्यां विवृतयोरीषत्स्पृष्टयोश्च ऋऌवर्णयोर्द्वित्वम् । एवमेव त्रिमात्रचतुर्मात्रयोः प्लुतावेच इदुताविति सूत्रे भाष्ये विस्पष्टमुक्तयोरेओङ्सूत्रभाष्येण त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्नित्यनेन सूचितयोर्द्विमात्राधिकत्वेनानुगमेन प्लुतमध्येऽन्तर्भावान्नाधिक्यम् । सत्यपि विधाने गमॄणामित्यत्र विवृतत्वसाम्येन विवृतो दीर्घऋकारो ऌकारवत्ता न्तर्येणेषत्स्पृष्टऋकारश्च पर्यायेण भवतु एवं मातृकापाठे पठितो ऽपि दीर्घऌकारो विवृतो न भवति । तस्योच्चारयितुं शक्यत्वेपि तुल्यास्यसूत्रस्थभाष्यकैयटप्रामाण्येन तस्य शास्त्राविधेयत्वात् । मान्त्रिक एकारस्तु उच्चारयितुमशक्यत्वान्नास्त्येवेत्याहुः । रेफात्परं भक्तेरिति । रेफाद्भक्तेः परं न तत्किंचिदपि व्यपदेष्टुमितितदर्थः एतद्भाष्येण तु रेफात्परतोप्यभक्तिरस्तीत्यागतम् । हयवरट्सूत्रस्थेति । एओङ्सूत्रस्थेत्युचितम् । तत्रैव तथा भाष्यदर्शनात् । न ऋकार ईषत्स्पृष्ट इति शेषः । नाप्यृतीति । ऌकारादितिशेषः । ऌकार ईषत्स्पृष्टः । विषयविशेष एव पूर्वस्य साधुत्वं विषयविशेष एवोत्तरस्य साधुत्वमिति व्यवस्थाङ्गीकारादेव । वस्तुत ऌकारपरत ऋकारस्य प्रयोगे न मानम् । उक्तव्यवस्थाङ्गीकारे प्रमाणमाह । अतएव । वार्तिके इत्यादिना संगच्छत इत्यन्तेन । अतएव । ह्रस्वऋकारद्वयेत्यादि व्यवस्थाङ्गीकारादेव अयनं यस्येति । स्फोटस्यायन आश्रयं इति षष्ठीतत्पुरुष इति केचित् । अन्यस्त दभावस्येति । अन्यो ऽवर्णो न स्पर्शेत्युक्तौ तदभावस्य स्पर्शेत्यर्थाल्लभ्यते इति भावः । देवत्रात इति । अत्र पक्षे नत्वं न । गलः, अत्र पक्षे लत्वाभावो न । ग्राहः, अत्रपक्षे ऽत्र् न । इति योगे सद्विधिः, सतृशानचोर्विधिः । मिथ एकैकस्मि-

शर्थे ते नत्वादिविधयो न विभाष्यन्ते न विकल्प्यन्ते किन्त्वर्थभेदेनैव भावाभावयोर्व्यवस्थेत्यर्थ । अप्रामाणिकत्वज्ञापनार्थमिति । वस्तुतो व्यवस्थितविभाषाया अगतिकगतिकत्वज्ञापनार्थम् । इद चेति । एवमेव विकल्पे प्राप्ते नित्यार्थविधयं समच्छन्ते । सामञ्जस्यमिति । नेति पाठे तु प्लुतप्रगृह्याणामिति षष्ठीनिर्देश स्यादिति भाव । प्लुतप्रगृह्या । जानुअस्येति । नन्वत्र स्थानिवत्त्वेन प्रगृह्यत्व वाच्यम् । तच्च दुर्घट नव्यमते तस्यात्वधर्मवृत्तित्वादिति चेत्सत्यम् । परादिवद्भावेनैव प्रगृह्यत्वाङ्गीकारात् । अपदान्तादाविति । आदिपदेन समासादौ । वातिनमिति । वक्तव्यपदाभावात्सूत्रत्वभ्रमवारणायेदम् । एतेनेति । पदान्तग्रहणानुवृत्त्यैवाच्छेदित्यादेर्व्यावर्तनेनेत्यर्थ । अपारतमिति । नचान्वार्थसमवसमाश्रयणीयेन चकारेणैव प्रकृतिभावनिवारणे पदान्तग्रहणानुवृत्तौ गौरवमिति वाच्यम् । दिव उदित्युत्तरार्थं तदनुवृत्तेरावश्यकत्वात् । अनन्तरस्येति न्यायेन पुनर्वृद्धिविधानस्य पररूपमात्रबाधकत्वाच्च । ईषदसमाप्तऋच्छको बहृच्छक इत्यर्थं तु पदान्तग्रहणस्यावश्यकत्वाच्च । उपलक्षणमिति । आयुष्मान्भव सौम्येति वाच्यो विप्रो भिवादने, इतिमनूक्ते । तर्भथीति प्रयोगे किं मूलमिति चेत् आयुष्मानेधीति भाष्योदाहरणमेवेत्यवेहि । स्मृतिविरिति । असौ नामाहमस्मीति स्व नाम परिकीर्तयेत्, इत्यादि मनुस्मृतिषु । अत्र नामपदं गोत्रस्याप्युपलक्षणम् । दशिडाहित्यादाविति । दशम्युत्तरकाल जातस्य पुत्रस्य नाम विदध्याद् घोषवदाद्यन्तरस्थमवृद्ध त्रिपुरुषानूकमनरिप्रतिष्ठितं तद्धि प्रतिष्ठिततम भवति द्व्यक्षर चतुरक्षर वा नाम कृत कुर्यान्न तद्धितमिति कल्पसूत्रे तद्धितान्तस्य नामत्वप्रतिषेधादिति भाव । दूराद्धूते च । दूरान्तिकार्थेभ्य इति प्रातिपदिकार्थमात्रे पञ्चमी ल्यब्लोपनिमित्ता वा । हैहेप्रयोगे । हैहेन्तस्येवेति । न च वाक्यस्य टेरित्यधिकारादन्तग्रहणवैयर्थ्यम् । तदभावे हैहेग्रहणस्यानन्यार्थतापात इत्याशयात् । एतच्च विषयमेवेति । प्रत्यभिवादे शूद्रे, गौरान्यविशेषा वेति वाच्य, दूराद्धूतेचेत्येतत्रविषयमित्यर्थ । वृचो सामामिति । प्रकृतसूत्रे चैत्र वृत्तिग्रन्थ प्रत्यभिवादे दूराद्धूतेत्यादिना य प्लुतो विहितस्तस्यैवाय स्थानिविशेष उच्यत इति । आदिना भो राजन्येत्यस्य सग्रह । अनुदात्त प्रश्नान्त इति सूत्रे नानेन प्लुतो विधीयते । किन्तु दूराद्धूतादिषु विहितस्य प्लुतस्यानुदात्तगुणमात्र विधीयत

इति । एतद्विहितानामेवेति । एतदभ्यनुज्ञातानामेवेत्यर्थः । पूर्वसूत्रिअन्येनास्य स्थानित्रिशेषमात्रलाभादिति बोध्यम् । त्रिपादीनप्रवर्ततइति । तन्यतासिस्वकरणात् । अप्लुतवदुपस्थिते । इतिवदेदिति । यत्तु प्लुतनिषेधस्य त्रिपादीस्थत्वेनासिद्धत्वात्प्लुतप्रगृह्या इति प्रकृतिभावे संहिताकार्यं न स्यात् । प्लुतनिषेधस्तु श्रवणार्थं स्यादिति तन्न । प्रकृतिभावदृष्ट्या प्लुतस्याश्रयासिद्धत्वेन तस्य च लक्ष्ये ऽदर्शनेन प्रकृतिभावाप्रवृत्तेः । न हि निषेधो न दृश्यत इत्येतावता तेन लक्ष्ये ऽप्रवृत्तिः प्लुतो लक्ष्ये स्तीति बुद्धिः प्रकृतिभावशास्त्रस्य संभवतीति । न च पर्युदासे ऽप्येतद्दूषणतौल्यम् । किं च प्लुतप्रकरणोत्तरं नोपस्थित इत्युक्ते संहितायामित्यस्य संबन्धो न स्यात्तेन च तयोर्व्यवहितत्वात् संहितायामित्यस्य संबन्धइति वाच्यम् । एवमपि पर्युदासे प्लुतस्योदात्तस्य स्थाने आन्तर्यादप्लुतादेश उदात्तो भवति नोपस्थित इत्युक्तौ उदात्तस्य श्रवणं न स्यादिति विशेषः । मन्मते संहितायां इत्यस्य संबन्धासंबन्धाभ्यां विशेषः । वत्करणे ऽप्युक्तन्यायेन पर्युदासमेव स्थिरीकृत्य शङ्कते । नचेति । परत्वादिति । प्लुतत्वप्रयुक्तप्रकृतिभावापवादत्वे ऽपि प्रगृह्यत्वप्रयुक्तप्रकृतिभावानपवादत्वाद्विप्रतिषेधोपपत्तिः । इदमयुक्तम् । शास्त्रातिदेशे दीर्घस्य परत्वभावात्कार्यातिदेशे ऽपि स्थानिवत्सूत्रे परिशीलित्यत्रोक्तानिर्देशात्तस्य तत्त्वाभावात् । अन्तरङ्गत्वादिति । इदमत्ययुक्तम् । न धातुलोप इति सूत्रे ऽन्तरङ्गनिषेधदृष्ट्या गुणस्यासिद्धत्वेनोपेद्ध इत्यादौ गुणः प्रवर्तत इति भाष्योक्तरीत्या प्रकृतिभावेन दीर्घबाधानापत्तेः किं च वत्करणाभावे ऽप्यप्लुतशब्देन प्लुतस्य स्थाने विहितस्य दीर्घस्योक्तदिशा वारणे वत्करणवैयर्थ्यं तदवस्थम् । वस्तुतस्तु प्रकृतिभावेन तु स्वापेक्षबहिरङ्गस्यापि निवृत्तिः । उपसर्गादृतीति सूत्रे धातावित्ति योगविभागेन पुनर्वृद्धिविधानात् ज्ञापकात् । तेन सुखार्त इत्यत्र पक्षे वृद्धिनिवृत्तिसिद्धेरिति एका दिक् । नशब्दपर्यादयालाभइति । इदमप्ययुक्तम् । अतः परस्मिन्निति वचृतीयादिषु भाषितपुंस्कमिति वच्चाप्लुतो यथाप्लुतकार्यं न प्रवर्त्तयति तथा प्लुतोपीत्यभावातिदेशाङ्गीकारेणोक्तार्थलाभसंभवात् । तदेतदभिप्रेत्य भगवद्भ्यां भाष्यकारवार्तिककाराभ्यामुक्तम् । वद्वचनं प्लुतकार्यप्रतिषेधार्थं, वद्वचनं क्रियते प्लुतकार्यप्रतिषेधार्थमिति । इद्देदिति । एकारस्य गङ्गे इत्येकमेवोदाहरणमुपन्यस्य पुनरुदाहरणान्तरोपन्यासस्य फलं वक्तुमवतारयति । एदन्तमिति । अथवा-

रचारिणि । अनादिति पर्युदासेनार्थवत एव ग्रहणादिति भाव । एतेनेदमदसोर-कारिति प्रतिषेधेन वर्णग्रहणे ऽर्थवत्परिभाषाया अप्रवृत्तिज्ञापनादिदमप्ययुक्तमित्य-पास्तम् पर्युदासपक्षे दोषमाशङ्क्य निराकरोति । वासुदेवेति । अमिति । अत्र प्रगृह्यत्वे ऽपि पदान्तत्वाभावेन प्रकृतिभावाप्रवृत्तेरयुक्तमेतत् । नचाप् इत एत इत्यत्र प्रकृतिभावापत्तिरित्याशय । अव्ययीभावस्य समासान्तरघटकत्वे विवादादि-ति केचित् । ए आ ई एतीत्यत्र प्रकृतिभावापत्तेरित्यन्ये । नानुपपन्नमिति । अन्ये त्वनादिति प्रसज्य प्रतिषेध एव यदयमनादिति प्रतिषेध शास्तीति प्रकृतसूत्रस्थभा-ष्यात्प्रतिषेधार्थीयमारम्भ इत्योत्सूत्रस्थभाष्याच्च प्रसज्य प्रतिषेध एवाय तेन आ ई ए इ अनेत्यत्र परादिवद्भावेन प्राप्तमपि प्रगृह्यत्व न गम्यमानप्रतिषेधाभिप्राय-कत्व नु न युक्त ओषु यात मरुत इत्यादौ परादिवद्भावेन प्राप्तप्रगृह्यत्वस्य निषेधकाभावेन प्रकृतिसाल्लभ्येन प्रतिषेधार्थीयमारम्भ ओषु यात मरुत इत्यादि भाष्यग्रन्थसदर्भासगते । न च प्रतिषेधार्थत्वे ओतश्चिप्रतिषेध इति वार्तिकानुत्थ-ानमिति वाच्यम् प्रतिषिद्धार्थाया आपे ओदन्तस्य प्रगृह्यसज्ञाया प्रतिबन्धका-भावनादौ भवतीत्यत्रापि प्राप्ते । ओत् । च्व्यन्तेनास्यप्रवृत्तिरिति । यद्यपि निपातपदेन चादिनामर्थवतामेवोपस्थितिरिति चायशे गौणमुख्यन्यायकार्य प्रवर्त-ताम । च्व्यन्ताशे तु न विशिष्टरूपोपादानमित्यर्थवद्ग्रहणपरिभाषागौणमुख्यन्यायर्योर्न प्रवृत्ति । च्व्यन्ते मुख्यार्थासभवश्च । तथापि चायशे विशिष्टरूपोपादानमात्रेण प्रवर्तमानगौणमुख्यन्यायो ऽमुख्यार्थके च्व्यन्ते प्रगृह्यसज्ञा व्यावर्तयति भाष्य-प्रामाण्यादित्याशय । अन्ये तु गोभनदित्यादर्थ ओतश्चिप्रत्ययप्रतिषेध इति वा-र्तिकमारब्धव्यमेव । तत्प्रत्याख्यानपर भाष्य त्वेकदेशिन । कपिशापादिना ऽगोरेव गौ समभवत्तत्र च्व्यन्ते मुख्यार्थस्यैव सत्त्वे निपातसज्ञाया गौणमुख्यन्या-येन वारणासभवात् । न च तत्रार्थे च्विरेव नेष्यत इति वाच्यम् । तथा सति सप्तोपसर्जनीभूता स्तु न सर्वादय इत्यादिवार्तिकभाष्यविरोधापत्ते । च्व्यन्ताशे विशिष्टरूपोपादानाभावेन मुख्यार्थासभवेन च गौणमुख्यन्यायस्याप्रवृत्त्यसभवाच्चे-त्याहु । निपातइतिकिमिति । मिथो इतीत्यत्र प्रगृह्यत्व माभूत् । यत्तु देवो-मीति प्रत्युदाहरण बृहच्छेखरे दत्त तन्न । अदो भवदित्यादाविव लक्षणप्रतिप-दोक्तपरिभाषया वारणसभवात् । व्रह्मबन्धविति । वेदे आपाद्यमानप्रयोगाभावेन

प्रगृह्यत्वस्य वैकल्पिकत्वेन चानार्ष इति व्यर्थमिति केचित्। तदधिकार्दमात्राकाल इति । ततो ऽप्यधिककालव्यवधानेनोच्चारणं तु अर्थबोधानुपयोगित्वाच्छिष्टसंप्रदायविरोधाच्च हेयमेवेति भावः । उञः । निपातएवेति । न तु प्रत्याहारः । उदित्येव वक्तव्ये ञकारोच्चारणसामर्थ्येन क्विबन्तस्य कृतसंप्रसारणस्य वेञइति शब्दपरत्वे ऽपि न प्रगृह्यत्वस्योपयोगः लुक्प्रवृत्तेः । नाप्युआदेशः । लुगन्तस्यानिर्दिश्यमानत्वात् । भावाभावादिति । इदमयुक्तम् । उञ इत्यस्यावृत्त्या स्थानषष्ठ्यन्तत्वस्य वाच्यवाचकभावसम्बन्धार्थकत्वकल्पने गौरवेण प्रथमान्तार्थे ऽस्याभेदेनान्वयस्य क्लृप्तत्वेन च विधेयविशेषणत्वस्यैवोचितत्वात् । स्पष्टमेव लभ्यत इति । अन्ये तु योगविभागाभावे प्रगृह्यत्वस्योमादेशस्य च शाकल्पमतेन युगपत्प्रवृत्तौ तन्मते ऊँ इतीति रूपं तदन्यमते उ इति प्रगृह्यत्वस्य निपात एकाजनाङिति सामान्यशास्त्रप्रणयनेन तदन्यमते ऽपि सत्त्वनिश्चयेन स्मृत्यन्तरानुसन्धानद्वारा प्रगृह्यत्वांशे विकल्पासंभवेनादेशांश एव स्मृत्यन्तरानुसन्धानद्वारा विकल्पपर्यवसानापत्तेः । यथा ऋतो भारद्वाजस्येत्यस्याचस्तास्वदिति सामान्यशास्त्रप्रणयनेन क्वचन्ने स्मृत्यन्तरानुसन्धानद्वारा नेड्विकल्पबोधकत्वम् । न च प्रगृह्यपदानुवृत्तिवैयर्थ्यं तस्योत्तरत्रानुवृत्त्यर्थत्वेनोपपत्तेः । तथा चैकयोगत्वे शाकल्पमते ऊँ इत्येकमेव स्यात् । तदेतदुक्तं भाष्ये । शाकल्पस्य चाचार्यस्य मतेन ऊँ इति विभाषा यथा स्यात् ऊँइति उइतीति । तदन्यमतेन निपातएकाजिति नित्यं प्रगृह्यत्वात् उइतीति स्यात् । तदेतदुक्तं भाष्ये । अन्येषामाचार्याणां मतेन वितीति । योगविभागेन उञ इत्यनेन प्रगृह्यत्वस्य शाकल्पमते विधानेन योगविभागेन सिद्धप्रगृह्यसंज्ञाविज्ञानसामर्थ्यात्स्मृत्यन्तरानुसन्धानद्वारा सामान्यशास्त्रसत्त्वे ऽपि प्रगृह्यत्वांशे विकल्पः सिध्यति । द्वितीययोगेन तु सति प्रगृह्यत्वे एवादेशविकल्पः । तत्रापि शाकल्पग्रहणानुवृत्तिसामर्थ्यात् । ननु शाकल्पग्रहणानुवृत्तिः सति प्रगृह्यत्वे एवादेशो यथास्यान्न त्वप्रगृह्यत्वे इत्येवमर्थः स्यात् न स्यादीर्घोच्चारणसामर्थ्येन प्रगृह्यपदानुवृत्तिसामर्थ्येन च सत्येव प्रगृह्यत्वे आदेशकल्पनासंभवात् । तस्माद् द्वितीययोगे शाकल्पानुवृत्तिः सति प्रगृह्यत्वे आदेशविकल्पार्थैव तत्त्वमित्याहुः । दीर्घोच्चारणवैयर्थ्यापत्तिश्चेति । असंहितायां तस्य चारितार्थ्याच्चिन्त्यमेतदिति केचित् । विकल्पद्वयमनन्वर्षीति ।

शाकल्यपदसबन्धे प्रगृह्यपदस्यार्थसंबन्धे- इत्यर्थः । अर्थाद्विकारादिति । इदमयुक्तम् । उञिति पदस्याप्रगृह्यत्वे शक्यभावात् । तस्मात्प्रगृह्यस्यादेशे योगविभागनैयर्थ्यापत्तेः । अप्रगृह्यस्यैवादेश इति वक्तु युक्तम् । विचारयन्त्विति । इदमयुक्तमित्युक्तम् । मयूरव्यंसकादित्वादाराइति । न तु धातु । वैजात्येति । तच्च तदन्तविधिसंज्ञापकत्तम् । न चेरयारभ्येतीत्यन्त इत्येको ग्रन्थ । अनभिधानमिति । नचास्तीदूतौ सप्तमीति प्रकृतसूत्रस्थभाष्यादिति भाव । आधेयार्थे वृत्तिरिति । एकार्थीभावपक्षेन समासे वायधिदस्य वाच्याधिकरणकाथस्यार्थोपस्थितिजनकत्वादितिभाव । समासे जहत्स्वार्थायामिति । जहत्स्वार्था तु तत्रैव यत्र स्वार्थविरोधिनीति, भाव । मानाभाव इति । न च नामार्थयोरभेदान्वय इति व्युत्पत्तिभङ्ग गौरीपदार्थाधिकरणत्वस्य भेदसबन्धेनाधिश्रयणे ऽन्वयाङ्गीकारात् । तथा च लक्षणा ऽवश्यकीति चेन्न । दधि पश्येत्यादिवदुपपत्तेः । न च तत्रेवात्रापि विभक्तिस्मरणेन शाब्दबोधे सप्तम्यर्थे पर्यवसन्नत्व दुरुपपादम् । न चाधिश्रयणक्रियायामेव गौरीपदबोध्याधिकरणत्वान्वय इति बृहच्छेखरोक्त युक्तम् । नामार्थधात्वर्थयोरपि साक्षाद्भेदेनान्वयस्याव्युत्पन्नत्वादितिवाच्यम् । आधेयार्थोपस्थापकत्वे सति सप्तम्यर्थोपस्थितिजनकत्वस्य सप्तम्यर्थपर्यवसन्नशब्दार्थत्वात् । मत्पक्षे च लुप्तविभक्तिस्मृतिहेतुत्वेन गौरीपदस्यैव सप्तम्यर्थोपस्थितिजनकत्वात् । पञ्चकं प्रातिपदिकार्थ इति पक्षे गौरीपदस्यैवाधिकरणशक्त्युपस्थापकत्वाद्वा । पुन प्रवृत्ताविति । कार्यकालपक्षाश्रयणेन तु न निर्वाह । अणो ऽप्रगृह्यस्येत्येतदेशस्याप्रगृह्यसंज्ञाद्दष्ट्या प्लुतस्यासिद्धत्वेन प्रगृह्यसंज्ञानापत्ते । इत्याचार्यवैद्यनाथोपाह्वसूनुनात्रैलोक्यनाथरविकृतमहाभाष्यप्रदीपोद्योतव्याख्यायां स्वरसन्धिः समाप्तिमियात् ॥

स्तोःश्चुनाश्चु । पदस्येत्यधिकृत्येति । इदमयुक्तम् । अपदान्तस्य मूर्धन्य इत प्रागेवैतद्विकारसमासेः । सत्सन्तेऽपि पा ड सी त्यादाविव , वैय्यधिकरण्येनान्वये ऽदोषाच्च । शादिति ज्ञापकादिति । विश्नमाचष्टे विश्न इतीत्यदौ सद्भुत्यन्ते, पदान्ते शात्परतवर्गसमवेतेदमप्ययुक्तमिति केचित् । वैचित्र्यार्थइति । , जश्त्वचर्त्वयो प्रवृत्तिमन्तरेण क्वचिद्दित्यादिसिद्धिरिति वैचित्र्यम् । निर्देशादिति । न च तत्र एव श्चुत्वाभावसिद्धौ शादिति व्यर्थम् । विश्नार्थत्वात् । यत्तु नासिकास्थानाधिक्येन तोरित्यादिना पवमाग्रहणमाशङ्क्य शादिति निषेधाच्छङ्काशुन्यास्यसूत्रे , नामिवास्थानभिन्न तालव्यादिस्थान गृह्यत इति कश्चिदुक्तवान् तन्न । जश्त्व ऽनिषाग्रेपे-

स्यादौ इत्त्वनिषेधाय शादित्यस्यावश्यकत्वात् । दिक्संख्ये सञ्ज्ञायामिति निय-
मादाह । स्पष्टार्थमिति । पडर्थिकेति । समर्थसूत्रस्थकैयटरीत्या पदान्तविधित्वमेव
न पदविधित्वमिति बोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थमिति केचित् । यरोऽनुना ।
सवर्णानस्तीति । एतदुत्तरमाहुरिति शेषः । अन्ये तु तुल्यास्यप्रयत्नमिति सूत्रं
यस्मात्प्रत्ययविधिरिति यत् तत्रानुनासिको विधीयते तत्र तुल्यास्यमित्युपतिष्ठत
इत्यर्थकतया परिभाषात्वमपि अनुनासिकपदानुवृत्तेः । अनुस्वारस्य यर्यन्यत्र
च मण्डूकप्लुत्या ऽनुनासिकपदमनुवर्तने तेन चतुर्मुखः कुण्डं रथेनेत्यादौ न दोषः ।
न च महिम्नानित्यत्र णकारस्य ऋकारापत्तिः । तस्य णकारेण सूक्ष्मत्वे स्थानप्रयत्ना-
भ्यामभ्याधिकेति वाच्यम् । भाष्यमते प्रयत्नभेदेनादोषात् । अत्वनिवारणाय स्थानिवत्त्व-
प्रवृत्तेरावश्यकतया नैवानुनासिकवारणसंभवाच्च । न च रेफे सानुनासिके परस्य प्रयत्न-
प्रसंग इति वाच्यम् । तस्य सानुनासिकत्वे मानाभावात् । यद्वा कैयटोक्तरीत्या स्था-
नेऽन्तरतमपरिभाषोपस्थानाद् दोषाभावः । न च रेफे स्थानप्रयत्नाभ्यामन्तरतमस्य ता-
भ्यामनन्तरतमस्य चाप्राप्त्या ऽन्तरतमपरिभाषाया अनुपस्थितिरिति वाच्यम् ।
व्यक्तिपक्षे प्रतिलक्ष्यमन्तरतमानन्तरतमयोः प्राप्तावेव तदुपस्थितावपि जातिपक्षे
कतिपयलक्ष्येषु तयोः प्राप्तिमात्रेणान्तरतमपरिभाषोपस्थानस्य दुर्वारत्वात् । णका-
रस्य स्थानेन रेफान्तर्येऽपि आभ्यन्तरप्रयत्नेन तदभावान्नान्तरतमत्वं स्थानप्रयत्नाभ्या-
मान्तर्यं हि अन्तरतमत्वम् । एवं कुण्डं रथेनेत्यत्रापि अनुस्वारस्य स्थाने न रेफः ।
रेफस्यानुस्वारेण स्थानसाम्याभावेनान्तर्याभावात् । तथा चायं निष्कर्षः । यत्र स्था-
नप्रयत्नाद्यनेकधर्मकृतान्तर्यसंभवस्तत्र शास्त्रे तमप्प्रत्ययघटितमन्तरतम इत्युपतिष्ठते ।
यत्र त्वेकैकधर्ममात्रकृतान्तर्यसंभवस्तत्र तमब्रहितमन्तर इत्युपतिष्ठते । यत्र तस्या-
प्यसंभवस्तत्र नोपतिष्ठत एव परिभाषा । नचैवं नेतेत्यादावेव गुणः स्यान्न चेते-
त्यादाविति वाच्यम् । एकारस्य प्रमाणत इकारान्तर्याभावेऽपि स्थानप्रयत्नाभ्यामि-
कारान्तर्येणान्तरतमत्वान्नत्या ऽदोषात् । न हि सर्वैरान्तर्यं तमबर्थः किं तु स्थान-
प्रयत्नाभ्यामपि । नचैवं ह्रस्वकार एव चणस्यान्न दीर्घे तस्य स्थानप्रमाणाभ्या-
मान्तर्येण तमप्प्रत्ययघटितपरिभाषोपस्थितेः । एवं पट् सज्जंतीत्यादौ पत्वोर्निस्त्वा-
नापत्तिः । स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे जन्त्वनापत्तेराख्यानात् । एवं पाहनतीत्या-
दौ झयो हः इति पूर्वसवर्णानापत्तिः । स्थानप्रयत्नाभ्यामन्तरतमे वाग्घरिरित्यादौ

तस्य चारितार्थ्यादिति वाच्यम् । रवादिभ्य इति निर्देशेन झयूप्रत्याहारपरित्या-
गेन हल्प्रत्याहाराश्रयणेन व्याख्यानेन च तत्र व्यक्तिपक्षाश्रयणेनादोषात् । तत्र
पक्षे दीर्घादिव्यक्तिष्वन्तरतमानन्तरतमयोरसम्भवेन सकलाङ्गसहिताया उक्तपरिभाषाया
अनुपस्थिते । सवर्णग्रहणापकर्षस्तु न रेफोष्मणा सवर्णा न सन्तीति भाष्याभिप्रेत ।
तत्र तत्र प्रत्ययादित्युभयो शेष इत्यादिभाष्येणापकर्षस्य भाष्यकारासम्मतत्वावग-
मात् । दूरेतरा बहुसूत्रैर्व्यवहिते ऽपकर्षो दृष्टनमित्यादौ उक्तरीत्या परसवर्णवार-
णमभवात् । यथोति न कर्तव्यमित्याशयेन रेफोष्मणामिति भाष्ये ऊष्मग्रहणमि-
त्याह । प्राचुर्यस्य स्वसमानाधिकरणस्वसजातीयान्यत्वसापेक्षत्वनियमादाह । स्वा
र्थिकइति । वस्तुतस्तु प्रचुरप्रकाशो रविरित्यादौ उक्तनियमव्यभिचारात्प्राचुर्येपि
मयट् सूपपाद । समानाधिकरण्यमिति । प्राचुर्यं मयटि त्वन्नमयो यज्ञ इत्यादा-
वन्नयज्ञयोरिव चिद्ब्रह्मणो भेद एव स्यान्नाभेदरूप सामानाधिकरण्यमित्यर्थ ।
हलो यमा यमीति सूत्रे इति । हलो यमां यमीति सूत्रे ऽस्माभिरुक्ते इत्यर्थ । एतेन
हलो यमा यमीति सूत्रस्य भाष्यकृता ऽनुपादानादिदमसङ्गतमित्यपास्तम् । नादि-
न्याक्रोश इत्युत्तरं क्रमेणोद् स्थास्तम्भो, शश्छोटि, अभ्यासेचर्च, झरोझरीति सूत्रा-
णा भाष्यकृतोपादानात्तथा पाठो भाष्यकृत्सम्मत इति भाव । ज्ञापनादिति ।
व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषाभावात्पूर्वत्रासिद्धमाद्विर्वचन इति द्वित्व-
दृष्ट्या पूर्वसवर्णस्य सिद्धत्वात्परत्वात्पूर्वसवर्णप्रवृत्त्या सकृद्गतिन्यायेन पश्चात्
द्वित्वाप्राप्तौ द्वितकारस्य रूपस्य लोपपूर्वसवर्णयोरविशेषादेति भाव । अनुस्वारस्य
यथि । ननु शकारसवर्ण इकार प्रसिद्ध इत्याशङ्क्याह । प्रयत्नभेदेनेति । यथा
सङ्ख्यमनु । सङ्ख्या सङ्ख्यान गणनमुच्यते ऽनुदेशशब्दस्य सम्बन्धिशब्दत्वादुद्देश्य
आक्षिप्तस्तेनायमर्थ । समाना समसङ्ख्याना मध्ये यथागणन उद्देशिभि सहानुदेशिन
सम्बध्यन्ते इति कैयटोक्त तु न युक्तं समूलाकृतजीरेषु, हलो यमामित्यादो उद्देश्या
नामपि परस्पर यथासङ्ख्यस्येष्टत्वादित्यभिप्रेत्याह । सम्यक् स्थानामिति । वस्तुतस्तु
कैयटोक्तार्थ एव युक्त । सर्वस्योद्देश्यस्य सर्वानुदेश प्राप्नोतीति यथासङ्ख्यसूत्र-
स्थ भाष्यस्वरसादनुदेशपदस्याजहत्स्वार्थलक्षणया विधेयतदन्वय्युभयपरत्वान्नोक्तस्थलेषु
दोष । सम्बन्धो येनेति सम्बन्ध इत्यपपाठ । पदक्षीनि पदादुपस्थितिर्येति । आद्य-
स्योदाहरण । समूलाकृत्येत्यादि । द्वितीयोदाहरण परस्मै पदानामित्यादि । स्थाना-

स्येति । स्थानमत्र क्रमः । स्थानाच्चेति । तिसंयोगादिति सूत्रे आध्वरमीमांसकै-स्तथैव व्याख्यातत्वात् । एतेन स्थानमधिष्ठानमित्याभिमेत्य यत्पाठकेनोक्तं तच्च स्थानेन्तरतमसूत्रे यान्येतानि संवृष्टकानि भवन्ति तान्यन्योन्यं पश्यन्ति शब्दं कुर्वन्ति एवं तावत् चेतनावत्सु अचेतनेष्वपि लोष्टक्षिप्तवायुवेगं गत्वा नैव तिर्यग्गच्छति नचोर्ध्वमारोहति पृथिवीविकारः पृथ्वीमेव गच्छतीत्यादिना सूत्रप्रत्याख्यानाया-नेकधा प्रदर्शितमिति तत्पूर्वमीमांसाऽनध्ययनविजृम्भितमिति स्पष्टमेव । लौकिकेति । शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जयेत्यादौ लोके क्रमेणान्वयदर्शनादिति भावः । परस्मैपदानामित्यादि । परस्मैपदानामित्यत्र क्रमेण नोद्देश्यवाचकपदाना-मुपादानं नापि परस्मैपदपदादुद्देश्यानां क्रमेणोपस्थितिःकिन्तु युगपदेव सर्वे संज्ञिनः प्रत्याय्यन्त इति न स्थानाख्यलौकिकप्रामाण्याद्व्यवस्थासंभवः । एवं द्वन्द्वेन क्रमेणा-न्वयः । तथान्वये द्वन्द्वस्यैवासाधुत्वात्सहविवक्षायां तस्य विधानात् । ननूक्तपरि-भाषयापि कथमत्र व्यवस्था येन क्रमेण पदज्ञानं पदादुपस्थितिर्वेत्युक्तपरिभाषार्थस्यो-क्तरीत्या परस्मैपदानामित्यत्रासंभवात् । एवमेचो ऽयवायाव इत्यत्रापि । एतेन पदादुपस्थितिरित्यस्य परस्मैपदानामित्युदाहरणमित्यपास्तम् । किं च परस्मैपद-शब्देन तिबादीनामिव शतृक्वसोरुपस्थित्या न संख्यासाम्यम् । आद्यन्तौ टकिता-वित्यत्रापि ययोरर्थयोराद्यन्ताभ्यां क्रमेणान्वयो न तयोः क्रमेणोपस्थितिः । नापि तद् बोधकपदयोः क्रमेणोपादानं टित्किताविल्युक्तेः । तयोः क्रमेणोपादानं टकारककारयोर्न तयोराद्यन्ताभ्यां क्रमेण संबन्ध इति चेत्सत्यं कैयटोक्तार्थाश्रयणे-नादोषात् । तथा हि लादेशानां परस्मैपदसंज्ञाविधानेन तज्ज्ञानार्थं तिबादिसूत्रानु-सन्धाने तत्र परस्मैपदानां तिबादीनां गणना क्रमेणोद्देश्यानुद्देशिनोः संबन्धाङ्गी-कारात् । शतृक्वसोः परस्मैपदत्वेपि असंनिहितत्वात्संनिहितानां तिबादीनां च नवत्वात्संख्यासाम्योपपत्तिः । आद्यन्तावित्यत्रापि टकारस्य प्रथमोपादानात्तद्घटि-तस्य टितः प्रथमं गणना पश्चात्कित इति गणना क्रमेणैव संबन्धः । असहविवक्षा-यामपि द्वन्द्वस्य साधुत्वं च । नव्यमते ऽपि तिबादिसूत्रस्थक्रममादाय परस्मैपदाना-मित्यत्र टित्किद्घटकटकारककारयोः क्रमेणोपादानमादायाद्यन्तौ टकितावित्यत्र च यथासंख्यशास्त्रप्रवृत्तिः कथं चिदुपपादनीया । यथासंख्येनान्वयइति । संख्यानतिक्रमस्य करणत्वविवक्षया तृतीयेति केचित् । संख्यामनतिक्रम्यान्वयबोध

इत्यर्थस्याविवक्षितत्वेन तृतीयार्थस्यानुपयोगेनान्वयासम्भवेन चायुक्तमेतदित्यन्ये । भाष्ये तु सख्यानानुदेशइत्युक्तम् । तस्यार्थः सख्यातं गणितं तत् क्रमेणानुदेशो विधिरित्यर्थः । अनुकृष्यतइति । तथा च यत्र स्वरितेन युक्तं शब्दस्वरूपं तत्रैव यथासख्यशास्त्रं प्रवर्तते इत्यर्थः ।। नन्वेवमप्यनुदात्तङित आत्मनेपदमित्यादौ सख्यानानुदेशो दुर्वार आत्मनेपदशब्दे उत्तरत्रानुवृत्त्यर्थं स्वरितत्वस्यावश्यकत्वादिति चेन्न । ययोर्यथासख्यमन्वयस्तयोर्द्वयोरपि स्वरितत्वसत्त्वे एवैतच्छास्त्रप्रवृत्त्या ऽनुदात्तशब्दे तदभावेनादोषात् । स्यत्यादित्यादाविति । नन्वत्र ययोरन्वये स्यत्यययोरकारस्य च तयोः सख्यासाम्य ययोश्च सख्यासाम्य स्यत्ययोर्डपि इसोश्च न तयोस्साक्षादन्वय इति न सख्यातानुदेशः प्राप्नोति। एवमेवानुदात्तङित, रदाभ्यां निष्ठा, श्नसोरल्लोप, इसिहमोश्च, विदिभिदिछिदे कुरच्, अयेत् स्त्री, रोपधेतोः, क्रतुयजेभ्यश्चेत्यादावपि न सख्यानानुदेशः । अनुदात्तङित इत्यस्य लस्येत्यनेन रदाभ्यामित्यस्य त इत्यनेन सार्वधातुक इत्यस्यात इत्यनेन इसिहमोरित्यस्यातीत्यनेन ताच्छीलादीनां कुरच् करणाधिकरणयोरित्यस्य घञा पथिदूतयोरित्यस्य उभा व्याख्यानमनयोस्तु साक्षादन्वयादिति चेन्न । परपरासम्बन्धेप्यस्य प्रवृत्तेः । अन्यथा समूलाकृतजीवेषु ण्यतासील्ल्लुटोरित्यत्रापि एतदप्रवृत्त्यापत्तेः । तत्र हि ल्लुटोरित्यस्य धातोरित्यनेन समूलादीनां च णमुला साक्षादन्वय इत्याशयात् । इदं च व्यक्तिभेदे ऽपि धर्मसाम्यमात्रेण प्रवर्तते । तेन स्यतासील्ल्लुटो नन्दिग्रहेपचादिभ्य इत्यादौ सख्यातानुदेशः सिद्ध्यति । ल्लुटोर्नन्यादीनां भेदेपि ल्लत्वनन्यादित्वरूपधर्मसाम्यात् भाष्ये स्पष्टमिति । तत्र हीत्थं भाष्यम् । किमर्थमिमावनुनासिकावुभावनुबध्येते न अकार एवानुबाध्येत कथं ङमो ह्रस्वादचीति एतदप्यस्तु जकारेण नैव शक्यं झकारभकारयोरपि पदान्तयोर्झिकारभकारौ आगमौ स्याताम् । न झकारभकारौ पदान्तौ स्त एवमपि पश्चागमास्त्रय आगमिनो वैषम्यात्सख्यातानुदेशो न प्राप्नोति । सन्तु तावदेषामागमानामागमिन सन्ति झकारभकारौ पदान्तौ न स्तः इति कृत्वा आगमावपि न भविष्यत इति । नित्यानुनासिकापत्तेरिति । ननु तद्वानित्यत्र नानुनासिकः कण्ठावच्छिन्नवायुसयोगेनोत्पन्नेषु नासावच्छिन्नवायुसयोगेन तद्द्रूपधर्मोत्पत्तेरित्यादिस्वग्रन्थपर्यालोचनया वकारस्य नासिकास्थानत्वाभावेन मुखसहितनासिकयोच्चार्यमाणवर्णत्वाभावात्

अनुनासिकसंज्ञाया अभावादननुनासिकादिप्रत्ययपरत्वाभावेन च कथमनुनासिका-पत्तिः। आद्ये ऽनुनासिको नानुनासिक इत्यादौ तु लोकसिद्धानुनासिक्यगुणस्यैव विधानमिति न कश्चिद्दोष इति चेत्सत्यम्। वर्णमात्रस्य नासावच्छिन्नवायुसंयोगेनानुत्पत्तावप्यानुनासिक्यगुणविशिष्टस्य तथात्वेनानुनासिकसंज्ञेत्याशयेनास्य कथं विधेयत्वात्। एतत्सामर्थ्यादिति। इदयमुक्तम्। अप्सरा वत्सा इत्यादावेतस्य चारितार्थ्यात्। तत्र हि अपूर्वात्सर्ते रसिः वदेः सः ततश्चत्वे एव सस्य सिद्धत्वाश्रयणेनैतस्य प्रवृत्तेः। तयोरव्युत्पन्नत्वेपि क्षारि चेत्येतदपवादत्वादेवास्मिन्नर्थे न तस्य प्रवृत्तिः। ऊर्ध्वोऽयमूर्ध्वपरम्। इमोऽह्रस्वादचि। आवृत्त्येति। इदमयुक्तम्। इमंशे पदस्येत्यस्य वैय्यधिकरण्येनान्वये ऽनुपयोग्। पदाधिकारस्य विशेषत्वादिति भाष्यं तु अधिकारप्राप्तस्य त्यागायोगात्तत्परत्वकतया ऽन्वयप्रदर्शनपरम्। वस्तुतस्तु पदस्येति विशेषणस्य प्रयोजनं वक्ष्यामः। उभयोः सप्तम्यन्तत्वे एवेति। इदमप्ययुक्तम्। तीपमेहेत्यादौ तदादिविध्यनापत्तेः। इःसो त्यादौपदाधिकारस्य विशेषणत्वेन लिट्स्वित्यादौ धुट्सिद्धावरयार्थस्यानुपयोगाच्च। वलादेरित्यादिग्रहणं त्वचि श्नु इति वत् वच्मि परम आर्धधातुकस्येत्यर्थप्रतीतिनिवारणाय पदस्येधिकृतस्यानुवृत्त्यैव निर्वाहे भाष्यकारीयमण्डूकप्लुतया अत्रि च पदे इत्यतः पदे इत्यस्यानुवृत्त्याश्रयणं तु ङम इत्यस्य षष्ठ्यन्तत्वाश्रयणेनाजादौ पदे ङमो ङमुडित्यर्थाभिप्रायकं ङम इत्यस्य पञ्चम्यन्तत्वे हि अचीत्यस्य षष्ठ्यन्तत्वकल्पना स्यात्। अजादेः पदस्य ङमुडित्यर्थे तु प्रत्यगर्थ इत्यादौ समासे ङमुडापत्तिः। आद्यन्तौ टकितावित्येतदेकवाक्यतया ऽस्यापि पदादिविधित्वात्। अपदादिविधावित्यत्रापपदविभक्तेरिति न्यायेन कर्मषष्ठीत्वस्यैवापत्तेः। कार्यित्वमिति। पदत्व इत्यस्य पदत्वप्रयुक्ते कार्ये इत्यर्थ इति भावः। इदमुपलक्षणम्। अपदादिविधाविति पर्युदासेन पदान्तविधावेवेतत्प्रवृत्तेः। ननु पूर्वदण्डिप्रिय इत्यादौ नलोपाभावस्यैकेन मध्यमत्वानाक्रान्त इति विशेषणेनैव मापकुम्भवापेनेत्यत्र पदव्यवायेपीति निषेधः सिध्यतीति उत्तरपदस्य यत्र कार्यित्वमित्यर्थाश्रयणं व्यर्थमिति चेदत्राहुः। यणादिपरमिति निर्देशेन मध्यमत्वानाक्रान्तेत्यस्य पूर्वपदाघटकत्वविशिष्टे यन्मध्यमत्वं तदनाक्रान्ते इत्यर्थः। तत्फले तु प्रत्यङ्ङर्थसत्तामित्यादौ न ङमुट्। एवं च मापकुम्भस्य वाप इति विग्रहे पूर्वपदाघटकत्वविशिष्टमध्यमत्वानाक्रान्तत्वस्य कुम्भपदे

मरेण प्रत्ययलक्षणनिषेधवारणायोत्तरपदस्य यत्र कार्यित्वमित्यर्थ आवश्यक इति। नचैवमुक्तवार्तिकप्रत्याख्यानेन फलभेद इति वाच्यम् । तत्पक्षेपि यणादिपरमिति निर्देशेन प्रत्ययार्थकृतमित्यादौ ङमुडभावकल्पनात् । नचैवं कर्मधारयपूर्वपदके परमदण्डिप्रिय इत्यादिबहुव्रीहौ नलोपानापत्तिरिति वाच्यम् । परमदण्डीति समुदायगतपदत्वमादाय तत्सिद्धेः । न च पदव्यवाये पीत्यत्र पदपद- पदत्वयोग्यग्रम् । न पदान्तेत्यादौ तथैव स्वेन व्याख्यातत्वात् । तथा च कार्यित्वनिवेशो व्यर्थ इति वाच्यम् । पदत्वयोग्यत्वं यदि प्रातिपदिकसंज्ञकत्वम् । पिब भवेति यस्यां क्रियायां पिबभवा सुन्दरा पिब भवा येषा सुन्दराणां पिबभवानामित्यादौ पिबेरप्रादेः प्रातिपदिकत्वाभावेन पदव्यवायेपीति निषेधानापत्तेः । यदि च प्रातिपदिकत्वतिङन्तत्वैतदन्यतराश्रयत्वं तदा गौरवम् । माषकुम्भवापेनेत्यत्र गतिकारकोपपदानामित्यस्यानित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासाश्रयणेन पदपदस्य पदत्वयोग्यार्थकत्वाभावेपि न दोषः । स्पष्टीभविष्यति चैतत्सर्वं समासप्रकरणे शेखरे । सौत्रो निर्देश इति । यत्तु तयोर्य्वावचि संहितायामिति संहिताधिकारस्य प्रक्रान्तत्वेपि वाक्ये च संहिताया वैवक्षिकत्वेन ङमुडभावोपपत्तौ इदमसङ्गतमिति तन्न । वाक्ये संहिताया वैवक्षिकत्वेपि संहिताधिकारस्थकार्याघटितनिर्देशस्य प्रायशो ऽनुपलम्भेन संहिताया निर्देशप्रयोजनाभावेन च संहिताया अविवक्षाकल्पनायोगात् । तथैवमजादौ पदे ङमो ङमुडित्यर्थे समासमते प्रत्यङर्थ इत्यत्र ङमुडापत्तिः । उत्तरपदस्य कार्यित्वाभावेन प्रत्ययलक्षणनिषेधादिति वाच्यम् । उणादयो बहुलमिति निर्देशेन ङमुटि उत्तरपदस्य कार्यित्वे ऽपि प्रत्ययलक्षणनिषेधाश्रयणात् । अन्ये तूणादयो बहुलं, यणादिपरं, सनाशसभिक्ष उ इत्यादिनिर्देशैर् ङमुटो ऽनित्यत्वं ज्ञाप्यते । तेनाणादिमस्त्रार्थानि, अप्लुतकार्यं यशादिकं करोति, यदन्तवाक्रियेत्यादिप्रयोगाणां सिद्धिः । नपदान्त, सोपदादौ, पदव्यवायेपीत्यादौ पदपदं पदत्वयोग्यपरं यद्वा गतिकारकोपपदानामित्यस्यानित्यत्वेन सुबन्तेनैवासमासाङ्गीकारान् पदपदं यथाश्रुतार्थकमेव । उत्तरपदस्य कार्यित्वं एवेति निर्देशस्तु प्रकृतसूत्रस्थभाष्यविरुद्ध इति माषकुम्भ इत्यादौ न दोष इत्याहुः ।
ननु गणेशो वनेश इत्यादौ असमासे ङमुट् दुर्वारः । परादिवद्भावेनेश इत्यस्याजादिपरत्वात् ङम पञ्चाच । न च पञ्चमीसमासाश्रयणे न स्या स्थानिवद्भाव ।

पूर्वत्रासिद्धे न स्थानिवदिति तन्निषेधात् । न च त्रिपाद्यां नान्तादिवद्भावः । श्री-रपैरेत्यायसिद्धारीति चेन्न । पदाऽवयवहमो ऽभावेनादोषात् । न च पूर्वान्तवद्भावे-नैकारान्तस्य पदत्वम् । उभयत आश्रयणेनान्तादिवदिति निषेधात् । तस्य पौर्वा-पर्याश्रयणकृत्ते ऽपि पदेत्यस्यावृत्त्या ऽजादौ परे यत्पदं तदवयवस्य ङमः पदे परतो ङमुडित्यर्थाश्रयणेनोक्तनिषेधप्रवृत्तेः सुलभत्वात् । पदावयवङमः परस्याजादेः पदे ङमिति व्याख्यानेऽपि यथाकथंचिदत्र ङम् विशेषणस्य पदस्य विशेष्यपदस्य विशेष्यपदभिन्नस्यैव ग्रहणेनादोषात् । एतेन ङमःपदस्येति विशेषणं व्यर्थमित्यपा-स्तम् । नचैकदेशविकृतन्यायेन नान्तस्य पदत्वम् । अनच्क इन्द्रः सम्पन्न इत्या-दिभाष्यप्रामाण्येन समासान्त इत्यादिनिर्देशेन चैकदेशराहिते एकदेशविकृतन्यायेन पदत्वायप्रवृत्तेः । तेन वनान्तः सान्तं इत्यादौ नलोपकत्वादि न । अत्रानुनासि-कं । अत्रएवेति । अत्रेत्यनेन रुप्रकरणस्यैव ग्रहणं न तु रोरेवेति हेतोरेवेत्यर्थः । न च समःसुटीत्यादिना रोर्विधानेत्रेत्यनेन रोग्रहणसंविधानेपि तस्यैवेति रुप्रकरणग्र-हणेनेदं तत्साधकमिति वाच्यम् । समःसुटीत्यत्र सकारप्रश्लेषपक्षेपि दीर्घादटीत्यनेन रोरेव विधेयत्वात् । अन्यथा महाँ इ इत्यत्र सत्वस्यासिद्धत्वादप्रवृत्तौ रूपासिद्धेः । वस्तुतस्तु सकारप्रश्लेषपक्षे ऽत्रेत्यस्य सप्रकरणइत्येवार्थो न तु रुप्रकरणे इति । कानाम्रेडित इत्यत्र रुप्रकरणस्य विच्छिन्नत्वेन तद्विषये ऽनुनासिकापत्तेः । अधि-कारपक्षे रोः पूर्वस्येत्यर्थो ऽसंभवी पूर्वस्य नित्यं रुत्वं पूर्वस्य तु वा नुनासिक इत्युक्तरीत्या रुणा सहैवानुनासिकविधानकाले रोरभावादत आह । रोःपूर्वस्येत्य-स्येति । अनवयवएवेति । आगमत्वं च प्रत्ययादेशभिन्नत्वे सति साक्षाच्छब्दसं-स्कारकतया शास्त्रविहितत्वम् । एवमत्र नश्वाभ्यामिसूत्रविहितयोरप्यनवयवत्वम् । नश्वाभ्यामिति पञ्चमीनिर्देशेन पूर्वशब्दस्य तत्रावयववाचित्वाभावात् । तेन इश्च अच् च गर्जतस्यापत्यं ऐचाजि तस्य च्छात्रा इत्यर्थे ऽणत्र न तु च्छ इति भावः । विसर्गाक्षिप्तेति । इदमयुक्तम् । आक्षिप्तस्य शाब्दे ऽनन्वयात् । किन्तु भाष्योक्त-रीत्या निर्वाहो बोध्यः । केचित्त्ववसाने रेफस्य विसर्जनीयः खरि तस्य सो वि-धेयः । शर्परे इत्यादि विसर्गस्थानिकं कार्यं रेफस्यैव विधेयमित्याहुः । अप्राप्तिरे-वेति । अत्र विसर्गे प्राप्ते इति मूलं पुनः खयोति सूत्रे पक्षभेदेन-क-पयोः पत्वस्य न प्राप्ताविति मूलं यदि मत्वं न विधीयते किं तु रुत्वमेव तदेत्यर्थकमेवेति बोध्य-

म् । अत एव । रूपकरणस्य ग्रहणादेव । दोषत्वेननोक्तेति । इदमुपलक्षणम् समो वा लोपमेक इत्यस्य । सत्कर्त्ता । सँस्कर्त्तेत्यनुनासिकानुस्वारघटितरूपस्योदाहरणत्वेन प्रदर्शनादित्यपि बोध्यम् । अपास्तमिति । इदमुपलक्षणम् । नश्छव्यप्रशानित्यादौ पक्षे नकारस्य श्रवणापत्तिरित्यपि बोध्यम् । पूर्वं प्रवृत्तेति । इदमयुक्तम् । पूर्वत्रासिद्धीयमद्विर्वचन इति परिभाषया परद्वित्वस्यैव पूर्वं प्रवृत्तेर्युक्तत्वात् । त्रितस्य निर्वाह इति । केचित्त्वेकस्या व्यक्ताविति न्यायेन न पुनर्द्वित्वम् । लक्षणपदस्य कार्यार्थकत्वात् । अत एव सोषुप्यते सनि सोषुपिषत इति अत्र द्वित्वस्योक्तन्यायेनाप्रवृत्त्या भाष्यकारीयानभ्यासग्रहणप्रत्याख्यानस्य निर्वाह इत्याहुः । सूत्रविधेययोरिति । तयोर्विधायकस्य शास्त्रान्तरस्याभावादिव व्यर्थम् । ननु घसे किबेतीरनि किलादुपधालोपे जानस्य चर्त्वस्यासिद्धत्वात्सयूपरत्वमेव नास्तीत्याशङ्क्याह । क्षरधातोरिति । क्षीरं क्षरतेर्वा घसेर्वेति निरुक्तप्रामाण्यादिति भावः । अवश्यमातावितिपाठः । लुम्पेदवश्यमः कृत्ये इति कृत्ये एव लोपस्मरणादिति बोध्यम् । भावेक्त इति । नपुंसके भावे क्त इति विहित गत्यर्थाकर्मकेति विहितो वा सकर्मकेभ्योऽपि भवतीति भावः । अत्र यद्वक्तव्यं तत्त्रिपथगायामुक्तम् । सवर्णकाल इति । वर्णसहितकाल इत्यर्थः । तदधिकेति । स्वारसिकार्धमात्राकालात् योऽधिकोऽर्धमात्राकालस्तदधिके इत्यर्थः । अव्ययमेवेति । ननु धातुरित्यर्थः । ध्वनितमेतदिति । तन्त्रे हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति पक्षे आलूयेत्यत्र ह्रस्वस्येति तुकमाशङ्क्याचार्यप्रवृत्तिर्ज्ञापयति न दीर्घे ह्रस्वाश्रयो विधिर्भवतीति । यदयं दीर्घादिति छे तुकं शास्तीत्युक्तम् । यदि च ह्रस्वाय तुक् स्यात्तदा न पूर्वेण तुक्सिद्धेस्तेन ह्रस्वस्य तुग्विधानादिति बोध्यम् । स्थानिद्वारेति । इदमुपदिष्टेनेत्यभिप्रायम् । इति हल्सन्धिः । यद्यपि विसर्गस्यापि हल्त्वेन हल्सन्धावेवास्यान्तर्भाव एव स्वादिसन्धेरपि तथापि ब्राह्मणवसिष्ठन्यायेन श्रोतृणां प्रतिपत्तिसौकर्याय पृथक् कथनम् । श्रोतारो हि विसर्गस्थानिककार्यसन्देहे विसर्गसन्धिप्रकरणमवेक्ष्य निश्चिन्वन्ति । एवं स्वादिस्थानिककार्यसन्देहेऽपि । अनुवृत्तिप्रदर्शनायेति । वस्तुतस्तु विसर्गस्थानिकसन्धिकार्याणामुक्तरीत्यैव श्रोतृप्रतिपत्तिसौकर्याय तत्र कोडीकारस्यावश्यकतया पुनरुक्तिः । अत एव पूर्वमुक्तमपि झलां जशोऽन्ते इति सूत्रं हल्सन्धौ पुनरुक्तम् । वक्ष्यति पूर्वमुक्तमपि कुप्वादिषु चेति शास्त्रम् । यद्यपि झलां जशोऽन्ते इति शास्त्रम् संहिताधि-

कार्त्स्न्यं तथापि वर्णान्तरेण संहितायां वावसानं इत्यस्याप्रवृत्त्या जश्त्वश्रवणं निर्बाधमित्येतावता संधिकार्यत्वमस्य । अत एव तादृगेव वागीशश्चिद्रूपमित्युदाहृतमित्यलं प्रसक्तानुप्रसक्त्या । खरवेति । नावसानम् । तस्याभावरूपत्वेन वैजात्यादित्यर्थः । अव्ययीभावश्चेत्यत्र भाष्ये इति । तत्र हि अव्ययीभावस्याव्ययत्वे उपपयः कार इत्यादौ सत्वाभावः प्रयोजनमित्युक्त्वा नैतदस्ति प्रयोजनं अनुत्तरपदस्थस्येति प्रतिषेधो भविष्यतीत्युक्तम् । तेनानव्ययस्येति वार्तिकेन सत्वगतिनिषेधे ऽव्ययत्वं नेति लक्ष्यत इति भावः । वस्तुतस्त्वव्ययीभावस्याव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचारा इति परिगणनारम्भतत्प्रत्याख्यानयोः फलैक्यायैतस्या ऽनभिधानं । वाकाम्यतीत्येतस्याप्यनभिधानम् । सोपदादाविति सूत्रे रोःकाम्ये इति वाच्यम् किं प्रयोजनं नियमार्थं पयस्काम्यति क मा भूत् गीः कम्यतीति भाष्यात् । अन्यथा संप्राप्तोदाहरणं सत्वस्य व्यावर्त्यं तु षत्वस्यापीत्यर्धजरतीयापत्तिः । इणःषः । इदुदुपधस्येत्येव सिद्धे इदं व्यर्थमित्याशङ्क्याह । इदुदुपधस्येति । इति च संबध्यत इति । अत एव रोःकाम्ये इत्यस्य गीःकाम्यतीति विसर्गघटितं भाष्ये व्यावर्त्यं प्रदर्शितम् । अन्यथा सत्वस्याप्रवृत्तावपि षत्वस्य प्रवृत्त्यापत्त्या तदसङ्गतिः । अत एवेति । अनव्ययस्येत्यादेरुत्तरसूत्रे संबन्धादेवेत्यर्थः । सस्थानेन षत्वमिति । कुप्वोः परयोरिति शेषः । अपदादिविधाविति चेत्यारभ्य षत्वसिद्धिरित्यन्तो ग्रन्थः पूर्वेण गतार्थः । असङ्गत इति । षत्वप्रकरणान्ते इणः षः इत्यस्य पाठे तु न कश्चिद्दोष इत्याहुः । प्रकरणेति । षत्वसत्वयोर्विधेययोर्भेदे ऽपि कुप्वोरिति निमित्तैक्यात्प्रकरणैक्यं बोध्यम् । नमस्पुरसोर्गत्योः । गतित्वाभाव इति । कृञ्योगाभावे इति शेषः । कृञ्योगे तु ऊर्यादित्वेन निपातत्वात्स्वरादिपाठे विनैवाव्ययत्वसिद्धिः । तथा च नमः करोतीति विसर्गघटितमसाध्विति भावः । नमःशब्दस्य गतित्वस्य संबन्धफलं तु क्रियायोगाभावे बोध्यम् । द्वित्रिश्चतुरिति । इति शब्द एषामित्यर्थे । वक्ष्यमाणरीत्येति । शब्दस्वरूपं विशेष्यमादाय सुजन्तस्येति पुनः पदस्येति विशेष्यमादाय सुजन्तान्तस्येति । तेन परमद्विष्करोतीत्यत्र षत्वसिद्धिः । सुजिति सूत्रयितुमिति । ननु चतुःकरोतीत्यत्रतस्यासिद्धत्वादिदुदुपधस्येति नित्यं षत्वापत्तिः । यथान्यासे तु विशिष्य चतुर्ग्रहणेन नित्यषत्वस्य बाधः । न च व्युत्पत्तिपक्षे प्रत्ययविसर्जनीयत्वात्तदप्राप्तिः । चतुष्कपालमित्यादिसिद्धये ऽव्युत्पत्तिपक्षस्य-

याश्रयणीयत्वात् । न च प्रकरणे प्रकरणप्रसिद्धे न तु योगे योग इति पक्षाश्रयणेन
निर्वाहः । तस्यैतद्ग्रन्थकृदनभिमतत्वात् । न च द्विः करोति त्रिः करोतीत्यनयोरिसु-
सोरित्येव सिद्धे चतुः करोतीत्यत्र नाप्राप्ते ऽस्यापवादत्वं द्विः पाक इत्यादौ । समासे
सामर्थ्यविरहात् । इसुसोरित्यस्याप्राप्तौ अस्यावश्यकत्वादिति चेन्न । कृत्वोऽर्थ इत्यस्य
स्थाने सुच इति सूत्रयितुमुचितमित्याशयात् । यद्वा सुच इत्युत्तरं चतुर इति न्यासः
सुजन्तस्य चतुरः षत्वमिति तदर्थ इति न कश्चिद्दोषः । स्थानिनिमित्तमिति ।
तथा च सम्प्रोने रेफस्याप्युपलक्षणमिति भावः । नित्यषत्वापत्तेरिति । अन्ये तु
कृत्वसुच् द्विस्त्रिरित्येव वक्तव्ये कृत्वोऽर्थप्रत्ययान्तसामान्ये प्रवृत्त्यर्थं कृत्वोऽर्थग्रहणात्
चतुः करोतीत्यत्र नित्यषत्वं बाधित्वा विकल्पप्रवृत्तेरिति न कश्चिद्दोषः । स्पष्ट-
श्चेदं प्रकृतसूत्रे करटे । अथवा सुच इत्येव वक्तव्ये कृत्वोऽर्थग्रहणाच्चतुःशब्देऽपि
षत्वम् । सुच इत्युक्तौ हि निर्दिश्यमानपरिभाषया सुचो विसर्गस्यैव षत्वं स्यात्
न चतुःशब्दविसर्गस्येति कृत्वोऽर्थग्रहणं कृतम् । एतेन सुच इति सूत्रयितुमुचित-
मित्यपास्तम् । न च सुचतुष्पात्राशब्दादिति सुजन्तबहुव्रीहौ षत्वापत्त्या सुच इति
सूत्रयितुमशक्यमेवेति कृत्वोऽर्थे इत्यस्य न सुच इत्यनेन समानफलकत्वमिति
वाच्यम् । कृत्वोऽर्थ इत्युक्तावप्यस्यासिद्धत्वेनेदुदुपधस्येति नित्यषत्वस्यैवोक्तस्थले
प्रवृत्त्या फलभेदाभावात् । तदेतदभिप्रेत्य वार्तिककारभाष्यकाराभ्यां द्विस्त्रिश्चतुर्ग्रहणं
प्रत्याख्यातमित्याहुः । इसुसो मा भू । तयोरेव सम्भवेनेति । अव्युत्पत्तिपक्षाश्रयणेनेदम् ।
इदमयुक्तम् । तदाश्रयणे हि जग्मुः पेचुरिति षत्वा । क्रियायामित्याख्यातमाख्याते-
नेति समासे नित्ये समास इति षत्वापत्तेः । एवं षष्ठ्या आक्रोशे इत्यलुकि सर्पिषु-
पुत्र इत्यत्रापि षत्वापत्तेः । सुपी पचति सुभूः पचतीत्यादौ प्रातिपदिकावयवयोरि-
सुसोः सामर्थ्य इति षत्वापत्तेः । तस्मादिसुसोः सामर्थ्य इत्येतद्विषये व्युत्पत्तिपक्ष
एवाश्रयणीयः । तथा सति प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणं, मर्यादग्रहणेनानर्थक-
स्य, लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैति परिभाषाभिः सत्सु पाक इत्यादौ न
षत्वम् । परस्परसाहचर्येण कृतोरिसुसोर्ग्रहणात् पचुः काष्ठैरित्यादावपि न षत्वमित्येव
युक्तम् । व्युत्पत्तिपक्षमाश्रित्य शङ्कते । नचेति । इसुसन्तान्तरपत्ययनेति । अनुत्तर-
पदस्थस्येत्यनेन । पदस्येत्यस्य वैयधिकरण्येनान्वयकल्पनात्परमसर्पिष्करोतीत्यादौ
षत्वमित्यपि बोध्यम् । नक्तेव्यमभूदिति । अन्ये तु अगामन्तान्नाम्येलिपिण्यूष्विति

तिसृत्रतयासि इति सूत्रद्वयप्रणयनान्यथानुपपत्त्या पाणिनेर्व्युत्पत्तिपक्षोऽपि संमतः नित्यं समास इति सूत्रे नित्यग्रहणाच्च । अव्युत्पत्तिपक्षे हि नित्यं समास इत्यस्य षत्वप्रतिषेधमात्रफलकत्वेन नित्यग्रहणवैयर्थ्यं स्पष्टमेव । किं चाव्युत्पत्तिपक्षस्यैवाश्रयणे जग्मुः पेचुरिति यस्यां क्रियायामित्याद्युक्तदोषापत्तेः । तदेतदभिप्रेत्य नित्यं समासे इति सूत्रे भगवता भाष्यकृतोक्तम् । अथ चेत्कृदन्तमेतदिति । अथ चेत्सविज्ञानमित्यादिना पक्षान्तरस्याप्यवलम्बनं तु प्रौढिवादमात्रं तदेतदभिप्रेत्याव्युत्पत्तिपक्षे स्वाश्रीयमाणे सर्पिष्ट्वादि न सिध्यतीति व्युत्पत्तिपक्ष एवेसुसन्तस्याश्रयणीय इति नित्यं समासे इति सूत्रे कैयटेनोक्तम् । आदिपदेन भिन्दुः पेचुरित्यादिपूर्वोक्तदोषसंग्रहः । किं चेसुसोर्विषये ऽव्युत्पत्तिपक्षाश्रयणे सर्पिःकालकमित्यादावत्रसामर्थ्यादनेन षत्वाप्रवृत्ताविदुदुपधस्येति नित्यं षत्वापत्तिः एवं देवदत्तस्येदं सर्पिः काण्टमिदं यज्ञदत्तस्येत्यत्रेदुदुपधस्येति षत्वापत्तिः । कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्तु व्यपेक्षायां तदभावे ऽसमासे च नित्यार्थः । असमासे व्यपेक्षाविरहे चेदुदुपधस्येति षत्वासिद्धेरित्याहुः । व्यपेक्षायां विकल्प एवेति बोध्यमिति । इदमयुक्तम् । विकल्पेन युक्ते कस्कादित्वान्नित्यषत्वप्रवृत्तेः सुलभत्वात् । किं चाव्युत्पत्तिपक्षस्यैव स्वेनाश्रयणेनाव्यपेक्षायामिदुदुपधस्येत्यनेनैव षत्वसिद्ध्या व्यपेक्षायां पाठसामर्थ्येनैव नित्यषत्वासिद्धेः । ननु परमसर्पिःकुण्डिकेत्यत्र कस्कादित्वात्षत्वं दुर्वारम् । नचानुत्तरपदस्थस्येति प्रसज्यप्रतिषेधाश्रयणेन कस्कादिषु चेति विहितस्यापि षत्वस्य निषेध इति वाच्यम् । निषेधदृष्ट्या तस्यासिद्धत्वेन तन्निषेधासंभवात् इति चेन्न । प्रकरणे प्रकरणमसिद्धमिति तत्पक्षाश्रयणेन प्रसज्यप्रतिषेधाश्रयणसामर्थ्येन वा षत्वमात्रस्य निषेधाङ्गीकारात् । अत्र त्वानुत्तरपदस्थस्येति किं परमसर्पिःकुण्डिकेति भाष्यं मानम् । न चैवं परमसर्पिष्कल्पमित्यत्रेणः षः इत्यस्यापि निषेधापत्तिः । कवर्गपवर्गघटिते एव समासे ऽनुत्तरपदस्थस्येति निषेधप्रवृत्तेः । न च परमसर्पिष्कल्पपुत्रेत्यत्र निषेधापत्तिः । प्रत्यासत्त्या कवर्गाद्युत्तरपदकसमास एवोक्तनिषेधप्रवृत्तेः । इति विसर्गसन्धिः ।

क्ते त्वभिन्निति । सूत्रे इत्यर्थः । सुप्विभक्त्योर्ग्रहणमिति । सप्तसु विभक्तिषु ये प्रथमे विभक्ती इत्यर्थः । गुणवृद्धिहन्तुरिति । यद्यपि वृद्धिग्रहणं न प्रकृताभिप्रायेण प्रकृते गुणस्यैव प्राप्तेः । तथापि पूर्वसवर्णदीर्घनाव्यकार्यसामान्यप्रदर्शनाभिप्रायेण । यण्पररूपयोरनुक्तेः । तथापि नादिचीत्येतद्विषये त्वत्रावसरन्यायाप्रवृत्त्यु-

पपादनाय तद्विषये प्रवर्त्तमानपूर्वसवर्णदीर्घबाध्यकार्यसामान्यप्रदर्शनमिति न कश्चि-
द्दोषः । कस्यचित्सन्ज्ञेति । इद हूयमानार्थकनाम एव प्लुत इति भ्रमेण । वस्तु-
तस्तु नाम्न एव ग्रहणे प्रमाणाभावात् । तच्च रूढं लौकिकं वेति दूराद् हूतेचेति
सूत्रस्थस्वग्रन्थायौगिकेपि प्लुतः प्रवर्त्तते । आश्रयणसामर्थ्यादिति । ननु त्रिपाद्यां
रो सुपीत्यस्यानन्तरं अत उगति इत्येव पाठ्यमिति चेन्न । उत्वस्यासिद्धत्वेन
गुणानापत्ते । मनोरथ इत्यत्रोत्वस्यासिद्धत्वेन रोरीति लोपापत्तेश्च । यद्यप्यप्लुता-
दिति विशेषणसामर्थ्येन प्लुतस्य सिद्धत्वे ऽप्लुत इति व्यर्थं तथापि तत्सामर्थ्येन
दूराद् हूतेचेत्यस्य सिद्धत्वेपि गुरोरनृत इत्यस्य सिद्धत्वे मानाभाव इत्याशयेनाप्लुत
इत्युक्तं सूत्रकृता । प्लुतस्याश्रयणसामर्थ्येन पूर्वत्रासिद्धमित्यसिद्धत्वं बाध्यते न
त्वसिद्धं बहिरङ्गमन्तरङ्ग इतीत्यभिप्रेत्याह । पयसीति । अन्यथा । आश्रयणसामर्थ्येना-
स्यासिद्धत्वमात्रबाधने । नन्वन्तरङ्गस्यासिद्धत्व इव परिभाषादृष्ट्या बहिरङ्गस्या-
सिद्धत्वेपि परिभाषा न प्रवर्तेत इत्यशङ्क्याह । परिभाषादृष्ट्येति । स्वदृष्ट्या
ऽसिद्धस्य परम्प्रत्यसिद्धत्वप्रतिपादनसम्भव लोकदृष्टान्तेनोपपादयति । स्वदृष्ट्येति ।
स्वदृष्ट्या विद्यमानस्य घटादे परं प्रत्यविद्यमानत्वप्रतिपादनदर्शनादित्यर्थ । प्र-
तिपाद्याभावइति । प्रतिपत्तिक्रियाया सकर्मकत्वेन प्रतिपाद्यरूपकर्मणो ऽभावे यथा
निष्पत्तिर्भोज्याभावे भोजनस्येव तथान्तरङ्ग प्रत्यसिद्धत्वप्रतिपादिका परिभाषा ऽन्त-
रङ्गादर्शने कम्प्रत्यसिद्धत्व प्रतिपादयेत् । उत्व प्रतीव तद्देशस्थपरिभाषा प्रत्यपि
प्लुतासिद्धत्वमित्यन्ये । पूर्वत्रासिद्धमित्यसिद्धत्वस्येवाश्रयणसामर्थ्याद्बहिरङ्गासिद्धत्व-
स्यापि कुतो न बाध इत्याशङ्क्याह । आश्रितेष्वितिवति । प्रत्यक्षत्वेनचेति । पाणि-
निना साक्षादुच्चारितत्वेनेत्यर्थ । तथा च प्रत्यक्षस्य प्रथमोपस्थितस्य बाधेनोपप-
त्त्यावानुमानिकस्य विलम्बोपस्थितिकस्य बाधकल्पना न युक्तेति भावः । स्पष्टम्भा-
ष्येइति । अतो रोरप्लुतादिति सूत्रे इत्यर्थ । ननु प्लुतप्रगृह्या इति सूत्रे प्लुतस्य
सिद्धत्वज्ञापनद्वारा एकादेशात्प्लुते विप्रतिषेधेन कृते प्रकृतिभाव । देवदत्त ३ अत्र
त्वमसीति भाष्यस्य कैयटेन प्लुतस्यैकपदाश्रयत्वादन्तरङ्गत्वेनैकादेशस्य [illegible] पद-
द्वयापेक्षत्वेन बहिरङ्गत्वेन चिन्त्यतोक्ता प्लुतस्यापि वाक्यत्वसम्पादकपदान्तरसापे
क्षत्वादेकादेशस्य समत्वाच्चिन्त्यमेव चिन्त्यमिति विवरणोक्तिर्विरुध्यते । वाक्यस्य
टे प्लुतार्थे देवदत्ता इत्यस्यादावेहीति शेषपूरणस्यावश्यकत्वात् । वाक्यद्वयमा-

पेक्षैकादेशस्यैवमपि बहिरङ्गत्वादिति चेत्सत्यम् । भाष्यकारेण तु परत्वेनान्तरङ्गत्वेन वा पूर्वं प्लुतप्रवृत्तौ विशेषाभावादन्तरङ्गत्वं स्थितमप्युपेक्ष्य विप्रतिषेध उपन्यस्तः । नदोषइति । आदेः परस्येत्यादेः स्यादिति भावः । भोभगो इति । दीर्घइति । तत्राचश्चेति परिभाषा नोपतिष्ठते । फलाभावादिति भावः । तथा च स्थानषष्ठ्यन्तपदजन्यप्राथमिकोपस्थितिविषय इकिति समुदाय एवेति न तत्र स्थानिवन्निषेधः । हेरामेति । इदमुपलक्षणम् । राम इत्यत्रापि पदत्वासिद्धेः । सुप्त्वस्य विसर्गस्य स्थान्यंशवृत्तित्वात् । आनुमानिकेति । राम इत्यत्रापि रेफान्तस्य स्थाने विसर्गान्त आदेश इति भावः । नन्वेवं स्थानिवद्भावेन सुबन्तत्वलाभ इत्ययुक्तम् । नियमशास्त्राणां विधिमुखेन प्रवृत्तेरत्यैवाभ्यर्णमुक्तत्वेन प्रत्ययलक्षणेनैव सुबन्तत्वस्य वक्तुमुचितत्वादिति तटस्थशङ्कां परिहरति । प्रत्ययलक्षणेनापीति । अपिरुक्तशब्दार्थे । एवं च राजपुरुष इत्यादावपि स्थानिवत्त्वेनैव राजत्यस्य पदत्वमित्याशयः । यद्वा वार्तिकमते प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वेन वर्णाश्रय इत्यस्य वर्णमात्रवृत्तिधर्माश्रय एव प्रवृत्त्या तन्मते प्रत्ययलक्षणसूत्रेण सिद्धिमाशङ्क्य निराकरोति । प्रत्ययलक्षणेनापीति । व्याख्या पूर्ववत् । वार्तिकमते लक्षणपदस्य वैयर्थ्यात् । इदमापाततः । तन्निमित्तकार्यञ्चेति । प्रकृतिसंबन्धिन इति शेषः । अत एव नखनिर्भिन्न इत्यादावेस् न । तथा च पदसंज्ञायाः प्रकृतिप्रत्ययोभयसंबन्धित्वेन प्रत्ययलक्षणसाध्यत्वमित्यर्थः । प्रत्ययस्य कार्यकोटौ प्रवेशेन पदसंज्ञानिमित्तत्वाभावात् । उक्तरीत्येति । आनुमानिकस्थान्यादेशभावाश्रयणेनेत्यर्थः । तथा च दीर्घाहन् सु इत्यस्यां दशायां यथा सुपीति रुत्वनिषेधवत्यादेशेप्यानुमानिकस्थान्यादेशभावस्य समुदायविश्रान्ततया ऽल् न स्थानीति नानल्विधाविति निषेधः प्रवर्तत इति भावः । यद्यपि राजेत्यादौ सुलोपे दीर्घो न स्यादित्यपि शङ्कितव्यं तथापि परत्वादीर्घस्य लोपात्पूर्वं प्रवृत्तिरिति समाधानसंभवेनानुमानिकस्थान्यादेशभावाश्रयणेन समाधानक्लेशस्य नोपयोगः । दीर्घाहो निदाघ इत्यत्र तु रुत्वस्यासिद्धत्वात्पूर्वलोप इति आनुमानिकस्थान्यादेशभावाश्रयण क्लेश आवश्यक इति विशेषः । नचैवं चित्रायां जातश्चित्र इत्यादौ ङीप्प्रसङ्गः । आनुमानिकस्थान्यादेशभावे आश्रीयमाणे ऽलः स्थानिवत्त्वाभावात् । यदि च स्थान्यवयवाल्वृत्तिधर्माश्रयकत्वेनानल्विधाविति निषेध इत्युच्यते तदा स प्रकृतेपि

समान इति वाच्यम् । स्थान्यलूत्त्वीत्येनदंशे मात्रपदानिवेशेऽपि स्थान्यवयवाल्त्वी त्येनदंशे तान्निवेशेनादोषात् । अन्ये तु स्थानिवदादेश इत्यत्र स्थानिपद निवर्त्य-परमेव लोकत एतत्सिद्ध तद्यथा । लोके यो यस्य प्रसङ्गे भवति लभते सौ तत्का-र्याणीति स्थानिवत्सूत्रस्थभाष्यस्वारस्येन प्रसङ्गिन एव स्थानिपदार्थत्वलाभात् । स्थानमस्यास्तीति स्थानीति व्युत्पत्तेश्च उत्तरसूत्रानुरोधाच्च । तत्र हि णिलोपस्य स्थानिवद्भावाय स्थानिपद निवर्त्यपरमेव । अग्रहीत् विशिष्ट इषो ऽनत्त्वमाश्रयते इट नामेति स्थानिवत्सूत्रस्थभाष्ये एष इत्यनेन लोप परामृश्यते । भोभगो इति सूत्रस्य भाष्यं तदनुसारि स्थानिवत्सूत्रस्थ' ग्रहो लिटि दीर्घ इत्यत्रेट एवस्थानित्व नाच इति कैयटग्रन्थश्च प्रौढैरादरेनेन मातृतम् । उक्तभाष्यादिविरोधात् । बहुलस्या-सिद्धेश्च । तथा हि वारिणी इत्यत्र द्विवचनत्वस्य स्थान्यलूत्त्वित्वेनातिदेशेनादेशे तदलाभे प्रगृह्यत्वानापत्तिः । इकारग्रहण तु हरी इत्यादौ चरितार्थम् । अन्तादिव-त्सूत्रस्याल्मात्रवृत्तिधर्माश्रयके विधावप्रवृत्तावप्यल्वृत्तिधर्माश्रयके विधौ प्रवृत्ते । किं चैव सति ईणमित्यत्र दीर्घ । यीगनीत्यत्र प्रश्लिष्टस्य गुणे उपेतीत्यत्रेहि परस्प-मिति पररूपम् । आदी-ये इत्यत्र एरनेकाच इति यण् ऊवे इत्युत्तमपुरुषे उत्तरादेशश्च न स्यात् । धातुत्वप्रत्ययत्वदीनां स्थान्यलूत्त्वित्वात् । किं च राजेत्यादौ नित्यत्वाद्धलङ्यादिलोपे दीर्घानापत्तिः । एव दीर्घाहो निदाघेत्यत्र इत्रड्यादिलोपे रुत्वापत्तिः । न चानुमानिकस्थान्यादेशभावाश्रयणेनासुपीति निषेध अन्होयमान्ह इत्यादौ रुत्ववारणाय पदस्येत्यनुवृत्त्या ऽऽनुशब्दान्तस्य पदस्य रुत्वमित्यर्थाश्रयकत्वेन दीर्घाहन् नु इत्यस्यां दशायां रुत्वस्यामसक्त्या तन्निषेधस्या-प्यप्रवृत्त्या स्थानिवद्भावेन हल्ङ्यादिलोपे जाते निषेधस्यातिदेष्टुमशक्यत्वात् । भावपि पद भवतीति पक्षेपि रुत्वनिषेधयो औपादिकत्वेन लोपात्पूर्वमप्रवृत्ते । किं चानुमानिकस्थान्यादेशभावाङ्गीकारेपि श्रौतस्थान्यादेशभावस्य त्यागाभावेन श्रौतस्थान्युलूत्त्विनिमुप्त्वप्रयोज्यसुबन्तत्वरुत्वनिषेधयोर्गन्विषित्वेन हेराम हेदीर्घाहो-निदाघेत्यादावनापत्तिः । तदेतदभिप्रेत्योच्चारणकाले य श्रुतः स स्थानित्वेना-श्रीयते न तु प्रतिपत्तिकाले इति मन्यते इति कैयटेनोक्त भोभगो इति सूत्रे प्रत्ययलक्षणेनापीत्युक्तमप्ययुक्तम् पञ्च सप्त राजपुरुष इत्यादौ प्रत्ययलक्षणेन पदत्व-मित्यस्य प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रस्थभाष्ये ग्रन्थमन्दर्भलभ्यस्यानुपपत्तेः ।

उक्तभाष्यप्रामाण्येनास्मन्मते लक्षणपदेन हि प्रत्ययस्थानिकमैसादिकमेव धार्यते न तु पदत्वादिकमपि तथा सति नखनिर्भिन्न इत्यादावैसादेरेव पञ्चेत्यादौ पदत्वस्याप्यनापत्तिः । प्रत्ययलोपे प्रत्ययनिमित्तकमेव कार्यं भवति न तु तदुद्देश्यकमिति भवन्मते नियमपर्यवसानादित्याहुः । ननु वर्तिपदार्थस्य तरवर्थप्रकर्षेणान्यपदार्थेन च युगपदन्वये परत्वात्तरपि ततो बहुव्रीहौ लघुतरप्रयत्न इति स्यादत आह । अन्यपदार्थसंबन्धोत्तरमिति । यथा च वार्तिकम् । पूर्वपदार्थातिशये आतिशायिके कृते बहुव्रीहिः सूक्ष्मवस्त्रतरार्थम् इति पूर्वविप्रतिषेधेनेति तद्भावप्रदर्शनं कैयटेन कृतम् । पूर्वविप्रतिषेधे प्रमाणं तु लघुप्रयत्नतर इति निर्देश एव । एतन्मते तु अन्यपदार्थसंबन्धोत्तरमेव वर्तिपदार्थातिशयविवक्षाभिधानस्वाभाव्यात् । तेन सूक्ष्मवस्त्रतरादिसिद्धिः । अत्रापि प्रमाणं लघुप्रयत्न इति निर्देशः । अत्र कैयटोक्तमेव युक्तम् । वृत्तपदार्थे विशेषणान्वयकल्पनाभावात् । वर्तिपदार्थप्रकर्षविवक्षयेति । शक्यतावच्छेदकगतस्येव शक्यतावच्छेदकतावच्छेदकगतस्यापि प्रकर्षस्य तरबर्थत्वादिति भावः । ओतोगा । साहचर्यादिति । यद्यपि स्मृतावच्युतेत्यत्र व्योरिति लघुप्रयत्ने वकारे कर्तव्ये स्थानिवद्भावान्न वकारः पदान्तः । पूर्वत्रासिद्धे न स्थानिवदित्यस्य पदचरमावयवातिरिक्तविषयकत्वस्योक्तत्वात् । तथा च साहचर्याश्रयणस्य स्मृतावच्युतेत्यत्र नोपयोगः । तथापि जनानवतीतिजनौस्तस्यापत्यं जनावपत्यमित्यादौ धात्ववयववकारस्य ग्रहणवारणाय यकारसाहचर्यस्यावश्याश्रयणीयत्वमित्यभिप्रायेणेदम् । वस्तुतो ऽयुक्तमेतत् । स्मृतावेत्यत्रैव एतेर्विचि रोरानयनमवनयनमित्यत्र धात्ववयवयकारस्य संभवात् । एवं नयतेर्विजन्तस्यानयनशब्देन समासे धात्ववयववकारसंभवो बोध्यः । स्मृतावच्युतेति । स्मृतां वेतीति स्मृतावीस्तमाचष्ट इत्यर्थे णिजन्ताद्विचि रूपम् । स्थानिवद्भावस्तु न । लोपस्य पदचरमावयवत्वेन पूर्वत्रासिद्धेनेत्यस्य प्रवृत्तेरिति भावः । वस्तुत इदृशानामभिधाने दृढं मूलं न पश्यामः । गार्ग्यश्रुतेरिति । शाकटायनमते एव लघुप्रयत्नयोर्विधानात् । गार्ग्यमते तदभावात् । इत्याद्यनुवृत्तेरिति । लोपः शाकल्यस्येत्यत्र न च शाकल्यभिन्नमते लोपो नेति स्मृत्यन्तरानुसन्धाने गार्ग्यमते लोपाभावापत्त्या गार्ग्यः स्वस्मान्मतात्प्रच्युतः स्यादिति वाच्यम् । शाकल्यभिन्नो यो गार्ग्यभिन्नस्तन्मते लोपो नेति स्मृत्यन्तरानुसन्धानकल्पनोपपत्तेरित्याशयात् । तदनुवृत्तिरिति । भोइत्याद्यनुवृत्तिरित्यर्थः ।

हलि सर्वेषाम् । अपूर्वाछ्युमयत्नइति । शाकटायनमते एव छ्युमयत्नविधानेन 'शाकल्यमते तदभावादिति भाव । प्रकरणे प्रकरणमसिद्ध न योगे योग इति पक्षे तु नाय दोष । तद्वाधादिति । वस्तुतस्तु लोप शाकल्यस्येत्यस्याभावे हलि सर्वेषामित्यस्य प्रवृत्त्या दोषाभावात् । अय प्रयासो व्यर्थ एव । फलाभावाच्चेति । वृक्षवृक्करोतीत्यादावशीत्यहृत्त्या ऽस्याप्रवृत्ति । वृक्षव् हसतीत्यादेस्त्वनभिधानम् । द्वयोरपि वा ऽनभिधानमिति भाव । निर्देशैरिति । सुपि चेत्यत्र तदन्तविधौ दीर्घापत्तेरिति भाव । निष्ठेत्यादाविति । रदाभ्या परस्य निष्ठान्तस्य यस्तकार इत्यर्थे क्षपणीर्णेत्यादौ धातुतकारस्य तत पूर्वतकारस्य च नत्वापत्तिरिति भाव । वर्णिपदार्थस्य सूत्रघटकविशेष्यान्वयायोगान्न तदन्तविधिरिति केचित् । सप्तमीस्थ इत्यादाविव तदन्तविधिप्राप्तेरित्यन्ये । नलुमतेतिनिषेधादिति । तत्राङ्गपदमपूर्वोपलक्षणम् । रेफविधानसामर्थ्यात् । विषयाभावे प्रवृत्तिरिति भाव । ननु अहन् सुपि र इतीत्येव न्यासोऽस्तु लाघवादिति चेन्न । गुरुन्यासेन क्वचिदसुप्यपि रुत्वकल्पनात् । तदेतत्पश्यते । रूपरात्रिरथन्तरेष्विति । अकारान्ते परत्वादतो लोपस्येकारोकारान्ते च गुणस्य प्रवृत्त्या न दोष । चचारेत्यादौ चेति । नन्वन्तरङ्गत्वाद्दीर्घे ऽभ्यासहृस्वत्वेन सिद्धमिति चेन्न । ऊलतुरित्यादावपि सवर्णदीर्घे ह्रस्वापत्ते । यदि च तत्र वार्णादाङ्गमिति पूर्वं ह्रस्वस्ततो दीर्घस्तर्हि प्रकृतेऽपि सम समाधि । विप्रतिषेधे परङ्कार्यम् । आवश्यकत्वेति । अवश्यभावकत्वाभावकल्पनायोगादिति भाव । तद्भिन्नोत्स्यविषयइति । ननु नित्यान्तरङ्गादीना ज्ञापकन्यायाभ्या बाधकत्व परस्य तु विप्रतिषेधे परमिति ग्रन्थकृतस्तदुक्त तदिति प्रत्यक्षयवास्य ज्ञापकन्यायादित प्राबल्यादिदमयुक्तमिति चेत्सत्यम् । तुल्यबलविरोधस्य विप्रतिषेधशब्दार्थत्वाङ्गीकारेणादोषात् । तदेतदभिप्रेत्यात्र सूत्रे भगवता भाष्यकृतोक्त् । द्वौ प्रसङ्गौ यदान्यार्थौ भवत एकस्मिश्च युगपत्प्राप्नुत स विप्रतिषेध इति । तत्रान्यार्थावित्यनेनापवादव्यावृत्ति । युगपत्प्राप्नुत इत्यनेनान्तरङ्गव्यावृत्ति । तद्धि परस्मात्पूर्वमेव प्राप्नुते न तेन युगपत् । इद नित्यव्यावर्तकस्योपलक्षणं विशेषणम् । कैयटस्तु अत्र सूत्रे कार्यमित्यर्हार्थे कृत्य करणार्हं कार्यं तुल्यबलं च करणार्हमिति नित्यानित्योत्सर्गापवादान्तरङ्गबहिरङ्गेषु अस्य सूत्रस्याव्यापार इत्याह । सत्यनिमित्तानन्तर्यामपरइति । निमित्तं विधेयविशेषणमिति

भावः । सकृद्गताविति यद्बाधितमित्यनेनान्वेति । गतौ युगपत्प्राप्तौ पुनः प्रसङ्गविज्ञानबीजमाह । यद्वेत्यादिना । लक्ष्यप्रेष्ययोरिति । वस्तुतस्तु भृत्यसदृशं लक्ष्यं प्रेषणक्रियासदृशी संस्कारक्रिया पर्यायेण कार्यकरणस्थानापन्नं च शास्त्रविहितकार्यस्वीकारः तथा च यथा तुल्यबलयोरेको भृत्यो युगपत्प्रेषितो पूर्वं नानादिग्धिकरणकत्वेन युगपदसंभविकार्यद्वयं न करोति । तथा तुल्यबलयोः शास्त्रयोः संस्कार्यं लक्ष्यं युगपत्संभवि तद्विहितं कार्यद्वयं न भजतीत्यर्थः । स तयोः पर्यायेण कार्यं करोति इत्यन्तो भाष्यग्रन्थस्तु विभिन्नकालिकाविरोधि कार्यद्वयं तु लक्ष्यं भजत्येवेति प्रसंगाद्युक्तं तत्र दृष्टान्तप्रदर्शनपरं युगपदसंभवस्य तत्राभावेन दृष्टान्तासंगतेः । इह भवता द्वौ हेतू व्यपदिष्टौ तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति अमनिष्पत्तिर्वोभयोस्तुल्यबलत्वात् । तद्यथा द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति । यदा तमुभौ युगपत्प्रेषयत इत्यग्रिमभाष्यग्रन्थासंगतेश्च । पुनर्धिर्भवतीति । इदमयुक्तम् । स्थानिवत्सूत्रस्थभाष्यविरोधात् । तत्र हि भित्तादित्यत्र परत्वात्तातङि धिभावमाशङ्क्य सकृद्गतिन्यायेन समाहितम् । किं चैवं भिन्तादिति रूपस्य विलयापत्तिः । अत्र कश्चिद्विकल्पशास्त्राणामभावेपि तात्पर्यं स्वीकृत्य तातङि पुनर्धिर्भवतीत्यस्य तातङभावे पुनर्धिर्भवतीत्यर्थमुक्त्वा ऽत्र तातङ्धिभावयोरित्याद्यग्रिमग्रन्थस्तु विकल्पघटकतातङ्विरहेणा धिभावस्य विरोधोपपादनपरेत्याह । तन्तुच्छम् । विकल्पशास्त्राणामभावे तात्पर्यं हि यस्येति संवानग्रहणं चेत् कस्य विभाषायां दोषो भवति यदा लोपस्तदा सर्वस्य लोपः यदा ऽलोपस्तदामर्वस्यालोपः इति यस्य हल इति सूत्रस्थभाष्यानुरोधात्कल्प्यम् । तच्च भाष्ये सूत्रान्तरस्थानेकभाष्यविरोधादेकदेश्युक्तिरिति यस्य हल इति सूत्रे विवरणे नव्यैरुक्तम् । तथा च तत्र यथावदन् शून्यहृदय इव तद्विरुद्धं कथमत्र वदेत् । पुनःप्रसंगोदाहरणं स्त्रीजनुरिति । तत्र हि परत्वात् संप्रसारणम् । यत्त्वेतदुदाहरणं सद्ब्रायामिति । अत्र हि परत्वादामि कृते पुनःप्रसंगविज्ञानाद्याडिति पाठकेनोक्तं तन्तुच्छम् । निरवकाशत्वेनैवात्प्रवृत्तेः निरवकाशत्वेन बाधे पश्चादुत्सर्गप्रवृत्तेर्याडिति न कश्चिद्दोषः । स्पष्टं चेदं नव्यग्रन्थेषु । ननु कार्यकालपक्षे तस्मिन्निति परिभाषाया ह्मो ह्रस्वादचीत्यत्र तत्संस्कारार्थमुपस्थितया निरवकाशत्वेन कथं तस्मादित्युत्तरस्येत्येतद्बाध्यत्वम् ।

न हि तत्रोपस्थितया विध्यन्तरं संक्रियते येन साधकाशत्वं स्यादित्याशङ्क्याह । त्रिपादीस्थेनेति । तथा च यस्याः बाधो नाम विधिशास्त्रेणानाकर्षणमेवेति भावः । प्रदेशग्रहणेनेति । विधिदेश एवेत्यर्थः अत्र प्रमाणं तु सत्राशास्त्रानुसन्धानं विना विधिवाक्यार्थबोधानिष्पत्तिः । अथादिम्य. परैव- प्रगृह्यसंज्ञेति भाष्यं च । यद्यपीय पारिभाषिनि । न कार्यमिति शेषः । एवञ्चेति । प्रतिद्वन्द्विभावापन्नकार्यद्वयनिमित्त-कत्वेचेत्यर्थः । यथोद्देशैवेति । परोक्षा क्रियेत्यादिवदर्शआद्यजन्तमेतत् । नन्वसौ इस्मो ह्रस्वादचीत्यत्रैतत्प्रवृत्त्यनापत्तिः । तथा चोभयनिर्देशे पञ्चमीनिर्देशो बलवानिति भाष्यामङ्गानिरिति चेन्न । त्रिपादीस्थेन तयोराकर्षणेपि उक्तरीत्या त्रिपादीस्थत्वा-भावेन विप्रतिषेधशास्त्रप्रवृत्त्या तयोरसिद्धत्वस्य पूर्वत्रासिद्धमित्यनेन बोधनासम्भवेन तयोर्विषये विप्रतिषेधेत्यस्य प्रवृत्तेर्निर्बाधत्वादित्याशयात् । इति लोपे प्राप्त इति निर्मूलम् । पूर्वत्रासिद्धमित्यस्यापर्यालोचनदशायां बोध्यम् । एतत्तदोः । प्रकृति-वदनुकरणमित्यतिदेशेनैकशेषमाशङ्क्याह । अनुकार्येति । इति स्यादिसन्धिः ॥

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । अर्थवद्धातुरितिप्रातिपदिकमित्येव सूत्र कार्यम् । तिविन्यारभ्य सुपः पकारेण प्रत्याहारः । तद्धितग्रहणञ्चोत्तरत्र न कार्यम् । यद्वा ऽर्थवदविभक्तिरधातुप्रातिपदिकमित्यस्त्विति तन्न । आद्ये प्रत्यासत्तिन्याया-श्रयणे सिपः पकारेण प्रत्याहारापत्तेः । व्याप्तिन्यायाश्रयणे तु कपः पकारेण तदा-पत्तेः । द्वितीये तु तनेस्यादौ विभक्त्यन्तत्वेन प्रातिपदिकत्वानापत्त्यातद्धितग्रहण-स्यावश्यकतया न लाघवम् । आनीतितेऽइति । स्वमते प्रत्ययपर्युदासाभावात्प्राचां मतेनेदं प्रत्ययस्य यत्सञ्ज्ञेति । धर्मिग्राहकमानबलादिति भावः । अन्ये तु कृद-तिङ्, प प्रत्ययस्य, तद्धितश्चासर्वविभक्तिरित्यादावपि निषेधप्रवृत्तेरिष्टत्वेनायुक्तमे-तत् । अन्यथा व्यतिसे इत्यादावेव निषेधः प्रवर्तेत । पठितयादावेव चेत्सञ्ज्ञा प्रवर्तेत । तस्मात्तद्धितान्तस्य प्रातिपदिकसञ्ज्ञाविधिः कल्प्यन इत्याहुः । मूलोक्त प्रत्ययपर्युदासं प्रत्याख्यातुमाह । अनेत्यादिना । एतत्सञ्ज्ञाफलभूतेति । इदं वस्तुस्थितिकथनं न तु अर्थवत्त्वशरीरघटकं फलाभावात् । अत एव शब्दरत्ने एतत्सञ्ज्ञाफलभूतेति न दृश्यत इति केचित् । वस्तुतस्तु ओदनं पचतीत्यादावो-दनं पचेति समुदायस्यार्थवत्त्वेन प्रातिपदिकत्ववारणायैतत्सञ्ज्ञेति । तत्समुदायस्य तिङ्रूपविभक्त्यपेक्षया ऽर्थबोधजनकत्वेपि तद्धितराऽपेक्षया ऽर्थबोधजनकत्वात्प्रा-

तिपदिकं प्राप्तम् । एतत्सञ्ज्ञेत्युक्तौ तु एतत्सञ्ज्ञाफलभूताविभक्तीतरातिङ्पेक्षयैवार्थ-बोधजनकत्वात्तद्वारणं पचेत्यस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावात् । एतेनैतत्सञ्ज्ञाफल-भूतेति व्यर्थमेव शब्दरत्ने ऽदर्शनादिति पाठकोक्तमपास्तम् । शब्दप्रयोजनानुरोधेन तस्य पूरणीयत्वात् । एवं च देवदत्तस्य पुत्र इत्यत्र स्यपुत्र इति समुदाये षष्ठ्य-र्थस्य पुत्रपदार्थेन्वयेनार्थवत्त्वेपि न प्रातिपदिकत्वं विभक्तीतरषष्ठीप्रकृत्यपेक्षयैव लोके ऽर्थबोधजनकत्वेन परिष्कृतार्थवत्त्वाभावात् । समासग्रहणकृतनियमेन तु नास्य वा-रणं षष्ठ्याः स्वातन्त्र्येण प्रयोगानर्हत्वात् । अत्र वदन्ति । एवंविधार्थवत्त्वग्रहणे खट्वशब्दस्य प्रातिपदिकत्वानापत्तिः । विभक्तीतरटाबपेक्षयैवास्य खट्वशब्दस्यार्थबोधक-त्वात् । टाविधानं स्वनियतलिङ्गे चरितार्थम् । विभक्तीतरवाचकविवक्षणेपि एधा-ञ्चकारेत्यादावेधामित्यस्य प्रातिपदिकत्वानापत्तिः । चकारेत्येतदपेक्षयैव लोके तस्या-र्थबोधकत्वात् । यदि विभक्तीतरो वाचकः प्रत्ययो विवक्ष्यते तदा पचनावप्रियेत्यादौ पचनावेत्यस्य प्रातिपदिकत्वापत्तिः प्रियशब्दापेक्षया तस्यार्थबोधकत्वेपि प्रियशब्द-स्याप्रत्ययत्वात् । एवं प्रत्ययस्यापि । यदि च विभक्तीतरत् यत्स्वगतवृत्त्याश्रय इत्युच्यते । तदा हरिण्वित्यादौ प्रत्ययस्य प्रातिपदिकत्वापत्तिः । प्रकृत्यपेक्षया तस्यार्थबोधकत्वेपि प्रकृतेरतादृशत्वात् । हारिद्रविण इत्यादौ णिनन्तस्य प्रातिप-दिकत्वानापत्तिश्च । तस्य स्वगतवृत्त्याश्रयाध्येत्रणपेक्षयैवार्थबोधकत्वात् । यदि च विभक्तीतरद् यत् स्वसमवेतसञ्ज्ञाश्रयीभूतं तद्विवक्ष्यते प्रियशब्दश्च स्वसमवेतस-माससञ्ज्ञाश्रयः । चकारेत्ययं तु न तथा । हरिण्वित्यादौ प्रकृतिभागस्तु तथा-विधवद्व्याश्रय इति प्रत्ययस्य तदपेक्षया ऽर्थबोधकत्वेन प्रातिपदिकत्वव्यावृत्तिः । एवं च कुम्भकारेत्यत्र कारेत्यस्य न प्रातिपदिकत्वमिति स्त्रीप्रत्ययप्रकरणस्थशेख-रविरोधोपि । स्वसमवेतसमासत्वाश्रयकुम्भेत्येतदपेक्षयैवार्थबोधकत्वात् । तथा च द्रष्टुं भुरका व्रजतीत्यादौ तुमुनन्तादीनां प्रातिपदिकत्वसिद्धिः । स्वनिष्ठार्थबोध-कत्वप्रयोजकत्वस्य यातीत्यादेः स्वनिष्ठसञ्ज्ञानाश्रयत्वादित्युच्यते । तदा स्नात्वा कालकादावित्यादौ स्नात्वेत्यादेः प्रातिपदिकत्वानापत्तिः । तस्य स्वगतसमासत्वा-नाश्रयकालकाद्यपेक्षयैवार्थबोधकत्वात् । एवं प्राच्छेदित्यादेः प्रातिपदिकत्वानापत्तिः । स्वगतसमासत्वाश्रयकच्छकाराद्यपेक्षयैवार्थबोधकत्वात् । किं चोत्तरसूत्रेपि एवं विधा-र्थवत्त्वस्यैव विवक्षणीयतया प्रागुक्तसर्वपक्षेष्वपि तद्धितसमासयोः प्रातिपदिकत्वाना-

पत्ति । अलौकिके प्रक्रियावाक्ये एव प्रातिपदिकत्वस्य वक्तव्यतया तस्य लोके सर्वथा ऽर्थाबोधकत्वादिति । अत्रोच्यते । अन्तिम पक्ष एव साधीयान् । स्नात्वा कालकादौ तु न दोष. । समाससञ्ज्ञार्थं स्नात्वादेः सुबन्तत्वस्यावश्यकतया तत्पूर्वमेव प्रातिपदिकत्वप्रवृत्ते । तस्या च दशाया कालकादेः स्वगतसञ्ज्ञानाश्रयत्वात् । एवं मूलकेनोपदशमित्यादावप्यदोषो बोध्य । मूलकेनेत्यादौ समाससञ्ज्ञात पूर्वं स्वगतसञ्ज्ञानाश्रयत्वात् । अलौकिकप्रक्रियावाक्ये तु स्वप्रकृतिकपरिनिष्ठितनिष्ठ ईदृशार्थवत्त्वमारोप्य प्रातिपदिकत्वं निर्वाह्यम् । यद्वा विभक्तीनरत् शास्त्रे यत्स्वप्रकृतिनिमित्ततया नाश्रीयते तदेव प्रगृह्यते प्रत्ययस्य प्रकृतिस्तथा विधपक्षगवेति समासस्य च धनेति तथाविधमुत्तरपदं विहितसमासमुपजीव्य च प्रवृत्तेस्तेन। स्रुट्ट मुरका हारिद्रविण इत्यादौ न दोष । चकोरेति तिङन्तस्य टाप व्रजतीति तिङन्तस्यान्येनणश्चामन्त्रादिति निमित्ततया शास्त्रे ऽनाश्रयणात् । कर्मण्यणित्यस्य कर्मोपपदसञ्ज्ञकं भवति धातोश्चाणिति वाक्यार्थे निमित्तीभावस्यानाश्रयणेपि तत्रोपपद सप्तमीस्थमित्येतदेकवाक्यतया कुम्भेत्यादे कर्मणो ऽणूनिमित्ततया ऽऽश्रयणमस्त्येव तस्मिंश्च सत्येव वक्ष्यमाण प्रत्यय इति तदर्थात् । तेन कारेत्यस्य न प्रातिपदिकत्वमिति स्त्रीप्रत्ययस्थशेखरोपपत्ति । वस्तुतस्तु सन्नियोगशिष्टन्यायेनैव तस्मिंश्च सत्येव वक्ष्यमाण प्रत्यय इत्यर्थलाभे तत्रेत्यस्य तदर्थकस्यानाश्रयणेन कुम्भेत्यस्य शास्त्रे न निमित्तत्वेनाश्रयणमिति स्त्रीप्रत्ययस्थशेखरो ऽप्यत एव । गतिकारकोपपदानामित्यत्रोपपदग्रहणं सार्थकं दधिसेचाविन्यादौ दधीत्याद्युपपदस्य सुबन्तेन समासश्चोपपद्यते । तेन मूलकोपदशमित्यत्रोपदशमित्यस्य प्रातिपदिकसिद्धि । प्रादीनामुपसर्गसंज्ञाया धातोर्निमित्तत्वेपि प्रयोगे ऽनिमित्तत्वान्न दोष । तेप्राग्धातोरित्यत्र सञ्ज्ञानियमपक्षाश्रयणात् । नन्वेतत्संज्ञाफलभूतविभक्त्यपेक्षया लोके ऽर्थबोधजनकत्वमित्येतावदेवास्तु कृत नञ्द्वयप्रवेशेनेत्यत आह । अहमिति । नयाचाधानुरित्यादिपर्युदासमार्गक्याय नञ्द्वयप्रवेश इति भाव । न च नञ्द्वयप्रवेशो ऽस्वातुरीति पर्युदासश्च मास्त्विति वाच्यम् । दधि पश्य राजपुरुष इत्यादौ दधिराजेत्यस्य प्रातिपदिकत्वानापत्ते । नचेति । नहीत्यर्थ । यद्यप्यस्यापत्यामिर्गतिम इत्यादौ केवलप्रत्ययस्याप्युक्तार्थबोधकत्वमस्ति तथाप्यार्थे तद्धितान्त-

त्वेन प्रातिपादकत्वभागेनान्त्यन्तु प्रत्ययान्तपर्युदासेनापि व्यावर्त्यम् । तथा च प्रातिपदिकत्वालक्ष्यप्रत्ययान्तपर्युदासव्यावर्त्यदृष्टार्थबोधकं न किञ्चित्प्रत्ययसंज्ञकमस्तीति तात्पर्यम् । विशुद्धानां । प्रत्ययरहितानां कृत्तद्धितानामित्यादेः कृत्तद्धितानां केवलानां प्रकृत्यसमभिव्याहृतानामर्थो लौकिकः लोके प्रतीयमान इत्यर्थः । प्राग् विभक्तेः । विभक्त्युत्पत्तेः प्राक् । तदन्तस्य । कृत्तद्धितान्तस्य । तथैवार्थो । लौकिको ऽर्थः । न विद्यत इत्यत्रान्वयः । एवं च कृत्तद्धितान्तस्य विभक्त्यपेक्षया लोके बोधजनकत्वेपि विभक्तीतरानपेक्षेत्याद्युक्तार्थवत्त्वं सुस्थमिति ध्वन्यते । लौकिकार्थमत्यासन्नत्वं च कृत्तद्धितान्तार्थस्य विभक्तीतरानपेक्षया प्रतीयमानत्वात् । विभक्त्यन्तार्थो हि लौकिकः । सर्वथेतरनैरपेक्ष्येण लोके प्रतीयमानत्वात् । कृदन्तार्थस्तु विभक्तीतरानपेक्षया प्रतीयमानत्वात्तत्प्रत्यासन्नः । कृत्तद्धितार्थस्तु स्वप्रकृतिविभक्त्युभयापेक्षयैव कृदादेः प्रतीयमानत्वाद्विप्रकृष्ट इति बोध्यम् । तत्सामर्थ्यादित्येवेति । अथाहुरिति पर्युदासेन पूर्वसूत्रे ऽर्थवत्त्वलाभात् । कृदादीनां चानर्थकानामप्रसिद्धेरिति भावः । सामान्यतोऽर्थवत्त्वग्रहणइति । उत्तरसूत्रे विशिष्टार्थवत्त्वस्येवोपयोगेनार्थाधिकारानुरोधात्पूर्वसूत्रेपि तादृशार्थवत्त्वग्रहणे न्यायतः प्राप्ते ऽपि तत्परित्यागेन सामान्येनार्थवत्त्वग्रहणे फलमाह । अतएवेति । अत एवेत्यारभ्य नाप्युत्तरसूत्रेणेत्यन्तमेकं वाक्यम् । प्रातिपदिकत्वं टावापत्तिरिति वाक्यान्तरम् । तत्प्रत्याख्याने इत्यस्य च नानेन प्रातिपदिकमित्यनेनैवान्वयः । प्रत्ययान्तपर्युदासत्त्वे तत एव पचनावित्यस्य प्रातिपदिकत्वं नेत्युक्तविधार्थवत्त्वस्यात्र सूत्रे ग्रहणेनेदं संभवतीति तत्प्रत्याख्यन इत्युक्तम् । अत एवेत्यस्य सूत्रद्वये उक्तविधार्थवत्त्वग्रहणादेवेत्यर्थः । अस्मिन्सूत्रे ईदृशार्थवत्त्वग्रहे पचनावेति प्रयोजनोपन्यासः । उक्तविधार्थवत्प्रत्ययान्तस्य चेत्प्रातिपदिकत्वं तर्हि तथाविधतद्धितान्तस्यैवेति नियमाभिप्रायेण पचनावेत्यस्योक्तविधप्रत्ययान्तत्वाभावेनोक्तनियमाप्रवृत्त्यार्थवत्त्वप्रप्राप्तिसंभवात् । प्रत्ययान्तसामान्यविषये नियमे विज्ञायमाने त्वत्र सूत्रे ईदृशार्थवत्त्वग्रहणे नेदं प्रयोजनम् । प्रत्ययान्तस्य चेत्प्रातिपदिकत्वं तदुक्तविधार्थवत्तद्धितान्तस्यैवेति नियमेनैतत्सूत्रविहितप्रातिपदिकत्वस्य व्यावृत्तिसंभवात् । बहुश्रेयसी प्रियतिसेत्यादौ नदीत्वनिस्त्रायथसुपसर्जनपदार्थेपि स्त्रीत्वमावनस्याङ्गीकर्तव्यतया टावापादनीयपत्तिः । स्वार्थविशिष्टार्थान्तरोपसंक्रान्तत्वमुपसर्जनत्वं तच्च यद्बहुकृत्वेऽन्या-

दाविव पञ्चनावेत्यादावपि ङीपो ऽप्राप्त्या टाबापादित । ङीनापत्तिरिति पाठे तु यस्माद्ङीप्कर्त्तव्यस्तदर्थं प्रति ङिद्रर्थस्याविशेषणस्वरूपमनुपसर्जनत्वमुपपादनीयम् । भिद्रूठिदित्यादाव गतुरिति पर्युदासेन प्रातिपदिकत्वाप्राप्तौ कृद्ग्रहणस्य तद्विधानार्थत्वे नियामकत्वासभवात्तद्धितग्रहणस्य तदुक्तिः । यत्त्वस्यापत्यमिरित्यादौ प्रत्ययपर्युदासा-त्प्रातिपदिकत्वाप्राप्तौ तद्धितग्रहणमपि विध्यर्थमेव न नियमार्थं यदि तु अ इस् इत्यस्यां दशायां प्रवृत्त प्रातिपदिकत्वमेकदेशविकृतन्यायेन इरित्यत्रापि सुलभम् । प्रत्यायान्तपर्युदासाभावे एव तद्धितग्रहणस्य नियमार्थत्वप्रक्रमादप्रत्ययान्तपर्युदासा-प्रवृत्तेरित्युच्यते तदा भिद्रिकिविब्यस्या दशाया प्रवृत्त प्रातिपादकत्व भिदित्यत्रापि सुलभमिति तत्तुच्छम् । प्रत्ययपर्युदासस्य मूलत एवाभावेन प्रत्ययान्तपर्युदासस्य च व्यर्थत्वेन शङ्क्यमानत्वेन त्वदुपन्यस्तशङ्काडम्बरस्यापरोक्षोपोल्लुप्तकस्य कण्ठा-डम्बरत्वात् । किं चान्तरङ्गत्वात्किपो लोपे ऽधातुरिति पर्युदासेन भिदित्यादौ प्रातिपदिकत्व दुर्लभम् । अस्यापत्यमिरित्यादौ प्रातिपदिकत्व विना सुबुत्पत्तेर नैति महद्दूपणम् । टाप्पक्षे गोस्त्रियोरिति ह्रस्वस्तु न शङ्क्य । राजकुमारीपुत्र इत्यादाविव तदुच्चारणमपरात् । नचैव पत्र्वनीशब्दस्याप्रातिपदिकत्वेन टेन दुर्लभ इति वाच्यम् । समासान्तविधौ प्रातिपदिकाधिकाराभावस्य वक्ष्यमाणत्वात् । न च सन्निपातपरिभाषया टाप्ङीपोर्वारणम् । द्विगुसमाहारोत्तरपदानन्तर्यनिमित्तकस्य टचस्तद्विघातकत्वादिति वाच्यम् । ङ्स्येजन्त इति सूत्रस्थभाष्यप्रामाण्येन परपरयापि तद्विघातकस्य ग्रहणेपि सन्निपातलक्षणस्य साक्षादेव ग्रहणमित्याशयात् । अथ ङीनापाद्यमानो द्विगोरिति वा टिड्ढेति वा विहितो बोध्य । इतिदिगिति । अन्ये त्वर्थवत्त्वमत्र शक्तिलक्षणाद्योतनान्यतमसम्बन्धेनार्थोपस्थितिजनकत्वम् । गोपीत्यादौ ङीपुत्पत्तेः पूर्वमेव प्रातिपदिकस्य लक्षणावश्यकत्वेन गोपत्यस्य प्रातिपदिकत्वासिद्धये लक्षणेति । द्योतकनिपातसंग्रहायाह । द्योतनेति । न तु विभक्तीतरसमभिव्याहारानपे-क्षयेति परिष्कृतमर्थवत्त्वम् । सिद्ध त्वन्वयव्यतिरेकाभ्यामित्यादेस्य वर्णितार्थत्वतो ऽन्वयव्यतिरेकाभ्यामित्यन्तेनैतत्सूत्रस्थभाष्यग्रन्थसन्दर्भेणाप्यदुक्तार्थत्वस्यैवार्थवच्छ-ब्दार्थत्वावगते । अत एव भाष्ये वर्णानामनर्थकाणा प्रातिपदिकसञ्ज्ञाप्रसङ्गे त्वर्थवदित्युक्तम् । न तु प्रत्ययस्य माभूदिति । नन्वोदनं पचतीत्यत्रौदनं पचे-त्यस्य देवदत्तस्य पुत्र इत्यत्र पुत्रस्य देवदत्तो गार्ग्येति समुदायस्य च प्रातिप-

दिकत्वापत्तिः । अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययादेरोदनं पचतीत्यादेश्च लोके ऽर्थबोधनदृष्टानिकल्पनेपि ओदनं पचेत्यादेः समुदायस्य तत्कल्पने मानाभावात् । प्रत्ययपर्युदासस्तु नास्त्येव प्रत्ययस्य फलाभावेनैव प्रातिपदिकत्वाप्रवृत्तेः । न च हरिष्वित्यत्र प्रत्ययस्य प्रातिपदिकत्वे औत्सर्गिकैकवचने च तस्य श्रवणापत्तिः । तस्य सति गमक एवोत्पत्तेः । अत एव ङ्याप्प्रातिपदिकादिति सूत्रे भाष्ये तदधिकारस्यासत्वे प्रत्ययादौत्सर्गिकैकवचनापत्तिर्नापादिता नन्वेवं धनं वनमित्यादावपि विभक्त्यनुत्पत्तावर्थवदिति व्यर्थमिति वाच्यम् । निपातस्यानर्थकस्य प्रातिपदिकत्वविधानेनार्थवत्सूत्रस्यशेषभाष्यप्रामाण्येन चानर्थकप्रातिपदिकादेकवचनोत्पत्त्यभ्युनुज्ञानात् । न च काण्डे इत्यादौ प्रत्ययस्य प्रातिपदिकत्वे ह्रस्वापत्तिः । नपुंसके वर्त्तमानत्वाभावेनादोषात् । स्पष्टं चेदं भाष्ये । न च व्यपदेशिवद्भावेन प्रातिपदिकावयवसुब्लुगापत्तिः । सुप्कार्यं त्वलुक्समासे चरितार्थमिति वाच्यं धातुसाहचर्येण मुख्यावयव एव सुब्लुक्प्रवृत्तेः । न चौपगवयतीत्यादावणो णिजापत्तिः । उपगवर्थेनैकार्थीभूतत्वेनाणर्थमात्रस्य णिजर्थेनानान्वययोगात् । उत्तरसूत्रे तु शब्दाधिकाराश्रयणेन प्राशस्त्ये मतुपा प्राशस्त्यार्थवत्त्वं विवक्षितम् । तच्च पृथगुपस्थितयोरर्थयोरन्वयबोधजनकत्वम् । एकार्थीभाववत्त्वं वा लौकिकार्थप्रत्यासन्नत्वमपि लौकिकार्थसदृशत्वम् । लौकिकार्थो यथा योग्येतरान्विता सदृशत्वम् । पचगव इत्यादौ तु तद्धितान्तत्वेन प्रातिपदिकत्वेपि न टाप् । स्वार्थिकानां क्वचित्प्रकृतितो लिङ्गवचनातिवृत्त्या ऽर्धनावमित्यादाविव स्त्रीत्वत्वाश्रयणेनादोषात् । विशेषणपदार्थे स्त्रीत्वस्यानभ्युपगमाच्च । मियतिसेत्यादौ तु भाष्यप्रामाण्येन भीतपाविके स्त्रीत्वयादाय तिसृत्रादेशः । विभक्तीतरेत्याद्युक्तार्थवत्त्वं तु गुरुतरमनेकदोषदुष्टं च । अर्थवदिति तु धनं वनमित्यादौ वर्णानां प्रातिपदिकत्ववारणायौत्सर्गिकैकवचनोत्पत्तेरुक्तदिशा ऽऽपादयितुं शक्यत्वात् । अथ वा हरिषु करोषीत्यादौ पुकरोषीति सुप्तिङन्तसमुदायस्यानर्थकस्य प्रातिपदिकत्ववारणाय तत् । तस्य प्रातिपदिकत्वे तु सुपोधात्विति लुगापत्तिः । समासग्रहणकृतनियमेन तु न वारणम् । पूर्वभागस्याऽपदत्वात् । तदेतदभिप्रेत्योक्तं भाष्ये । ऽर्थवदिति व्यपदेशायेति । विशिष्टसञ्ज्ञा निर्देशायेति तदर्थः । वर्णानां च माभूदित्युक्तभाष्यं तु प्रत्युदाहरणदिक्प्रदर्शन-

परम् । दश दाडिमानीति निरर्थकपदसमुदायस्तु न व्यावर्त्य । समासग्रहणकृतनियमेनैव व्यावर्त्तनात् । नचार्थवत्ता य समुदायोऽर्थवान्स एव नियमव्यावर्त्य इति वाच्यम् । व्यावर्त्यसमुदायस्यार्थवत्त्वाविशेषणवैयर्थ्यात् । भाष्ये तु दश दाडिमानीति पदसमुदायस्यानर्थकस्य प्रातिपदिकत्वमाशङ्क्यानर्थकत्वेन परिहृत्य ततो देवदत्त गामभ्याज शुक्लामिति सार्थकवाक्यस्य तदाशङ्क्य समासग्रहणकृतनियमेन वारितम् । न त्वर्थवदित्यस्य तद्व्यावर्त्यतया प्रदर्शितम् । समासग्रहणकृतनियमस्यासाधारण प्रयोजन प्रदर्शयितुमेवानर्थकसमुदायस्यार्थवदित्यनेन व्यावृत्ति प्रदर्शिता । न तु तस्य तदेव व्यावर्त्यमित्याभिप्रेत्य । अप्रत्यय इति तु प्रसज्य प्रतिषेध । तेन काण्डे हराविसादौ पूर्वान्तवत्त्वेन प्राप्तस्यापि प्रातिपदिकत्वस्य निषेधसिद्धि । अन्यथा प्रतिषेधस्य शास्त्रविहितत्वाभावेन स्थानिवत्त्वान्तवत्त्वयोरप्रवृत्तौ प्रातिपदिकत्वे लुगापत्ति । शास्त्रतात्पर्यविषयस्यापि शास्त्रीयत्वे तु न मानम् । अन्यथा ऽजुमिन्ने ऽयादेशस्यापि शास्त्रतात्पर्यविषयत्वेन तस्मिन्नपि स्थानिवद्भावापत्तौ नायक इत्यादावयायनापत्ति । अत एव प्रसज्य प्रतिषेध एव ब्रह्मबन्धूरित्यादौ प्रातिपदिकत्व न स्यादित्युक्त भाष्ये न पर्युदासे । अथवा पुनरस्तु पर्युदास इति भाष्य तु प्रौढिवादपर अन्यथा काण्डे इत्यत्र ह्रस्वस्य कथञ्चिद्वारणेऽपि सुपो-धात्विति लुक प्रसङ्गात् । अन्तादिवत्त्वयोरेकत्रार्थे ऽनाश्रयणेनोभयत आश्रयणे इति निषेधाप्रवृत्ते । तस्य व्यपवर्गविषयत्वाच्च । अस्योदाहरण त्वव्युत्पत्तिपक्षे घट पट इत्यादि । व्युत्पत्तिपक्षे तु बहुपटव, परमगार्ग्यायण, शिवभागवत, राजकुमारीश्रित इत्याद्युदाहरणम् । गार्ग्यभगवच्छब्दाभ्या गुणफगणप्रवृत्त्या शिव-परमेत्येतत्सहितस्यातद्धितान्तत्वात् राजन् इस् कुमारी अमित्यस्या दशाया पष्ठीतत्पुरुषयोर्द्वितीयातत्पुरुषयोर्युगपत्प्रवृत्त्या समुदायस्यासमासत्वात् इत्याहु । कृत्तद्धितसमासाश्च । चक्रपाण्युक्तदूषणमुद्धर्तुमाह । एतेनेति । साजात्यप्रदर्शनमात्राभिप्रायकत्वेनेत्यर्थ । अर्थानुगमोऽपि शब्दानुगमोऽस्त्येवेत्याशङ्क्याह । शब्दानुगमस्येति । अर्थस्यैव नियमशरीरे निवेशादिति भाव । व्यवच्छेद्यानुगमेऽपीति । सङ्ग्राह्यस्यैवानुगम । यथा सास्नादिमत्त्व गोर्लक्षणमित्यत्र सङ्ग्राह्याणा सकलगोव्यक्तीनामनुगम । व्यवच्छेद्य महिष्यादिक तु न कोऽप्यनुगमयति । यथा च भगवान्पाणिनि सङ्ग्राह्यान्साधुशब्दानेवानुगमयति नासाधुशब्दानिति भाव । अपान्त-

मिति । साजात्यप्रदर्शनार्थमेव यत्र संघात इति मूलस्य प्रवृत्तत्वेनानुगमस्य संभवेप्यनुपयोगेपि क्षत्यभावादिति भावः । वस्तुतो द्वावपि स्थूलदृश्वानौ । तथा हि । पदसञ्ज्ञकपूर्वभागघटितत्वस्य अनुगमरूपस्य संभवात् । ग्रामानयेत्यादेरिव बहुपटव इत्यादेरपि प्रातिपदिकत्वाभाववारणाय व्यवच्छेद्यानुगमस्यावश्यकत्वाच्च । व्यवच्छेद्यानुगमस्यासंभवमनुपयोगं च वदन् चक्रपाणिः स्थूलदृश्वा । तदेतत् द्वयमभ्युपेत्य साजात्यप्रदर्शनार्थत्वं वदन्नन्यो ऽतिस्थूलदृश्वा । यत्तच्छब्दार्थयोरननुगमे साजात्यस्यैवासंभवात् । समासवाक्ययोरेकधर्मवत्त्वं हि साजात्यम् । व्यवच्छेद्यानुगमस्यानावश्यकत्वे-साजात्यप्रदर्शनानुपयोगाच्च । ननु वाक्यसञ्ज्ञावारणायार्थवत्समुदायानामिति नियमशरीरमुक्त्वा बहुपटव इत्यादौ दोषमाशङ्कय सुबन्तानां समुदायस्य समासग्रहणं नियमार्थमित्युक्तं भाष्ये न तु स्वातन्त्र्येण प्रयोगार्हाणां विशेषणेन पूर्वोक्तनियमशरीरस्थापितमित्याशङ्कयाह । भाष्येसुबन्तानामित्यनेनेति । तथा च सुबन्तानामिति भाष्येण पूर्वोक्तनियमशरीरे स्वातन्त्र्येणप्रयोगार्हेति विशेषणं देयमित्युक्तं भवतीति भावः । भेदे पृथक्प्रयोगे क्रियमाणे या ऽऽकांक्षा तन्मूलको यः संसर्गः परस्परमन्वय इत्यर्थः । भाष्यासंगतिःस्पष्टैवेति । इदमयुक्तम् । तद्धितान्तत्वप्रयुक्तप्रातिपदिकसञ्ज्ञायास्तदादिनियमाश्रयणेन वारणेप्यर्थवत्सूत्रेण तस्या दुर्वारत्वात् । किं च तदादिनियमाभावे देवदत्तो गार्ग्येति समुदायस्य तद्धितान्तत्वेन प्रातिपदिकत्वमापादितं भाष्ये । तदानीं च न समासग्रहणस्य नियमार्थत्वम् । समासस्य प्रत्ययान्तत्वात् । तदादिनियमस्य चाभावात् । किं तु विध्यर्थमेव । तथा च देवदत्तो गार्ग्येति समुदायस्य सुपसर्गं प्रातिपदिकत्वापादनम् । किं च कुम्भकारेत्यादिसमासे उत्तरभागस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावेन शुक्लीकरोत्यादौ कृभ्वस्तियोगे एव च्वेः साधुत्वात् कृभ्वस्तीन्विना शुक्लीत्यादिपूर्वभागस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावेन च पटुपटुरेकैकमित्यादेरतिदिष्टसमासत्वमाश्रित्य प्रातिपदिकत्वस्य वक्तव्यतया तद्घटकपूर्वोत्तरभागयोः स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावेन च स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वोत्तरभागकत्वं न समासमात्रेस्तीति समाससाजात्येन नियमशरीरे नायं धर्मः प्रवेष्टुं शक्यः । एवं पञ्चगवधन इत्यादिसमासे पञ्चगवेति पूर्वभागस्य न स्वातन्त्र्येण प्रयोगार्हत्वम् । किं चैवमासमूलकेनोपदंशं इत्यादिवाक्ये ऽर्थवत्सूत्रेण प्रातिपदिकत्वं दुर्वारम् । एवमासेत्यनयोः परस्परपरिहारेणोपदंशमित्यस्य

मूलकेनैवेतत्परिहारेण प्रयोगार्हत्वाभावेनोक्तनियमेनाव्याप्तेः । तस्मात्पञ्चमीनिर्देशादिभिर्ये सुबन्तानां समासाविशिष्टैकवाक्यतापन्नं यत् कृत्तद्धितसमासाश्चेति तत्सुबन्तानां समुदायस्य समाससंज्ञानियमपरम् । तेन नीलो घट इत्यादे समुदायस्य प्रातिपदिकत्वव्यावृत्तिः । न चैवं गविप्रयमाहेत्यादौ दोषः । गवित्यस्य प्रातिपदिकत्वेऽपि क्षत्यभावात् । गवित्ययमित्तिसमुदायस्य तु सुबन्तसमुदायत्वेनैव वारणात् । देवदत्तो गवित्याहेत्यत्र तु देवदत्तो गवित्यस्य न प्रातिपदिकत्वं परस्परानन्वयेनानर्थकत्वात् । अनुकार्यानुकरणयोर्भेदाविवक्षाया एव वक्ष्यमाणत्वेन गवित्यस्यासुबन्तत्वस्याभावाच्च । नन्वेवमपि वृत्रअहन्निति समुदायस्य प्रातिपदिकत्वं दुर्वारम् । सुबन्तसमुदायत्वाभावेनोक्तनियमेनाव्यावृत्तेरिति चेन्न । जहि कर्मणेत्यनेनैकवाक्यतापन्नेनानेन सुप्तिङन्तसमुदायस्यापि प्रातिपदिकत्वनियमनात् । नन्वेवमपि पचतिभवतीत्यनेनतत्समुदायस्य प्रातिपदिकत्वं दुर्वारम् । उक्तनियमद्वयाविषयत्वादिति चेन्न । आख्यातमाख्यातेनेत्यनेनैकवाक्यतापन्नेनानेन तिङन्तसमुदायस्यापि प्रातिपदिकत्ववारणात् । तदेतदभिप्रायार्थवत्सूत्रे भगवता भाष्यकृतोक्तम् । तुल्यजातीयस्य' नियमो यथाजातीयकानां च समासः सुबन्तानां च समास सुप्तिङ्समुदायस्य तर्हि प्राप्नोति ।'सुप्तिङ्समुदायस्यापि प्रातिपदिकसंज्ञारभ्यते । जहिकर्मणेति । सा नियमार्था भविष्यति । तिङ्समुदायस्यापि तर्हि प्राप्नोति तिङ्समुदायस्यापि प्रातिपदिकसंज्ञारभ्यते । आख्यातमाख्यातेनेति । सा नियमार्था भविष्यतीति । नन्वेवमपि देवदत्तस्य पुत्र इत्यत्र पुत्र इत्यस्य, ओदनं पचतीत्यत्र ओदनं पचेत्यस्य, अजा गमयतीत्यत्राजा गमेत्यस्य प्रातिपदिकत्वं स्यात् । न चात्र विभक्तीतरदेवदत्तेत्यपेक्षाया चैतत्संज्ञाफलभूतविभक्तीतरतिङपेक्षायार्थबोधकत्वेनैतत्समुदायार्थवत्त्वाभावान्न प्रातिपदिकत्वमिति वाच्यम् । ईदृशार्थवत्त्वस्य भवद्भिरनङ्गीकारात् । एवं भूसत्तायामित्यस्य प्रातिपदिकत्वं दुर्वारम् । भू इत्यस्य सुप्तिङन्ताभिन्नत्वेनोक्तनियमद्वयाविषयत्वात् । एतेन कष्टप्रुश्रीणामित्येतदेकवाक्यतापन्नेन 'कृत्तद्धितेत्यनेन धातुसुबन्तसमुदायस्योपपदतिङित्येतदेकवाक्यतापन्नेन चानेन सुबन्तसुप्तिङभिन्नप्रत्ययान्तसमुदायस्य प्रातिपदिकत्वानियमान्न दोष इति परास्तम् । देवदत्तस्य पुत्र इत्यादौ दोषानिवारणाच्चेति चेत्सत्यम् । प्रकृतिप्रत्यययोरन्वयव्यतिरेकाभ्यां पदवाक्ययोश्च लोके ऽर्थबोधजनकत्वेन शक्तिकल्पनेऽपि

स्यपुत्र इत्यादेस्तत्कल्पने मानाभावेन तृत्था ऽर्थवत्त्वाभावादेवादोषात् । कटभ्रुपाचककुम्भकारादौ तु समर्थः पदविधिरिति शास्त्रप्रामाण्यादेव वृत्तिमत्त्वम् । उपपदमतिङिन्येतदेकवाक्यतापन्नेन कृत्तद्धितेत्यनेन सुबन्तप्रातिपदिकसमुदायस्य प्रातिपदिकत्वनियमनात् न भूसत्तायामित्यत्र दोषः । भेदाविवक्षया भूइत्यस्य प्रातिपदिकत्वान्निर्देशात्सुबुत्पत्तिर्नेत्यन्यत् । कटभ्रु इत्येतदेकवाक्यतापन्नेन धातुसुबन्तसमुदायस्य प्रातिपदिकत्वनियमनाच्च । प्रकृतिवदनुकरणमिति भ्रुइत्यस्यापि धातुत्वात् । अत एव सुबनुत्पत्तिः । नियमत्रयप्रदर्शनपरं भाष्यं तूपलक्षणम् । नन्वेवमपि पचति पचति तरामिति द्विर्वचनात्तरपि तिङन्तसमुदायसत्त्वेन नियमव्यावर्त्यापातः । एवं शिवभागवत इत्यस्यापि नियमव्यावर्त्यतापातः । सुबन्तसमुदायसत्त्वादिति चेन्न । तिङन्तसुबन्तमात्रघटितसमुदायस्यैव तेन व्यावर्त्तनात् । एतेन प्रत्ययान्तानां समुदायस्य चेत्प्रातिपदिकत्वं तर्हि समासस्यैवेत्येक एव नियमोऽस्तु कृतं नियमत्रयेणेत्यपास्तम् । प्रत्ययान्तमात्रघटितेति परिष्कारासंभवेनोक्तस्थले पाचकीरित्यादौ च दोषापत्तेः । न च प्रकृतिप्रत्ययभावापन्नसमुदायविषयक एक एव नियमोऽस्त्विति वाच्यम् । पचतितरामित्यत्रातिव्याप्तेः । तरामित्यस्याप्रत्ययत्वात् । यदि च प्रकृतिप्रत्ययभावानापन्नौ यावर्थवन्ताविरत्युच्यते तदापि पचति आमिति भागद्वयमादाय तत्रातिव्याप्तिः । उक्तभागद्वयस्य प्रकृतिप्रत्ययभावानापन्नत्वात् । आमस्तिङन्ताप्रकृतिकत्वात्कथं चित्तत्रातिव्याप्तिवारणे उक्तवर्णद्वयस्य समासमात्रवृत्तिरवासंभवः । बहुखट्वक इत्यादिसमासे पूर्वोत्तरभागयोः कबहुखट्व इत्यनयोः प्रकृतिप्रत्ययभावापन्नत्वात् । कपः समासान्तावयवत्वेन कान्तस्य समासत्वात् । भागवतशिवेत्यनयोः प्रकृतिप्रत्ययाभावानापन्नत्वादर्थवत्त्वाच्च शिवभागवता इत्यस्य नियमव्यावर्त्यत्वापाताच्च । नन्वेवमपि राजकुमारीश्रित उत्यत्र युगपद्वृत्तिद्वयपक्षे प्रातिपदिकत्वानापत्तिः । सुबन्तमात्रसमुदायसत्त्वादिति चेन्न । युगपद्वृत्तिद्वयोत्तरं राजकुमारीत्यस्य समासत्वात्प्रातिपदिकत्वेन पुनः सुपि पुनर्द्वितीयातत्पुरुषेणादोषात् । श्रितेत्यस्य प्रत्ययलक्षणेन सुबन्तत्वादुत्तरपदे चेति निषेधस्य पदान्तविधावेव प्रवृत्तेः । केचितु नियमस्य परस्परासमानाधिकरणसमाससञ्ज्ञाश्रयाघटितसुबन्तसमुदायविषयकत्वान्नोक्तदोष इति । तन्न । राजकुमारीश्रितस्य पुत्र इति वाक्ये प्रातिपदिकत्वापत्तेः । उक्तद्वयाश्रयघटितत्वसमासत्वानाश्रयघटितत्वोभयाभावनिवेशेऽपि

राजा कुमारीश्रितस्य सुन्दरवाक्ये तदापत्तेरिति दिक् । उक्तद्वयाश्रयवादेऽत्रैकार्थीभावपर्यायसंयोगनिरूपणत्वेऽभयामात्रनिवेशो न संभवति राजकुमारीश्रितपुत्रे तदभावात् । राजकुमारीश्रितो मूलकेनोपदंशमित्यादौ दोषाच्च । अथ कुमारीश्रितशब्दादेव सुबुत्पत्तिरस्त्यपि कश्चित् । ननु शशशृङ्गादिसमासे शशशृङ्गादेरलौकिकत्वेनानर्थकत्वात्प्रातिपदिकत्वाप्राप्तौ समासग्रहणं विध्यर्थमेव स्यान्न नियमार्थमित्याशङ्क्याह । शशशृङ्गादिपदानामिति । विमृश्यवादिविचित्तस्य न बहिष्ठ कदाच न । स्वप्नभ्रमपदार्थेषु सर्वैरेवानुभूयत । इति कोऽसंस्मृतिरनादिवासनारूपेणान्तरवस्थितरजनादिकामातिवृत्तिसहकारेण मतिर्विषयभेदेन आगम स्वाकारेण विषयभासन च न तु भाव । कोऽपि विषयस्य विशेषाकारोऽस्ति । न च सौत्रान्तिकमतप्रवेश । तेन तत्रारोपितसत्ताया अप्यनङ्गीकारादिति भाव । तदुक्तं तदस्यास्त्यस्मिन्निति सूत्रे न सत्तापदार्थो व्यभिचरतीति भाष्यव्याख्यावसरे कैयटे । यदि तु वृक्षादिनाबाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात् । ततो वृक्ष इत्यस्मात्सत्तावगमादस्तीत्यस्य गतार्थत्वात् प्रयोगो न स्यात् । नास्तीत्यस्य च सत्ताविरोधात्प्रयोगासङ्गः । अङ्कुरो जायत इति च प्रयोगो न स्यात् । सतो जन्मविरोधात् । बौद्धसत्ताया ते दोषा नावतरन्ति । बुद्धिसत्तासमाविष्टस्य वहि सत्त्वासत्त्वज्ञापनप्रतिपादनायास्ति नास्ति जायत इति प्रयोगादिति । नन्वश्लोहिण्यादौ समासे स्वातन्त्र्येण प्रयोगाहार्थवत्समुदायत्व न विद्यते तदवयवाना निरर्थकत्वादित्याशङ्कते । अश्लोहिणीत्यादीति । अन्यत्रदृष्टार्थारोपेणेति । प्रातिपदिकत्वसिद्धये ऽर्थवत्त्वारोपस्यावश्यकतया तत एव समासे ऽर्थवत्समुदायत्वं सुपपादमिति भाव. ॥ विकारागमेति पाठ । एवमग्रेऽपि । तद्भवार्येति । अर्थबोधकशब्दमुच्चार्येत्यर्थ । नभवधादेशानामिति । नाभिनभ च, हनश्च वधः आदिपदाद्विरागविरग त्येतस्य सग्रह । श्नमकमिति । श्नमि प्रत्ययत्वाभावे शकारस्येत्संज्ञा न स्यात् । अकचि तदभावे सार्वधातुकत्वादावित्त्व न स्यात् । बहुचितु फल चिन्त्यम् । इतिदिगिति । अन्ये तु तृणह इति निर्देशात्प्रत्ययपरत्वाभावेऽपि प्रत्यय इत्यस्योपस्थिति । बहुचि तु प्रत्ययत्वस्य न फलम् । अव्ययसर्वनाम्नामित्यत्रापि प्रत्यय इत्यस्य सबन्ध । न्यासयोरिति ज्ञापकात् । एव च यत्र गमक तत्र परश्चेत्येतत्सान्नियोगशिष्टस्य प्रत्यय इत्यस्यासबन्ध । आद्युदात्तश्चेत्यनेन तु न सन्नियोगशिष्टत्वम् । विप्रकृष्टत्वात् । तेन क्विबादे प्रत्ययत्वमसिद्धि ।

किंचेत्याद्युक्तमपि दूषणम् देशांशे निराकांक्षत्वेपि परश्चेत्यस्य संभवमात्रेण संबन्धसंभवः । विकारागमयोस्तु पञ्चम्यन्ताभावेनान्वयासंभवात्परश्चेत्यस्यानुपस्थितिः । न च सीयुटा व्यवधानाद्धातोः परत्वासंभवः । यासुट्परस्मैपदेष्विति सूत्रारम्भसामर्थ्येनागमानतिरिक्तकृतव्यवधानाभावस्यैव परशब्दार्थत्वात् । इतरथा सीयुट इव यासुटोपि पूर्वं प्रवृत्त्या परस्मैपदविषयाभावात्तदसङ्गतिः । किं च स्थानिनः प्रत्ययत्वनिर्णयेन परश्चेत्यस्यासंबन्धेपि प्रत्यय इत्यस्य तत्संनियोगशिष्टाद्युदात्तश्चेत्यत्र संबन्धः । किं च परश्चेत्यस्याप्रवृत्तावपि स्थानिवद्भावलभ्यप्रत्ययसञ्ज्ञा संनियोगेनाद्युदात्तत्वोपपत्तिः । तदेतदभिप्रेत्य भगवता भाष्यकृतोक्तम् । विकारागमेषु च परविज्ञानात्प्रत्ययसञ्ज्ञा न भविष्यति प्रत्ययः परो भवतीत्युच्यते । न च विकारागमाः परे संभवन्तीति । प्रकृत्यर्थमात्रविवक्षायां । सिद्धावस्थार्थविवक्षायाम् । ङ्याप्प्रातिपदिकात् । तिङन्तात्त्विति । पश्य मृगो धावतीत्यादौ । तिङोक्तत्वाच्चेति । ननु धावतीति तिङा कर्तृगता संख्या अभिधीयते न कर्मगतेति चेन्न । यास्काचार्यमते तिङर्थकर्तृसंख्याविशेष्यकशाब्दबोधस्याप्यङ्गीकारात् । यद्वा तिङन्तात् द्वितीयापाद्यमाना किं प्रधानक्रियागतैकत्वमादायाहोस्विदप्रधानक्रियागतसंख्याया आधाराद्विशेषणकर्मादिगतैकत्वमादाय । आद्ये सङ्ख्याभावादित्युत्तरम् । द्वितीये तिङोक्तत्वाच्चेति । धावनकर्तुरेव दर्शने कर्मत्वात्कर्तृगतसङ्ख्याया अभिहितत्वे कर्मगता अपि तस्या अभिहितत्वमिति भावः । तदेतदभिप्रेत्य भगवता भाष्यकृतोक्तम् । तिङोक्ता एकत्वादय इति तिङन्तान्न स्वादयो भवन्तीति । यद्यपि पचति भवतीत्यादौ प्रथमाया अप्यापादानसम्भवः । तथापि प्रातिपदिकेत्याद्येकवाक्यतयैव स्वादिसूत्रस्य विधायकत्वेन तिङन्तस्य प्रातिपदिकत्वाभावेन प्रातिपदिकार्थाभावात् प्रथमा नापादयितुं युक्ता इत्याशयेन द्वितीयादिरित्युक्तम् । केचित्त्वष्टाध्याय्यां कर्मणि द्वितीयेत्यस्य प्रथममुपादानात्तथोक्तिरित्याहुः । तेभ्यः तिङन्तेभ्यः प्रथमोत्पत्तिरत्वाद्यादिति । तस्यापत्यमित्याद्यर्थबोधकशास्त्रेषु प्रथमोपात्तं तत्तस्येत्यादि तद्वाच्यो य उपगवादिसम्बन्धस्तद्बोधकं यत उपगु इत्यादि तस्मादित्यर्थः । प्राधान्यादिति । इदमयुक्तम् । समर्थादिति सुबन्तमेव विशेष्यतया प्रक्रान्तं नत्वन्यत् । ह्यर्थाहि विशेष्यतया सम्भावनायामन्यतरस्य तथात्व निश्चयाय हेतून्यासो युक्तः । ननु सर्वशब्दोप्याद्युदात्त एत्र

स्याङ्गिष्ठामदन्तानामिति सूत्रेण ततश्च प्रातिपदिकादित्युक्तावप्युक्तदोषस्तदवस्थ इत्यत आह । सर्वशब्दस्येति । कौस्तुभोक्त दूषयितुमुपन्यस्यति । नेचाति । लुङ्निमित्तप्रत्ययाश्रितिति । ■ न्यायो लुक ˘ इव तद्भुपजीव्यस्य कार्यस्यापि प्राबल्यबोधक इति भाव । सौवरीणाम् । स्वरविषयकशास्त्रभवानाम् । स्वरशब्दात्तत्र भव इत्यणि द्वारादीना चेत्यैजागम । आद्युदात्तत्वमिद्धिरिति । नन्वेव सति सर्वस्य सुपीत्यत्र सुपीति व्यर्थं स्यादिति चेत्सत्यम् । किमस्माभि कर्तुं शक्य सर्वशब्दाद्दाचारक्विपि तिपि चाद्युदात्तत्वाभावार्थं वा स्यात् प्रातिपदिकाधिकारे तु तस्यानुदात्तादिति विशेषणे विशिष्टस्य गभीराया नद्या घोष इत्यादाविव समर्थादित्यनेनान्वयार्थं तत्प्रकृतिके लक्षणायामनुदात्तादिप्रातिपदिकमप्रकृतिकपदघटनादावैत्यर्थेन सिद्धे सार्वं इत्यत्रातिव्याप्ति । पदस्य अनुदात्तादिप्रकृतिकत्वात् । पदव्युत्पत्तिसमये सर्वशब्दस्यान्तोदात्तत्वात् । एव च सर्वस्य सुपीत्यत्र सुपीत्यपि सार्थकम् । उञ्छादिषु पाठ सकृत्त । सर्व इत्यत्राप्रवृत्तेरुभयकृत्वात् । मानाभावादिति । अनुदात्तादेरित्यस्य पदान्तविशेषणत्वसम्भवादिति भाव । नलक्षणेति । इदमयुक्तम् । तथा सति सार्व इत्यत्रातिव्याप्ते । सुपि परे सर्वस्य सुपीत्यस्य प्रवृत्त्या सर्वेति प्रातिपदिकत्वस्यानुदात्तादित्वाभावात् । मम तु सुप पूर्वमनुदात्तादित्वेनानुदात्तादिप्रकृतिकपदघटन्तत्वस्य तत्र सत्त्वेनात्र सुलभ । किं च पदोद्देश्यकविधित्वाभावेन समर्थपरिभाषा गौणमुख्यन्यायश्च तद्धितविधौ नोपतिष्ठेयाताम् । अधिकमग्रे वक्ष्याम । प्रातिपदिकग्रहणस्य प्रयोजनान्तरमपि भाष्योक्त किंचित्प्रदर्श्यते । द्व्यचष्ठनिति वाचातरतीत्यत्र प्रसज्येत । घटेन तरतीत्यत्र च न स्यात्समर्थसुबन्तस्याद्व्यच्कत्वात् । द्वितीये तदभावात् । नीग्रहण तु नियमार्थं स्यात् । बहुतरोदाहरणेति । सर्वनाम्नस्तृतीया च, भवत्या हेतो कुसूलकूपकुम्भशाल बिले, कुसूलीबिलम् । पूर्वसदृशसमोना, । पित्रा सदृशी । तद्वद्व्याप्यधर्मा इति । आनुपूर्वीविशेषाभिन्ना अपीत्यर्थ । अत एवानुपूर्वीविशेषव्याप्यधर्माणामप्यतिदेशादेव नद्यन्तानां यो बहुव्रीहिरिति । ननु नद्यन्तसर्वावयवको यो बहुव्रीहिरित्यर्थे बहुकुमारीक इत्यत्र कवनापत्ति । नद्यन्तावयवक इत्यर्थे कुमारीभार्या इत्यत्रातिप्रसङ्ग इति चेन्न । नद्युत्तरपदक इत्यर्थेनादोषात् । अवयवविषयप्ञेति । मद्राज्ञीत्यादिसमासावयवराजन्शब्दविषय एवेत्यर्थ । तथा च समास-

घटकराजन्‌शब्दत्वादिकमेव समासान्तविधायकतया परिभाषया नातिदिश्यते । बहुव्रीहित्वादिकं त्वतिदिश्यत एवेति भावः । इति चरितार्थमिति । तथा चार्थक-त्यत्र नेत्वाविकल्पः अत्यन्तस्वार्थिकेषु ङ्याप्ग्रहणासंबन्धेनापः पूर्वमेव कपः प्रवृत्तेः किं तु नित्यमेवेत्वम् । न चैवं सति ङ्याप्ग्रहणवैय्यर्थ्यम् । अत्यन्तस्वार्थिका-नामन्तरङ्गत्वेन परत्वेन च ङ्याब्भ्यां प्रागेवोत्पत्तेः । कुत्सितार्थकतद्धितानां तु कुत्सित इति सूत्रस्थभाष्योक्तरीत्या स्वार्थादिप्रयुक्तकार्याणां कामिकत्वस्वीकारेण न्यायत एव ङ्याबन्तादुत्पत्तिसिद्धेरिति वाच्यम् । लिङ्गविशिष्टपरिभाषाया अनित्य-त्वज्ञापनार्थत्वात् । तेन समासान्तादिविधौ लिङ्गविशिष्टपरिभाषाया अप्रवृत्तिः । नन्वत्यन्तस्वार्थिकेषु ङ्याब्ग्रहणासंबन्धेपि थकात्वतन्त्रिति ज्ञापकेन तद्धितानां सुबन्तादेवोत्पत्त्या लोहिताल्लिङ्गबाधनं वेति पुनरसङ्गतमित्यत आह । अत्यन्तस्वार्थि-कानामिति । अनन्तभावादिति । एतदुत्तरमनन्तस्येति शेषः । तस्य च द्विवचनाभाव इत्यनेनान्वयः इदं चोक्तार्थानामितिन्यायमननुसन्धाय प्रवृत्तम् । एकत्वं स्वत्वं चोक्तार्थः । तदुक्तस्य चाविवक्षितत्वात्र सुबन्तस्य द्वित्वमित्यर्थः । विभक्तयभावेनेति । अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवोत्पत्तेरिति भावः । नन्वेतद्भाष्यं सुबन्तात्त-द्धितोत्पत्तावप्युपपन्नम् । नित्यत्वाद् द्वनि थकादेशे च भत्वेन पदत्वाभावान्न तद्धि-तप्रकृतीद्धत्वम् । वोप्सायां स्त्रीत्वैकत्वयोरनन्तर्भावात् न तद्धितान्तस्य पदस्य । कैयटस्त्वसंगत एवेत्यरुचेराह । पुंयोगादितिसूत्रेइति । अधिकसापेक्षत्वेनेति । इदुर्गतत्वरूपाव ङ्गापेक्षत्वेनेत्यर्थः । न च सुबन्तद्वयसापेक्षसमासापेक्षयैकं सुबन्तापे-क्षाणप्रत्ययस्यैवान्तरङ्गत्वमिति वाच्यम् । एतद्भाष्यप्रामाण्येन पदद्वयसापेक्षादपि विशेषापेक्षस्य बहिरङ्गत्वात् । उक्तरीत्यैवेति । सामान्यापेक्षत्वेनेत्यर्थः । उक्तदिशा पदद्वयापेक्षत्वेपि समासस्याणपेक्षायामन्तरङ्गत्वं बोध्यम् । अन्यत्रविस्तरइति । स्पष्टं चेदं सर्वमत्रत्यभाष्यकैयटयोः । तत्र हि ङ्याब्ग्रहणस्य कालितरेत्यादिप्रयोजनमुप-न्यस्य तस्य बहुमालकेत्यादौ दोषमुद्भाव्य स्त्रीप्रत्ययोपि स्वार्थिकः समासान्ता अपि स्वार्थिकास्तत्र परत्वात्समासान्ता भविष्यन्तीत्युक्तम् । कालिकेत्यादौ स्त्रीप्रत्ययात्पूर्वं परत्वादत्यन्तस्वार्थिके कनि प्रत्ययस्थादितीत्वेन सिद्धिः । लोहितिकेति तु लोहिताल्लिङ्गबाधनं वेति वचनेन सिध्यतीत्युक्तम् । भाष्ये कैयटे च ङ्याब्ग्रहणप्रत्याख्यानेन समासान्ते परिहारः कालितरेत्यादौ

॥ पूर्वोक्तन्यायेनान्तरङ्गत्वात्स्त्रीप्रत्यये प्रकर्षप्रत्यय इत्युक्तम् । एवञ्चात्यन्तस्वा-र्थिके कनि इत्याद्यटितमार्यकेत्याद्यसाध्वेव । तत्रनेत्रीति । टाङसीत्यादौ । विभक्ति-श्च । ननु नेणि श्रीणीत्यननुवर्त्य तिङ एतन्मात्रानुवृत्तौ विभक्तिपदेनैकप्रत्यय-ग्रहणात्प्रथमयोरित्यादौ पण्णा प्रत्ययानां ग्रहण न स्यात् किन्तु द्वयोरेव तत्र सौर-जादित्वाभावेनौजसोरेव ग्रहण स्यात् इत्याशङ्क्याह । प्रथमयोरिति । बहुवचना-पत्तिरिति । द्व्येकेऽभ्निति स्यादिति भाव । यत्तु स्वरितात्संहितायामिति सूत्रे कै-यटव्याख्यावसरे द्व्येकेषामितिस्यादित्यभिनवविवरणे उक्तम् । तद्भ्रमसात् । द्वन्द्वेचेति निषेधेन सुडप्राप्ते । भर्तृदारयोरिति । बहुवचनान्तस्योत्तरपदत्वे बहु-वचनमेव । पूर्वपदत्वे तु द्विवचनमित्यन्ये । एकदेशविकृतन्यायेनेति । आनुमा-निकस्थान्यादेशभावेनेत्यर्थ । सरूपाणामेकशेप एकविभक्तौ । तत्रस्योदाहरण-माह । यथाभ्यामिति । भ्याग्रपीत्यर्थ । अन्ये तु प्रातिपदिकानामेकशेषे मातृ-मात्रो प्रतिषेधो वक्तव्य माता च जनयित्री मातारौ च धान्यस्य मातृमातार इति वैरूप्यविषयोदाहरणोपन्यासेन यस्यापि विभक्त्यन्तानामेकशेषस्तेनापि मातृमात्रो-प्रतिषेधो वक्तव्यस्तस्यापि सरूपाणि मातृभ्या मातृभ्या चेति । अथ मतमेतत् विभक्त्यन्ताना सारूप्ये भवितव्यमेवैकशेषेणेत्याशयभाष्येण च भ्यामेकशेषो भव-त्येव । अर्थभिप्रतिषेधादनैकशेषो नेति कैयटोक्त तु न युक्तम् । तैरित्यनुप्रयोगे-ष्वयर्थावगतिसभवात् । सा च तौ च तैरित्येकशेषप्रभवात् । अर्थविप्रतिषेधेनैक-शेष इति वचनाभावाच्च । अत एव प्रातिपदिकानामेकशेष इति पक्षे एकविभक्तौ यानि सरूपाणि तेषामेकशेष इति एवकारगर्भेतो वाक्यार्थनिष्कर्षो भाष्यकृता दर्शित । अपकर्षस्य भाष्यकृता कुत्राप्यनाश्रयणाच्च । अत एव प्रातिपदिकल-क्षमाश्रित्यैकशेषप्रत्याख्यानेन फलभेद । तत्र हि मातृभ्यामित्यत्र सारूप्य तन्त्रं सनरति मातारावित्यादौ च नेत्याहु । तद्धितान्तादौ वैरूप्यादिति । तथा च यानि रूपाण्येवेत्युक्तौ हरिणीशब्दयोरेकशेषो न स्यात् । एवकारानपकर्षेतु जन-नीवाचिपरिच्छेत्तृवाचिनोरेकशेषापत्तिरित्युभयत- पाशारज्जुरिति तत्परिहाराय विभक्ता-वित्यावश्यकमिति भाव । अन्ये त्वेवकारो नापकृष्यते ऽदर्शनात् । मातृशब्दयो-स्तृक्योर्भ्यामेकशेषो भवत्येवेत्युक्तम् । एवं शुद्धदन्तकुमारीशब्दस्यौजसोरेकशेषो भवत्येव । शसितु न । यणपूर्वसवर्णाभ्या रूपभेदात् । मातृमात्रो प्रतिषेधो वक्तव्य

इति वार्तिकं तूपलक्षणम् । एकविभक्ताविति तु सहविवक्षाया उपलक्षणार्थम् । सह-विवक्षायामेकविभक्तेरेव दर्शनात् । तदेतदभिप्रेत्य भगवता भाष्यकृतोक्तम् । एक-विभक्ताविति किमर्थम् । पयः पयो जरयति वासो वासश्छादयति ब्राह्मणाभ्यां कृतं ब्राह्मणाभ्यां देहीति असहविवक्षाविषयप्रत्युदाहरणदानेनैकविभक्तावित्यस्य सहविवक्षोपलक्षणत्वं स्पष्टमेव सूचितं विभक्तिः सारूप्येणाश्रीयत इति प्रातिपदिकै-कशेषोपपादनप्रकरणस्थं भाष्यं त्वेकदेश्युक्तिः । नचैवं सति मातृमानरावित्यत्रा-प्येकशेषापत्तिः । शिष्यमाणस्य कृतदीर्घत्वे च तेन जननीबोधासंभवेनाकृतदीर्घत्वे च तेन परिच्छेत्तृबोधासंभवेनैकशेषाप्रवृत्तेः । एकशेषशास्त्रं हि एकस्य नानेकार्थकतो-त्पादकं किं तु लोकसिद्धानुवादकम् । न हि लोके दीर्घोपधान्मातृशब्दाज्जननीबोधो ह्रस्वोपधाच्च परिच्छेत्तृबोधो दृष्टः । तदेतदभिप्रेत्य भगवता भाष्यकृतोक्तम् शब्दस्य स्वाभाविकी वा ऽनेकार्थता स्यात् वाचनिकी वा । तद्यदि तावत्स्वाभाविकी अशिष्य एकशेषः । किं कारणमेकेनोक्तत्वात् तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम् । यदि तर्हि एकेनानेकस्याभिधानं भवति प्लक्षन्यग्रोधौ एकेनोक्तत्वा-दपरस्य प्रयोगो ऽनुपपन्नः । इदानीमेवोक्तमेकेनानेकस्याभिधानं भवतीति । सरू-पाणामेकेनानेकस्याभिधानं भवति न विरूपाणाम् । किं कारणं सरूपाणामेकेनानेक-स्याभिधानं भवति न विरूपाणामभिधानं पुनः स्वाभाविकमिति । एतद्भाष्येण हि शिष्यमाणस्य स्वविरूपार्थबोधकत्वं स्पष्टमेवोक्तम् । अत एव श्येनन्त श्येनन्त हरिणीशब्दयोस्तद्धितविवक्षानिमित्तकपुंवद्भावापेक्षया ऽनैमित्तिकत्वेनान्तरङ्गत्वादेक-शेषे कृते स्वरभिन्नानामिति श्येनन्तस्य शेषे तस्मात्तस्य समूह इत्यर्थे ऽणि हारित-मिति रूपं न भवति । तच्छब्दघटितस्य विरूपत्वेन हरिणीशब्दार्थाप्रतिपादकत्वात् । यत्र तु तद्धिते द्वयो रूपं समानं तत्र भवत्येवैकशेषः । यथा हरिण्योरपत्ये हारिणे-याविति । अत्र भस्याढे इति पुंवद्भावो न । अढे इति पर्युदासादित्याहुः । तत्र-स्योदाहरणमाह । यथा ऽक्षामज्यन्तामित्यादि । यथा शब्दो ऽत्रोदाहरणार्थो न दृष्टान्तार्थः । अक्षशब्दः शकटाक्षस्य बिभीतकाक्षस्य देवनाक्षस्य च वाचकः एक-शेषेण तु नात्र निर्वाहः । एकत्वानन्वयेन सहविवक्षाया अभावात् । तया च तद्-र्थमावृत्त्यैकेन तन्त्रेणैव निर्वाहे एकशेषारम्भो व्यर्थ इति भावः । एकशेषानिर्वाह्यं स्थलान्तरमाह । एवमक्षो भज्यतामिति । अत्रैकवचनान्तत्वेनैकशेषः शङ्कितुमश-

कत इति भाव । शब्दतन्त्रमर्थतन्त्र चेति । अर्थस्य विजातीयत्वे शब्दस्यैकजातीयत्वे शब्दतन्त्रम् । अर्थस्यैकजातीयत्वे ऽर्थतन्त्रम् । पर्यायपरिवृत्त्यसहत्वेइति । पर्यायेण प्रवृत्ति परिवृत्तिस्तदसहत्वे इत्यर्थ । एकार्थकाना शब्दाना पर्यायेणैकार्थबोधनाय प्रवृत्तिर्न युगपद्भिन्नार्थकानामेकानुपूर्वीकाणामप्यक्षादिशब्दाना युगपदेवार्थबोधनाय प्रवृत्तिरर्थभेदात् । तथा च विभीतकाक्षवाचकाक्षशब्दस्य देवनाक्षवाचकाक्षशब्देन सह पर्यायपरिवृत्त्यसहत्वे युगपत्प्रयोगार्हत्वे भिन्नार्थत्वे शब्दतन्त्रमित्यर्थ । तत्सत्वे पर्यायपरिवृत्तिसहत्वे एकार्थत्वे इति यावत् । ननु तन्त्रस्थले बोद्धुगवृत्त्यैव बोध । एकशेषस्थले तु नैव तथा च कथ तन्त्रेण निर्वाह इत्याशङ्क्याह । अन्वयिपदार्थभेदादिति । आवृत्त्यैवेति । शब्दावृत्त्या पदार्थोपस्थित्या वृत्त्या चेत्यर्थ । दर्शनेनेति । घटोय घटोयमित्यादौ । अन्यथासहविवक्षायाम् । सारवोसारवोर्मिजइति । सरूपा भाव सारव दाण्डिनायनेति निपातनात्साधु । आरवेण सहित सारव । सारवश्चासौ सारवश्चेति कर्मधारय । तथा चोक्तभाष्येण सारवेत्यादिमहाकविप्रयोगेण च सहविवक्षायामेवोक्तनियम इति सिद्धम् । केचित्तु तिष्यपुनर्वस्वोरिति सूत्रात् द्वन्द्व इत्यनुवर्त्य द्वन्द्वे प्रसक्ते सत्येकशेष इत्याहु । ननु सरूपाणामेकशेष एवेति नियमवत्सरूपाणा सह विवक्षायामेवैकशेषो नासहविवक्षायामित्यपि नियमोङ्गीकार्य । तेन तृतीयान्तचतुर्थ्यन्तयोर्ब्राह्मणाभ्यामित्यनयोर्ब्राह्मणाभ्या कृत ब्राह्मणाभ्या देहीति पृथक् प्रयोग । नत्वेकस्य निवृत्ति । अन्यथा ब्राह्मणाभ्या कृतन्देहीति प्रयोगापत्तिरित्याशङ्क्य द्वितीयनियम स्वीकृत्योक्तप्रयोगापादनेनेष्टापत्तिमाह । असहविवक्षाविषयेणेति । पयइति ।। एक प्रथमान्तमेक द्वितीयान्तम् । नीलोत्पलस्पर्धिनीति । एक द्विवचनान्त नपुंसक नेत्रे इत्यस्य विशेषणम् । एक ङ्यन्त तनोर्विशेषणम् । अन्यपदार्थावगमयइति । ननु चार्थे द्वन्द्वविधानात्तुल्यन्यायत्वात् द्वन्द्वमित्येकवचनान्तदितदिति चेत्सत्यम् । नन्वर्थ अर्थ प्रति तदपि प्रत्यर्थमिति घटपटाविति द्वन्द्व कस्मान्न भवतीत्याशङ्क्याह । अनेकघटादिपदानामिति । तत्परइति । एकशेषे द्विवचनापत्ते । सह विवक्षाभावेन तदसम्भवाच्चेति भाव । इत्यर्थबोधयितुमिति । एकग्रहणसामर्थ्यादप्यर्थान्तर्भावेण समास । सरूपाणीत्यस्य विरूपाणि नेत्यर्थ । एवञ्चैवकारापकर्षो मास्तु तदपकर्षे तृकार्यमस्मादकैकग्रहण मास्त्विति

भावः । दूषणंभाष्येउक्तमिति । समाहारद्वन्द्वविषये एकशेषे तु एतद्दूषणासंगतिरिति भावः । अत्र वदन्ति । सोऽयमाश्विकः साचेयमाश्विकी तच्चेदमाश्विकं तदिदं सर्वमाश्विकं तानीमान्याश्विकानीति अबहुप्रकृतीनां यत्र वृत्तिस्तत्र फलसेनेति वार्तिकेन समाहार द्वन्द्वस्य निषिद्धत्वात् अप्रसङ्गात् द्वन्द्वे प्रसक्ते विधीयमान एकशेषस्तदा न प्राप्तः । इतरेतरयोगद्वन्द्वे तु प्रसक्ते एकशेषो विधेय इति । बहुवचनप्रसंगे एकशेषो विधीयते बहुवचने प्राप्ते एकवचनार्थमेकवाच्यास्यान्यतरस्यामिति स्यात् । किंचानेनेतरेतरद्वन्द्वयोगे एकशेषाभावोऽप्यतान्तावताऽपि तस्य सार्थक्यसंभवात् । तस्माद् घटश्च घटश्चानयोः समाहारे घट इत्येकशेषो भवत्येव । न च नपुंसकत्वप्रसङ्गः । समाहारद्वन्द्व एव तद्विधानात् । एवं च घटघट इत्याकारेणाभिधानं नाश्रयणीयमित्यपरमनुकूलमिति । अत्र ब्रूमः समाहारद्वन्द्वविषये एकशेषप्रवृत्तौ विभक्त्यन्तानामेकशेष इति पक्षे ऽयं तर्हि दोषः कश्चिद्वचनलोपः । द्विवचनबहुवचनविधिर्द्वन्द्वप्रतिषेधश्चेति भाष्ये कश्चिदिति शिष्यमाणस्यैकवचनस्य लोपो वक्तव्य इति कैयटग्रन्थश्च व्याकुप्येत । एकवचनान्तस्यापि साधुत्वे तु तदसङ्गतिः । तेनैकवचनान्तस्यासाधुत्वलाभात् । एतद्भाष्यप्रामाण्यादेव समाहारद्वन्द्वविषये नैकशेषः । अत एवैकशेषोदाहरणानि द्विवचनबहुवचनान्तान्येव भगवता भाष्यकृता प्रदर्शितानि । नत्वेकवचनान्तानि । सूत्रशेषे च भाष्ये केष्वर्थेषु लौकिकाः शब्दान्प्रयुञ्जते । लोके चैकस्मिन्वृक्ष इति प्रयुञ्जते । द्वयोर्वृक्षाविति बहुषु वृक्षा इति । तेन गार्ग्योऽहं सः पिता इत्यादिभ्य एकवचनान्तेभ्यः क्रमेण गार्ग्यायणेहंसीमानुबोधो न । गङ्गायां मीनघोषाविति च न । निवृत्तभेदानामिति । भेदेनाप्रतीयमानानामित्यर्थः । तथा च तिङन्तेभ्यो ऽभेदेनैव शब्दशक्तिस्वभावेन प्रतीत्या नानेकशब्दप्रयोगप्रसङ्ग इति भावः । ननु मातृमात्रोः प्रतिषेधो वक्तव्य इति वार्तिकस्योगः कथं एकशेषस्य दुर्वारत्वादिति चेन्न । एकशेषे सति विगलितावान्तरगमात्तद्भावः । एवं ब्रतार्थो विवक्षितो जननीवाचिनः परिच्छेदवाचिनश्चैकशेषप्रतिषेधो वक्तव्य इति । एष चार्थो मातारित्युक्ते न गम्यत इति कैयटेन समाधानात् । एतनान्हो मध्ये वा मनो रायरमाविति प्रयोगोपपत्तिः सङ्गच्छते । अत्र च नैवयोमर्मविभृङ्मूर्जेति निर्देशोपि गमकः । स्वरभिन्नानामिति । भिन्नस्वराणामित्यर्थः । ननु स्वरभेदे कथं सारूप्यमिति चेन्न । रूपशब्देन वर्णानु-

पूर्वा एव ग्रहणात् । तथा तृज्वत्क्रोष्टुरिति सूत्रे भाष्यम् । नहि स्वरो रूपवा-निर्तिं । नविभक्तौतुस्मा. । ननु प्रागुदिशीयाविभक्तौ नाय निषेधः प्रवर्तते इत्येवोदित्वेन ज्ञाप्यनामत आह । अत एवेति । उक्तज्ञाप्यांश विहाय सामा-न्यतो ऽनित्यत्वज्ञापनादित्यर्थ । अन्यत्रेति । न चैतत्तकारे तत्फलम् । अनु-स्वारेणनाप्युपपत्ते । एकवचनम् । नन्वेकवचनग्रहणेन प्रत्ययग्रहणपरिभाषाप-निश्चते । एकवचनशब्दस्य प्रत्ययमात्रबोधकत्वाभावात् । स्वमावेकवचन इत्यादा-वर्थबोधकत्वस्याप्यङ्गीकारात् । सु' सम्बुद्धिरित्युक्तो तूपतिष्ठेन । न च सम्बा-निधानिनि निषेव । यथा सामान्तिशब्दयोगार्थोपपत्तये उक्तनिषेधाप्रवृत्त्या तद-न्तानिधिन्नथ।त्रापि तदन्तनिभितद्धकाया अनिवारणात् । आमन्त्रणसाधनत्व-स्यैव सम्बोधनसाधनस्यापि तदन्त एव सम्भवादित्याशङ्क्याह । सम्बुद्धाविति । इत्यनेन।सम्बुद्ध्या.क्षिप्तस्यैत्यस्य तदुपस्थापितस्यर्थ इति भाव । फलाभावादिति । आक्षेपकोपपत्तिरूपाक्षेपफलाभावादित्यर्थ । सम्बुद्ध्युपपत्तिरिति । प्रयोग इति शेष । तथा च प्रयोगे तद्वचनेऽपि प्रयोग एवाक्षेप स्यान्न तु सूत्रे इति भाव. । आक्षिप्तस्याक्षेपकानु-पपादकत्वनाक्षेपासम्भवमुक्त्वा ऽऽक्षेपमूलभूतानुपपत्तेरभावेनापि तदसम्भवमाह । किं चेति । उक्तस्यार्थस्य यस्मात्स विहितस्तदादेरित्यर्थ स्यादत आहेति । अन्ये त्वङ्गा-क्षेपाभावे पञ्चइहस्वान्तत्वरा या सम्बुद्धिस्तस्या हलो लोप इत्यर्थ हेकतरादित्यादौ सम्बुद्धिलोपवारणात् । अङ्गाक्षेपो व्यर्थ इत्याशङ्क्याह । कुरुतीत्याहु । ननु पौर्वा-पर्यभावो प्यन्तादिवद्भावेनैव साध्यनामत आह । ताद्रूप्यानतिदेशादिति । पौर्वापर्या-नतिदेशादित्यर्थ । प्रत्यान्तत्वानतिदेशादिति तु नार्थ । तस्य स्वत सिद्धत्वेना-तिदेशानपेक्षत्वात् । अन्याक्षिप्तस्य । अन्योपस्थापितस्य । वस्तुतस्तु यद्येनोपस्थाप्यते तस्य तेनैवान्वय इति नियमे मानाभाव । गुणश्रुत्योपस्थापितस्यैक इत्यस्याङ्गे-नान्वयाद् व्यभिचारश्च । यदि च तस्याङ्गद्वारा गुणेनान्वयस्तर्हि प्रकृते ऽपि हल्द्वारा सम्बुद्ध्यान्वय इति तुल्यम् । एतदर्थमेवेति । अङ्गादित्यस्य हल्यन्वयसूचनार्थमि-त्यर्थ । नन्वेवमपि कतरदित्यत्र लोपो दुर्वार. । अदन्तस्य यस्माद्विहितस्तदादि-त्वात् । तकारस्य च सम्बुध्यवयवत्वादिति चेन्न । प्रत्ययघटकमागघटितस्यैव तदादेर्ग्रहणेनादोषात् । न चैव कुलेत्यत्र लोपानापत्ति । मकारस्य सम्बुद्ध्यवयव-त्वोपपादनायामित्यस्य परादिवद्भावेन सम्बुद्धित्वस्य वक्तव्यतया कुलेत्यस्य प्रत्य-

ययटकभागघटितत्वादिति वाच्यम् । संबुद्ध्यवयवत्वस्योपलक्षणत्वेन पराद्विवक्षानाश्रयणेनादोषात् । मकारस्य संबुद्ध्यवयवत्वं पूर्वमासीदेवेत्याशयात् । नन्वेङ्ह्रस्वात्परसंबुद्धेर्लोप इत्यर्थेपि कुलेत्यत्र लोपो भवत्येव एकदेशविकृतन्यायेन मस्य संबुद्धित्वात् । तथा चोक्तव्याख्यानक्लेशो व्यर्थ एवेत्याशङ्क्याह । मस्येति । संबुद्धित्वाभावादिति हेतोर्ह्रस्वान्तङ्गात्परसंबुद्धेरभावादिति व्यवहितसाध्येनान्वयः । स्थानिभूतालधर्मत्वेनेति । अल्स्थानिभूतो यः सुरिति समुदायस्तद्धर्मत्वाभावेनेत्यर्थः । तथा च स्थानिवदादेश इत्यत्र स्थानिपदस्यादेशविधायकशास्त्रघटकस्थानपष्ठ्यन्तपदजन्यप्राथमिकोपस्थितिविषयपरत्वेपि संबुद्धित्वस्य तद्धर्मत्वाभावादतिदेशो न स्यादिति शङ्काभिप्रायः । तस्यानल्विधित्वादिति । तस्य संबुद्धित्वस्यानलधर्मत्वादित्यर्थः । यथाश्रुतो पूर्वोत्तरपक्षावसङ्गतावेव । संबुद्धित्वस्य स्थानिभूतालधर्मत्वशङ्कायाः समुदायस्याम्स्थानित्वोपपादनेनैव निवारणीयतया संबुद्धिसञ्ज्ञायाः समुदायोद्देश्यकत्वोपपादनस्यासङ्गतत्वात् । इदमयुक्तम् । पूर्वोत्तरपक्षाभ्यां संबुद्ध्यवयवत्वस्य विशेषणताया एवावगमात् । तत्र चोक्तरीत्यादोषात् । अङ्गाधिकारस्थादिति । एतेनाङ्गसञ्ज्ञाकृतम्बहिरङ्गत्वमुक्तम् । न च गुणबहिरङ्गत्वस्य पूर्वपक्षाभिप्रेतत्वे परत्वान्नित्यत्वाच्चेति समाधानग्रन्थासङ्गतिरिति वाच्यम् । सञ्ज्ञाकृतबहिरङ्गत्वस्यामिनि न्यासि परत्वान्नुडित्यादिभाष्येण समानाश्रये त्वपरनिमित्तापेक्षत्वेन बहिरङ्गत्वस्य चानाश्रयणमिति समाधानग्रन्थाशयात् । सामर्थ्यादेव । एङ्ग्रहणसामर्थ्यादेव ! एङ्ह्रस्वग्रहणसामर्थ्याच्चेति । ह्रस्वग्रहणं हेलक्ष्मीत्याद्यर्थं सन्निपातपरिभाषया ह्रस्वस्य संबुद्धिलोपानिमित्तत्वे तद्वैयर्थ्यम् । अभ्युच्चयइति । नित्यानित्ययोर्विप्रतिषेधायोगादिति भावः । अनवकाशत्वसग्रहइति । ननु तथा सति गुणे कृते लोपाप्रसङ्ग इति चेन्न । एङन्तत्वनिमित्तकलोपप्रवृत्तेः सुलभत्वात् । विषय भेदे उत्सर्गापवादभावो नेति त्रिपथगायां निरूपितं न विस्मर्तव्यम् । अग्ने इत्यत्र लोपाप्राप्तिविषये गुणस्य चारितार्थ्याद् गुणस्य नलोपापवादत्वमित्याशङ्क्याह । नपुंसकइति । बाधकाबाधितप्राप्तेरभावेपि प्राप्तिमात्रस्यैवेति भावः । द्विमात्रवारणायेति । न चैवं पूर्वसवर्णदीर्घेण सिद्धेस्तद्वैयर्थ्यमिति वाच्यम् । गौरीत्यादौ त्रिमात्रप्रवृत्त्यर्थत्वात् । वा छन्दसीत्यनेनैकवाक्यार्थत्वाच्च । तस्माच्छसः । ननु तस्मादिति मास्तु । अक इत्यनुवर्त्याकः परस्य नत्वविधानेन

ठिङ् इत्यादावदोषात्। न चादे. परस्येत्यादेनेकारे हरीनित्यत्र दीर्घश्रवणानापत्ति। शस सो न पुंसीति न्यासेनादोषात्। अक परस्य शस सस्य न इत्यर्थ। पूर्वसवर्णदीर्घस्य तक्रकौण्डिन्यन्यायेन बाध स्यादिति तु न शङ्क्यम्। पूर्वसवर्णदीर्घे ऽकः परत्सो ऽसम्भवेनोक्तन्यायाप्रवृत्तावनवकाशत्वेन त बाधित्वा सत्वे प्रवृत्ते पश्चात्तत्प्रवृत्तेः। ननु तितउनित्यत्रोत्सर्गे कृते नत्वचारताथ्याद्दुक्तन्यायेन तस्य बाधे पुनरप्रवृत्तिरिति चेत्सत्यम्। अक इत्यस्य सकारविशेषणत्वेनादोषात्। अकृ च सामर्थ्यात्प्रत्ययानवयवस्तथा च पूर्वसवर्णदीर्घोत्तरमेव नत्वप्रवृत्तिरिति न कश्चिद्दोष इत्यभिप्रायेण शङ्कते। तरगादिनि। किमिति। अट्कुप्वाङ्। तदुक्तिस्थवननादिति। वस्तुतस्तु कृत्स्न सूर्प आर्भोदित्यादौ णत्ववारणाय तु नैव व्यवायेनेति लघुन्यासेन सिद्धे ऽट्कुप्वग्रहणमेतैरेव व्यवाय इत्यर्थक मनिष्पतीति सूपस्थ भाष्यम्। आश्रसभान्नायिकेरिति। वर्णोरित्यर्थ। अङ्गभागे तु न वर्गत्वम्। यस्मात्प्रत्ययविधिः, गुणानां चेति न्यायेन तस्मिन्निति परिभाषाया अप्रवृत्तिमाशङ्क्याह। गुणकृतात्मेति। "गुण कृतात्मसंस्कार. प्रधान प्रतिपद्यते। प्रधानस्योपकारे हि तथा भूयसि वर्तते, इति न्याय.। वस्तुतो गुणानां चेति न्यायो नात्र शास्त्रे समाश्रीयत इत्युक्त प्राक्। इयडायापत्तिरिति। आदिपदग्राह्य चिन्त्य यत्तु पाठकेनोक्तमादिपदग्राह्यमेति चेति लोपो ज्ञाप्य इति तच्छम्। हरिमक्षर्त्तव्ये इकारस्य स्थानिवत्वादभीयादित्यसिद्धत्वाच्च न च न पदान्तेति निषेध। लोपस्य पदानवयवत्वात्। चिणो लुङ्न्यायेन समानाश्रयत्वाच्च। पाम्शसोरित्येतत्साहचर्यात् सुप एवाचूप्रत्ययस्य ग्रहणे तु स्त्री औ इत्युदाहर्तव्यम्। अशब्दादौप्रत्यये रूप परादिवद्भावेन च प्रत्ययत्वम्। एव वारि औ इत्यत्रैकौ ऽचीति नुम् स्त्रीशब्दस्येयच्छब्देन समासे ऽनिसिन्वितीयङ्। न च स्थानिवद्भाव। न पदान्तेति निषेधात्। ननु विभिग्रहणे कृतेपि स्त्रीत्यस्य सुनिरूपिताङ्गत्वमादायेयङ् दुर्वार इत्यत आह। प्रत्यासत्त्येति। तदादिग्रहणस्य भवामीत्यादिमूलोक्त प्रयोजनं न युक्तम्। विधानसामर्थ्येन तत्राङ्गस्येत्यस्यासम्बन्धकल्पनया दीर्घसिद्ध। इन्ते स्कन्त्यभिधाने दृश्यमानाभावादित्यभिप्रेत्य स्वय तस्य फलमाह। तदादीति। वस्तुत श्रिकीर्षामित्यादौ चारित्तार्थ्यान्मूलोक्तमपि युक्तम्। ननु सम्प्रसारण इत्यत्र सम्प्रसारणपद लक्षणया स्थानिपरमतो न दोष इत्यरुचेराह। किञ्चेति। नद्व

न लुमता तस्मिन्निति न्यासे लुमता लुप्ते प्रत्यये परतो यत्पूर्वस्य कार्यं तदेव निषि-ध्यत इति नात्र दोष इति चेद्दोषान्तरं गृहाण । श्रियावित्यादौ तावदियङनाप-त्तिर्दोषः । सत्यहोषे व्यपदेशिवद्भावाऽप्रवृत्त्या श्रीयस्यानङ्गत्वात् । एवं जुहो-तीत्यादौ गुणो न स्यात् । गुणस्तु करोतीत्यादौ चरितार्थः । प्रत्यये इत्युक्तौ तु तत्परकस्य मुख्यतदादित्वव्यपदेशभाजो ऽसत्त्वेनासहायत्वाद् व्यपदेशिवद्भावः सुल-भः । अथास्य कथंचिद्व्यपदेशिवद्भावं मन्यसे तदा श्रयथमित्यादावियङाद्यापत्तिः । न लुमतेति निषेधस्योक्तविषया ऽप्रवृत्तेः । जुहोत्यादाविति । तत्र हि अङ्गसंज्ञायां न लुमतेति निषेधो न प्रवर्तते । तस्या अङ्गत्वविशिष्टानुद्देश्यकत्वादित्युक्तम् । ननु प्रत्यासत्त्या भिन्ननिमित्तकाङ्गस्यैव ग्रहणान्नोक्तदोष इत्याशङ्क्य समाधत्ते । भिन्नेति । चतुर्थ्येकवचनस्येति । न सत्यप्येकवचनस्य । संश्लेषः संबन्धः । यत्रो-दित्वसापेक्षेति । इदं चाद्यपक्षे बहिरङ्गमिति प्राचीनमतेन । किंचातिदेशिकेनेति । इदं प्राथमिकपरिहाराभ्युपबृंहणं न समाधानान्तरम् । इत्युक्तमस्तीति । परिभाषे-न्दुशेखरेण विरुद्धम् । ननु झलि किमिति शङ्कां निरस्यन् जसादावतिव्याप्तेः स्फुटत्वादित्याशङ्क्याह । उत इति । उत इत्यत्र झलीत्युक्तौ तु भिपि वृद्ध्यना-पत्तिः । मयखोरित्युक्तौ स्यतो दीर्घ इत्यादावपि तदनुवृत्तौ भवामि रामाभ्यामि-त्यादावेव दीर्घः स्यान्न पचाव इत्यादौ । अननुवृत्तिज्ञापनार्थमिति । अन्ये तु सु-पामिति इत्यतो ऽनुवर्तमानसुप्पदवन्मध्ये यञीत्यनेनतत्सम्बद्धत्वेन तत्सम्बद्धस्य निवृत्त्यै सुप्यनिन्त्यत्र सुप्पदवन्मध्ये यञीत्येतत्सम्बन्धस्य हलीत्यस्य निवृत्तये झल्-ग्रहणं स्यादित्यज्ञापकमेतत् संनिपातपरिभाषाप्रवृत्त्यभावस्य । तत्सम्बन्धस्यानुवृत्तौ तु रामेभ्य इत्यादौ एत्वं न स्यात् । सुपीत्यस्य तु यञ्सम्बद्धत्वेऽपि झल्ग्रहणसामर्थ्यात्के-वलस्यानुवृत्तिः । किं च सुपां सुलुगिति यादेशे एत्वाभावार्थं झल्ग्रहणं एत्वे संनि-पातपरिभाषया अप्रवृत्तौ हलि सर्वेषामिति निर्देशो गमक इत्याहुः । ज्ञुमापत्तेरिति वर्णादाङ्गमिति परिभाषया गुणं बाधित्वेति शेषः । सन्निपातपरिभाषया नुम्वारणे तु तयैव गुणोऽपि न स्यादिति भावः । इष्टि तु एध्य इत्यादौ हलि लोपानापत्तिर्बोध्या । बाधित्वेति शेष इति । यत्तु पाठकेनोक्तम् । एवं सति पठित्यादौ आन्तरतम्यात्पकार एव स्यान्न टकारः । अल्पप्राणतया प्रयत्नभेदात् । तस्माज्जश्त्वस्यासिद्धत्वाज्जश्त्वं ततश्चर्त्वमित्येव युक्तमिति । तन्न । उत्सर्गापवादभावपरित्यागे कारणाभावात् ।

परियादो तु न दोष । शसिदघो- प्रतिषेधेन चादयो झल्पदेन चाभिहास्य जश्त्विधौ जश्भिन्नस्य ग्रहणद्योतनेन जश्त्वोत्तरमेव चर्त्वप्रवृत्ते । समानाश्रये चरितार्थस्य सवर्णदीर्घस्य व्याश्रये गुणेन वैरूप्यसम्पादकादेशप्रवृत्तियोग्ये चरितार्थस्य चर्त्वस्य सारूप्यसम्पादकादेशप्रवृत्तियोग्यस्थले चर्त्वस्यासिद्धत्वेन तस्य जश्त्वे बाधनाच्च । अगुणादौ विशेषो ऽनन्तरस्यापर इति न्यायात् । अन्ये तु प्रान्तापाडिति निर्देशेन जश्त्वचर्त्वयोरप्पगरिमादभाव एव नेत्यन्यथा जश्त्व आश्रित्य चर्त्वे पदान्तस्य तदभावपक्षे जश्त्वेन डकारस्य श्रवणापत्तौ टान्तनिर्देशानुपपत्ति । न च पुनर्भावोपक्रमाच्चर्त्वे तन्निर्देशोपाय वाच्यम् । जश्त्वे पुनश्चर्त्वाभावस्योपक्रमे पुनर्भावपक्षे चर्त्वभावाश्रयणायोगात् । तथात्वे शिशिरतुरित्यादौ द्वित्वे कृते सम्प्रसारणे शिशुवतुरिति स्यादित्याहुः । व्यर्थम्यादिति । ननु तादेशे यथो द्वितीया इत्यस्यानन्तर स आद्यन्तावुक इति कार्यम् । शरोत्यनुवृत्त्या शरादावादि सावुके सस्य द्वितीय इत्यर्थ । स चान्तरतम्यात्थ एव । तासस्त्योरित्यत्र सीति कर्त्तव्यम् । न च लाघवाभाव । तकार कृत्वा थकारकरणापेक्षया साक्षात्थकरणाऽपेक्षयाक्रियालाघवात् । थकाराभावे च खरि चेति चर्त्वेन तकार । एव सिद्धे तत्त्वविधानमित्याशयात् । प्राचा मते तस्य बहिरङ्गत्वेनासिद्धत्वात् द्वितीया प्रवृत्तेश्च । पडित्यत्रेति । अनन्तरत्वान्नुमपि इत्यत्र तदङ्गवृत्तिं विना । ननु कशयक्रमणे इति निर्देशेन दीर्घमो सन्निपातपरिभाषा न प्रवर्त्तते । अत एवाने सुपिति सूत्रे भाष्ये सुटिति न्याम आपादित । नामीति सूत्रे भाष्ये चारोनामित्युदाहृतम् । न तु सृष्टाणामिति । परत्वान्नुपि चर्त्वस्य न्याय्यत्वात् । श्वानलोप इति सूत्रस्य शकाराभावे यथानामित्यादौ नामीति दीर्घत्वं बाधित्वा परत्वान्नलोप स्यादिति भाष्य- तु सुपि चेति दीर्घापेक्षया नलोपस्य नित्यत्वाभिप्रायमिति न तद्विरोध । एव च रामाणामित्युदाहरणे नामीत्यस्योपन्यासो न युक्त इत्याशङ्क्य समाधानान्तरमाह । कृताकृतेति । नामीति सूत्रे भाष्ये ऽध्वोनामित्युदाहरणोपन्यासस्तदन्यथासिद्धत्वाभिप्राय । न तु सृष्टाणामित्यस्याउदाहरणत्वाभिप्राय इति भाव । अयादिवाचनमारुह्येति । इदं तु भाष्यमायादयो धा गुपूधूपविच्छिपणिपनिभ्य आय सार्वधातुके इति न्यासाभिप्रायम् । व्युत्पत्तिपक्षे ज्ञापकमिति । अनश्च इत्यादो तु न दोष ।

पदद्वयाश्रयत्वे न बहिरङ्गत्वात्तया नुटो ऽसिद्धत्वात् । परं त्विदमुणादीनामप्युत्पत्तिपक्ष एवेति स्वसिद्धान्तविरुद्धम् । यत्तु कश्चिदाह । नुटीति न्यासे सन्निपातपरिभाषया नुट् दीर्घनिमित्तं न स्यात् नामीति न्यासे तु नुटो न दीर्घनिमित्तत्वमिति न सन्निपातपरिभाषाविरोध इति तन्न । नामीति न्यासे ऽपि नुटो घटकतया दीर्घनिमित्तत्वात् । नुटीति न्यासे ऽपि कष्टायेति निर्देशेन दीर्घविधौ सन्निपातपरिभाषाप्रवृत्त्यभावकल्पनासम्भवाच्च । इण् चेक् चेति इतरेतरद्वन्द्वे द्विवचनमिति भ्रमनिरासायाह । वर्णग्रहणमिति । ठकारेति । वर्गद्वितीयो न प्रथमः । तस्याल्पप्राणतया प्रयत्नभेदात् । द्वितीयमिति । ऊष्मणामपि विवृतत्वे ईषद्विवृतत्वमेव सुवचम् । सर्वादीनिसर्वनामानि । तद्गुणसंविज्ञानइति । तस्यान्यपदार्थस्य ये गुणा विशेषणानि तेषां कार्यान्वयितया संविज्ञानं यत्रेति विग्रहः । संयोगेन समवायेन वा यत्र वर्तिपदार्थसंबन्धी अन्यपदार्थस्तत्र प्रायेणातद्गुणसंविज्ञानः यथा पीताम्बरमानय लम्बकर्णमानयेत्यादौ अन्यत्रत्वतद्गुणसंविज्ञानः । यथा चित्रगुमानयेत्यादौ क्वचित्तु संयोगादिना वर्तिपदार्थसंबन्धिनो ऽन्यपदार्थत्वेपि अतद्गुणसंविज्ञानः । नागयज्ञोपवीती भोज्यतां लम्बकर्णो भोज्यतामित्यादौ । उद्भूतावयवभेद इति । उद्भूत आरोपितो ऽवयवस्तत्सहचरिता सङ्ख्या यत्रेति बहुव्रीहिस्तदाह । आरोपितेति । न हि तदन्तविधिस्त्विनेति । इदमयुक्तम् । इश्च इतरश्चेति सर्वनामसञ्ज्ञानिषेधार्थमावश्यकत्वात् । तस्मादन्यथर्थसञ्ज्ञाक्षिप्तसञ्ज्ञी सर्वादिभिर्विशेष्यते अपूर्वो वा तदन्तविधिरुपसङ्ख्यायत इति कैयटोक्तमेव युक्तमिति केचित् । भाष्यसूचितमिति । अथवाङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवती त्येतत् सूत्रस्य भाष्यसूचितमित्यर्थः । सर्वनाम्नोऽव्ययवटेरिति । न तु सुबन्तस्य टेः । तथा सति सर्वकाभ्यामित्यादौ दोषापत्तिः । ओकारसकारेति वार्तिकं तु युष्मदस्मच्छब्दविषयकम् । अव्ययसर्वनाम्नामित्यस्य श्रुतत्वात्तेन टेरित्यनेन संबन्धः । प्रातिपदिकादिति चाव्ययसर्वनामात्मकप्रातिपदिकप्रकृतिकसुबन्तपरम् । परमत्वान्वयोत्तरं कुत्साद्यन्वयविवक्षायामिदम् । कुत्साद्यन्वयोत्तरं परमत्वान्वये तु नेदमिति भावः । इदमयुक्तम् । सर्वनाम प्रकृतिकसुबन्तादित्यस्यानन्वयात् । परमभवकानित्यत्र भवच्छब्दस्य प्रत्ययलक्षणेन सर्वनामप्रकृतिकसुबन्तत्वेनाकच्प्रसिद्धेः । उत्तरपदे चेति निषेधस्तु पदान्तविधावेव । भवन्मते सुबुत्पत्त्यनन्तरं प्रातिपदिक-

मेव प्रकृतितया क्रियाकर्मप्रवृत्तेश्च । परमत्वकुत्सयोर्युगपदन्वये युगपदेव समासतद्धितवृत्तिसम्भवाच्च । परमसर्वकेति तु कथञ्चिदुदाहरणं शक्यमुपपादयितुम् । परिनिष्ठितविभक्त्या समासेपि समुदायादुत्पन्नसप्तम्याः सर्वनामप्रकृतिकत्वात्तदन्ताच्च स्मिन्नसम्भवात् । घटस्य सर्वनामप्रकृतिकसप्तम्यन्तत्वेपि तस्मात् स्मिन् परमादेस्तद्धितान्तत्वाभावेन प्रातिपदिकत्वानापत्तेः । शिवभागवतादाविव तद्धितपादने ऽपि तद्धितान्तत्वाभावेन समुदायस्याव्ययत्वानापत्तेः । तदनापत्तौ समुदायाद्विहितसुपो लुगनापत्तेः । सर्वनाम्नः परा या सप्तमी तदन्तात् त्रलित्यर्थे तु तच्छङ्क्यात्रपुस इत्यक परमसर्वशब्द प्रकृतिकसप्तम्यन्त ये इति तत्स्वरूपापत्तिः । परमसर्वे परमविधे इति भाष्योक्त तदन्तविधिप्रयोजनन्तु समीचीनम् । अवयवस्य सर्वनामत्वे तती जसो विहितत्वाभावेन शीभावानापत्ते । इतिचारितार्थमिति । विहितविशेषणाभावे समुदायस्य विकल्पेप्यवयवस्य नित्यसर्वनामसञ्ज्ञामादाय नित्यशीभावापत्ते । यद्यप्येवं सति द्वन्द्वे चेति निषेधवैयर्थ्यमपि सुवचम् । तथाप्यामि सर्वनाम्न इत्यादौ विशेषण स्वीकृत्य जस शीत्यत्र तदाश्रयणं विवदमान प्रत्येव मुक्तम् । किं च समुदायगतकुत्साविवक्षाया कप् प्रत्ययार्थं स निषेधः सार्थकस्तत्फल वर्णाश्रमेतराणामित्यादौ सुडभाव इति मन्तव्यम् । अत्र यद्वक्तव्यं तदग्रे वक्ष्यते । योगरूपतत्प्रवृत्तिकालइति । वस्तुनो बोधमात्र न प्रवृत्ति । किंतु पदैकवाक्यतया ऽन्वयार्हस्य सर्वस्योपस्थितौ वाक्यार्थबोधे वृत्ते पश्चाद्वाक्यैकवाक्यतया ऽन्वयार्हपरिभाषोपस्थितौ तदेकवाक्यतया महावाक्यार्थ बोध । तन्मूलक अस्त्वाद्ययमिति गृह्यग्राहकतयोपप्लूयमानवाक्यार्थबोधो वा लक्ष्ये प्रवृत्ति । अस्यां च दशायां कादेरनुबन्धत्व ज्ञातु सुशकमेव । प्राहुरिति । अन्येतु नानुबन्धकृतमनेकाल्त्वमित्यनानुबन्धपदस्य तत्त्वयोग्यपरत्वे ऽनेकालशिदित्यत्रालिदस्य शित्त्वयोग्यपरत्वे न फल प्रत्युत गौरवम् । किञ्चेत्सञ्ज्ञायोग्यशकारवत्त्वज्ञाने सर्वादेशत्वज्ञान सर्वादेशत्वज्ञाने च प्रत्ययादित्वज्ञान ततश्च शकारस्येत्सञ्ज्ञायोग्यत्वज्ञानमिति चक्रकापत्ते । कार्यान्तूकरीत्या प्रवृत्तिकाले ऽनुबन्धत्वज्ञान सुलभम् । केचित्तु नानुबन्धकृतमसारूप्यमित्यस्य वासरूपपरिभाषापवादत्वेपि सजातीनिमित्तोत्सर्ग उपजनिष्यमाणनिमित्तेनापवादेन बाध्यत इति न धातुलोप इति सूत्रस्थ कौस्तुभोक्तन्यायेन तेन तस्य बाध । प्रकृते तु प्रथमत एवानेकाल्त्वात्सर्वादेशस्या-

भवादेरस्य शिदित्त्वमस्तीत्युक्तन्यायस्याप्रवृत्तेर्विशेष इत्याहुः । अनेकाल्शित्सर्वस्येति सूत्रस्थं शित्सर्वस्येति किमुदाहरणम् । इदमङ्गम् । शित्करणादेव सर्वादेशो भविष्यति । इदं तर्हि जश्शसोः शिः जसः शीति भाष्यं, लुटःप्रथमस्येति सूत्रस्थं डाविकारस्य शित्करणं सर्वादेशार्थं डाविकारः शित्कर्तव्यः किं प्रयोजनं सर्वादेशार्थमिति भाष्यं च शिदनुबन्धपदं शित्वानुबन्धत्वयोग्यपरमित्युपेत्य कृत्वा चिन्तान्यायेन प्रवृत्तमित्यन्तस्य-स्यायं स्थाने भवन्न प्रत्ययस्यासत्यां प्रत्ययसंज्ञायामित्संज्ञा न स्यादसत्यामित्संज्ञायां लोपो न स्यादसति लोपे ऽनेकाल् यदा ऽनेकाल् तदा सर्वादेशो यदा सर्वादेशस्तदा प्रत्ययो यदा प्रत्ययस्तदेत्संज्ञा यदेत्संज्ञा तदा लोप इति तदुत्तरभाष्येण तथात्वं सूचितमिति न तद्विरोधः । विभक्तियोग्यइति । ननूपसर्जनेष्यमाणेनेमित्तन्यायेन सिद्धे विभक्तित्वयोग्ये लक्षणाश्रयणं व्यर्थमिति चेन्न । न बहुव्रीहाविति सूत्रस्थ भाष्यनागाण्येन निषेधविषये संज्ञाविषये लोपसंजनिष्यमाणन्यायाप्रवृत्तेः । तत्र हि त्वकत्पितृक इत्यादावलौकिके प्रक्रियावाक्ये प्रासाकज्वारणाय बहुव्रीहिपदं लक्षणया बहुव्रीह्यर्थालौकिकप्रक्रियावाक्यपरमित्युक्तम् । उक्तन्यायेनैव पूर्वं सर्वनामसंज्ञायास्तन्निमित्ताकचश्चाप्रवृत्तिसिद्धौ लक्षणाश्रयणवैयर्थ्यं स्पष्टमेवाप्रातिपदिकस्येव प्रकृतित्वादिति । अकज्विधौ सर्वनामपदं तत्प्रकृतिकसुबन्ते न लाक्षणिकं नेदमदसोरकोरकारकत्वाव्यभिचारात् । ननु समस्तार्थमेतत्स्यादिति चेत्सत्यम् । काकचोरविशेषप्रतिपादनपरभाष्यादेरोक्तार्थस्वीकारात् । अन्यत्र तु लाक्षणिकमेवेत्युक्तं ङ्याप्प्रातिपदिकादिति सूत्रे । अकज्विधौ प्रातिपदिकाधिकारस्य नोपयोगः । तस्य पञ्चम्यन्तत्वात् । तत्र सर्वनामपदेन लिङ्गविशिष्टपरिभाषया ङ्यन्तस्यापि ग्रहणाद्भवती शब्दे ङीपः प्राक् अकचि भवतकीति रूपम् । न च प्रत्ययः परः प्रयोक्तव्य एवेति नियमेन मध्येकजनुपपत्तिः । त्वयकेत्यादाविव प्रकृतिप्रत्ययमध्येप्यकच्प्रवृत्तिसंभवात् । शब्दादिविधानेनोक्तनियमस्यानित्यत्व कल्पनात् । सुबन्तात्परेति । सुबन्तत्वज्ञानाव्यवहितोत्तरकालप्रवृत्तिक इत्यर्थः । प्रत्ययन्तरत्वेनव्याख्यानादिति । अस्यात्यन्तस्वार्थिकायज्विधानार्थमित्यनेनान्वयः । महाविभाषासंबन्धस्यावश्यकत्वेनेति । अस्य लक्ष्यानुरोधादिति शेषः । अनदन्तेति । सुबुत्पत्तेः पूर्वमयजुत्पत्तेरित्यर्थः । ननु सुबुत्पत्त्यनन्तरमयजुत्पत्तावप्युभशब्दात्सुबन्तात्स्वार्थे ऽयचि ततः सप्तम्यान्ततस्त्युभयत्रेति रूपं सिद्ध्यति । न हि अवयवार्थकायजन्तस्योभयशब्दस्य सर्वादिषु

पाठ न स्वार्थिकायजन्तस्येत्यत्र मानमस्तीति चेन्न । सुबुत्पत्त्यनन्तरमयजुत्पत्तौ
नित्यामियङ्गोभादित्यस्य सम्बन्धेन तस्य तत्प्रकृतिकसुबन्ते लक्षणायां मानाभावेन
सुपि परत उभशब्दादयचि तस्य सप्तमीरूपस्य सुप उभशब्दप्रकृतिकस्य सर्वनामप्र-
कृतिकत्वाभावेन स्मिन्नापत्तिरित्याशयात् । अकालतनोऽप्यर्थेति ज्ञापकं तु सार्थकत्वादि-
तविषय न चोभशब्दपाठस्य स्मिन्नुपपत्तिरपि प्रयोजनमस्त्विति वाच्यम् । तथासत्युभस्य
सर्वनामत्वे किं प्रयोजनमकजर्थं पाठ क्रियते उभको किमुच्यते ऽकजर्थमिति । न
पुनरन्यान्यपि सर्वनामकार्याणि । अन्याभावो द्विवचनटाब्विषयत्वादित्यादि भाष्य-
ग्रन्थसन्दर्भसूचितप्रयोजनान्तराभावाभिप्रायविरोधात् । आद्युदात्त एवेति । नान्तोदात्त
इत्यनेनान्तोदात्तस्य प्राप्तत्वेनोदात्तग्रहणवैयर्थ्यात् । ननु क इदानीमन्यस्यान्यत्र भवति
उभयोऽन्यत्रोभयशब्दोऽस्यान्यत्र भवति इति भाष्यम् । अस्योभशब्दस्यान्यत्र द्विवचन-
भिन्ने परत उभय इति रूप भवति । अयच् भवतीति फलितार्थ । तथा चायच् प्रत्य-
यस्य द्विवचनभिन्ने परत एव विधानेन सुबुत्पत्ते पूर्वमेवायजिति पूर्वग्रन्थासगति ।
भाष्यसूचिताकजतिरिक्तसर्वनामकार्याभावविरोधश्च । उभयत्रेत्यादावुभशब्दात्सप्तमी
द्विवचनोत्तरमेव त्रल्युत्पत्त्या द्विवचने च सति ऽयजभावेन सर्वनामप्रकृतिक सप्तम्य-
न्ताभावेन त्रलनापत्त्या तदर्थं उभशब्दपाठस्यावश्यकत्वादित्याशङ्क्याह । द्विवचन-
विषयत्वाभावसमानेनेति । परिनिष्ठिते प्रयोगे इति शेष । तथा चान्यत्रेत्यस्य
द्विवचनपरत्वाभावे इति नार्थं किंतु परिनिष्ठिते प्रयोगे द्विवचनविषयत्वाभावसमा
समानायामित्येवार्थ इति न पूर्वोक्तदोषद्वयमिति भाव । नन्वेवमप्युभावित्यत्राप्ययच्
स्यात् । अत्रापि तत्रो द्विवचनेऽपि परिनिष्ठिते प्रयोगे उभशब्दस्य द्विवचनपरत्वा-
भावात् । अथवा व्यवधानादित्यत आह । उभयशब्दस्यवेति । वस्तुतोऽयमार्थिको
ऽर्थो नतु वाच्योऽर्थ अन्यत्रेत्यस्य प्रकृतद्विवचनभिन्ने एव शक्तत्वेन ततो
द्विवचनपरत्वाभाव इत्यर्थलाभात् । अस्येत्यस्योभयशब्दस्येत्यर्थे क इदानीमस्या-
न्यत्र भवतीत्यादि भाष्यग्रन्थस्यानन्वितार्थत्वापत्तेश्च । भाष्याक्षरार्थस्त्वस्योभशब्दस्य
परिनिष्ठिते प्रयोगे द्विवचनभिन्नपरत्वे उभय इति रूप बोध्यमिति । अतेरनेकाच
इति सूत्रस्थ तिकारकपूर्वस्येत्यत्र इत्यस्येवार्थिकार्थ एव तात्पर्यं न वाच्यैर्थे । ननु
यत्र द्विवचनविषयत्वाभावसमानता तत्रैवायजिति नियमो व्यर्थ । उभावित्यादौ
वृत्तेरभावेन वृत्तिविषये विहितस्यायचो ऽप्रवृत्ते । अकजन्तात्तु नायच् । अनभिधाना-

द्वित्युक्तमेवेत्याशङ्क्य तत्फलमाह । उभयोर्वासइति । नन्वेवं सति वृत्तिविषय इति व्यर्थम् । उभावित्यादौ द्विवचनपरत्वादेवायचो ऽप्रवृत्तेरिति चेत्सत्यम् । एतत्फलितार्थकथनमेव वृत्तिविषयइति । एवञ्चान्यत्रेत्यस्योभावित्यत्र प्रत्युदाहरणं दातुं शक्यम् । तत्परत्वविषयाभावेइति । परिनिष्ठिते प्रयोगे तत्परत्वाभावसंभावना यामित्यर्थः । यथाश्रुतमूलं तु न युक्तम् । द्विवचनपरत्वाभाव इत्युक्तौ संप्रति द्विवचनपरत्वाभावाभावेनोभयत्रेत्यादावयजनापत्तेः । न चान्तरङ्गत्वाद्विभक्त्युत्पत्तेः पूर्वमयजापत्त्या तद्वैयर्थ्यापत्तेः । इत्यादौतुनेति । अत्यन्तस्वार्थिकायजिति शेषः । निर्देशेनेति । इदमुपलक्षणम् । अत्यन्तस्वार्थिकायचोन्तरङ्गत्वे सुबुत्पत्तेः पूर्वमेवोत्पत्तेः स्वीकारेणावयवार्थकायचः पूर्वं स्वार्थिकायच्युभशब्दस्य प्रकृतिकसुबन्ताभावेनोभादुदात्त इत्यस्यावयवार्थकायज्विधायकस्य निर्विषयत्वापत्तेः । अनभिधानमेवेति । अत्र प्रमाणं तु कप्रत्ययस्य द्विवचनत्वनाश्रित्योभशब्दप्रत्याख्यानपरं भाष्यम् । तथा हि । द्विवचनशब्दस्य तत्सञ्ज्ञकपरत्वे रूपमयच्च भवति । द्वित्वविशिष्टार्थवाचकपरत्वे तु स नेति फलभेदादनभिधानम् । ननूभशब्दपाठो मास्तु । न च कप्रत्ययापत्तिः । वृत्तिविषये सुबुत्पत्तेः पूर्वमेवायजुत्पत्तिस्वीकारेण कप्रत्ययस्य च सुबुत्पत्त्यनन्तरमेवोत्पत्त्या पूर्वमयच्प्रत्ययजन्तस्य सर्वादिषु पाठेन ततो ऽकच एव प्रवृत्तेः । न चायजन्तस्य सर्वनामत्वेप्युभशब्दस्य सर्वनामत्वाभावात्ततः कप्रत्ययापत्तिरिति वाच्यम् । सुबुत्पत्तेः पूर्वमेवायजुत्पत्तिस्वीकारेणोभयशब्दस्यासुबन्तत्वेपि न ततः कप्रत्ययप्राप्तिः । प्रत्ययः परः प्रयोक्तव्य एवेति नियमेनोभशब्दायचोर्मध्ये कप्रत्ययासम्भवाच्चेत्याशङ्क्याह । अयचोपीति । कुतो न वाच्य इत्यतः । तत्र हेतुमाह । उपजीव्यत्वेनेति । परिनिष्ठिते प्रयोगे द्विवचनपरत्वाभावो हि अयजुपजीव्यः । यदि चायचि कृते ऽकच् स्यात्तदा स्वार्थिकायजन्तस्य द्वित्वविशिष्टबोधकत्वेन ततो द्विवचनापत्तौ द्विवचनपरत्वाभावमुपजीव्यं व्याहन्येतेति कप्रत्ययस्यैव प्राप्तिरित्यर्थः । नन्वपवादे ऽयचि जागरूके कथं क इत्याशङ्क्याह । अपवादस्त्वन्यत्रेति । उपजीव्योपजीवकभावादन्यत्रेत्यर्थः । तथा च द्विवचनपरत्वाभावसम्पादनद्वारा स्वोपजीव्यकप्रत्ययविघातकाकचो ऽयच् न निमित्तं भवतीति नात्राकच् प्रवर्तत इत्यर्थः । अत एवोपसर्जनव्यावृत्तिरिति । इदमुपलक्षणम् । वृत्त्युत्तरमुपसर्जने कुत्सादियोगा-

मभवात् । तत पूर्वं तयोगे स्वकजिष्ट एवेनि । यह्यातायर्थविशिष्टस्यार्थेइति । सुबन्तात्कप्रत्ययविधानेप्याभिधानेप्यभिधानलाभाव्यात्मूत्रे विभक्तिविशेषस्यानुपादानाच्च अज्ञानत्वादिविशिष्टप्रातिपदिकार्थे एव कप्रत्यय इति भाव । परेत्वित्यादि । निषेधाश्चबलीयामइति । ननु सर्वेर्वेरुत्वाकद्धनो स्ये इति विप्रतिषेधेनेति विप्रतिषेधानुपपत्तिः । उक्तन्यायेन विकल्पस्य बलवत्त्वादिति चेन्न । अकद्धनो स्ये इत्यस्य निषेधसमकत्वात् । नैवमप्याकडारादन्यत्र सञ्ज्ञाया बाध्यबाधकभावाभावादिदमयुक्तमिति वाच्यम् । विजातीययोस्तदभावेपि समानीययोस्तदङ्गीकारात् । नित्यविकल्पयो' सञ्ज्ञयोरेकसञ्ज्ञाधिकारबाईभूतयोरपि तदङ्गीकाराच्च । भावाभावयोर्विरोधेन तयो साक्षाद्विरोधात् । साक्षादविरुद्धयोरेवैकसञ्ज्ञाधिकारबाहिर्भूतयोस्तयोर्बाध्यबाधकभाव । साक्षाद्विरुद्धयोस्तुल्ययो सा ऽस्त्येव । यथा तपरस्तत्कालस्याणुदित्सवर्णस्येत्यनयो' । अत एव पूर्वादीनां वैकल्पिकीं सर्वनामसञ्ज्ञा नित्यसञ्ज्ञा बाधते । नन्वेव पूर्वे इत्यादौ शीभावोत्तर न स्यात् । पूर्वपरेत्यादिना जसि परत सर्वनामसञ्ज्ञाविकल्पविधानेन जस' सर्वनाम्नो विहितत्वाभावादित्याशङ्क्याह । पूर्वपरेत्यादिलिति । तथा च पूर्वे इत्यादौ जस. पूर्वं प्रवर्तमाना सर्वादीनीत्येतद्विहितां सर्वनामसञ्ज्ञामुपजीव्य शीभावप्रवृत्तिरिति भाव' । नन्वसिद्धं बहिरङ्गमित्यनेनान्तरङ्गोत्तर प्रवर्तमानबाहिरङ्गस्यासिद्धत्वेनाभावबोधनान्न दोष इत्याशङ्क्य समाधत्ते । असिद्धमिति । नन्वन्तरङ्गप्रवृत्त्युत्तर प्रवृत्तिनिमित्तसद्भावाधीनबहिरङ्गप्रवृत्तेरन्तरङ्गारम्भापया निवारणाभावेपि बहिरङ्गा वैकल्पिकी सर्वनामसञ्ज्ञा ऽसम्भवादेव न प्रवर्तते । न हि नित्यसञ्ज्ञोत्तर प्रवर्तमानमपि पूर्वपरेति शास्त्र सर्वनामसञ्ज्ञाया अभाव बोधयितु क्षमम् । भावाभावयोर्विरोधात् । विधायकशास्त्रभेदेन सञ्ज्ञाभेदे तु पूर्वपरेत्यादिना स्वविहितसञ्ज्ञाया अभावबोधनेपि सर्वादीनीत्येतद्विहिताया अभावाबोधनात् । तामाश्रित्य नित्य शीभावो दुर्वार इत्याशङ्क्याह । तदुत्तरमपीति । शास्त्रभेदेन सञ्ज्ञाया भेदाभावेपि जातसञ्ज्ञाया एव पूर्वादिप्विवोभयोरपि अभावबोधन सम्भवति । लुगादिनेव जातनिवृत्तेरङ्गीकारादिति भाव । ननु प्रथमचरमेत्यादौ जसीति विषयसप्तमी तथा चान्तरङ्गबहिरङ्गयोर्युगपत्प्राप्त्याऽन्तरङ्गं बलीय इत्यस्यात्र विषयोऽस्त्येवेत्याशङ्क्याह । जसीति । तदुत्तरमेतद्विषयादिति । तथा च प्रातिपदि-

कसञ्ज्ञोत्तरमेव शीभावविषयत्वेन तदुत्तरमेव वैकल्पिकी सर्वनामसञ्ज्ञा। नित्यसर्वनाम-सञ्ज्ञा तु प्रातिपदिकसञ्ज्ञासमकालमेवेति न तयोर्युगपत्प्राप्तिरिति भावः। आनुमानि-कयानयेति। अन्तरङ्गं बलीय इत्यनया ऽसिद्धं बहिरङ्गमित्यनया वेत्यर्थः। नन्वारते यथोद्देशे नित्यपाक्षिकयोर्युगपत्प्राप्त्यभावः। तत एव चान्तरङ्गं बलीय इत्यस्या-प्रवृत्तिश्च तथापि कार्यकालपक्षेस्त्वेव तयोर्युगपत्प्राप्तिः। शीभावप्रवृत्तिकाल एव नित्यसञ्ज्ञाप्रवृत्तेरित्याशङ्क्याह। सर्वनामसञ्ज्ञायामिति। उक्तयुक्तचेति। सर्व-नाम्नो विहितत्वेन शीभावसिद्धिरित्युक्तयुक्तचेत्यर्थः। यद्यपि कथञ्चिद्युगपत्प्रवृत्तिं गृहीत्वा ऽन्तरङ्गं बलीय इति नित्यसञ्ज्ञाप्रवृत्तावपि तदुत्तरबहिरङ्ग इति पूर्वशे-खरोक्तयुक्त्या सूपपादा। अन्यथान्तरङ्गं बलवदित्यस्य विषयाभावेपि प्रातिपदि-कसञ्ज्ञासमकालमेव सर्वनामसंज्ञाङ्गीकरात्तन्निवृत्तिर्न स्यात्। तथा प्यन्तर-ङ्गम् बलवदिति न्यायेन बाधितस्य पुनरप्रवृत्तिरित्यभिप्रायेणेदम्। अत एवेति। उक्त युक्त्या नित्य सञ्ज्ञायाः वैकल्पिकसञ्ज्ञया बाधायोगादेवेत्यर्थः। नातिप्रसङ्ग इति। न पद्लत्वादिभ्य इति निषेधोपि बोध्यः। नन्वेवं प्रत्या-हाराश्रयणे टिड्ढेति सूत्रे तयप् ग्रहणं व्यर्थमित्याशङ्क्याह। तयपूग्रहणंत्विति। अवयुत्यावयवैनैकदेशेन। अवयुत्येति ल्यबन्तं वेति। अवयुत्या ऽनुवाद इति पाठे त्ववयुतेः प्रत्याहारैकदेशत्यानुवाद इति षष्ठीसमासः। ननु स्थानिवदि-त्यतिदेशप्रापिताया निरवकाशत्वाच्चेत्ययुक्तम्। द्वये इत्यादौ सावकाशत्वा-च्चेत्याशङ्क्याह। अनभिधानमेवेति। वस्तुतो नेदं युक्तम्। अनभिधाने प्रमाणाभावात्। धातोश्च द्वये प्रत्ययात्लिङः कृतश्चेति भाष्य प्रयोगाच्च। अन्ये तु सर्वनामसञ्ज्ञायां कार्यकालपक्ष एव तत्पक्षे च सञ्ज्ञायाः कार्यनिमित्तनिमित्ति कत्वम्। अत एव पूर्वं परेत्यादि चरितार्थम्। अन्यथा पूर्वं नित्यसर्वनाम सञ्ज्ञायां तत एव नित्यशीभावप्रवृत्तौ तद्वैयर्थ्यम्। न चास्मिन्पक्षे सर्वनाम्नो विहितत्वाभावेनोभये इत्यादौ शीभावानापत्तिः। विहित विशेषणतायाः श्रयणात्। अदन्तात्सर्वनाम्नः परस्य प्रत्यासत्त्या तत्पर्याप्ताङ्गसञ्ज्ञानिमित्तस्य जसः शी-त्यादिरूपेण वाक्यार्थबोधाङ्गीकारेण विहितविशेषणफल सिद्धेः। नान्त-रङ्गं बलीय इत्यस्यात्र विषय इत्याद्ययुक्तम्। तदप्रवृत्तावपि नित्यसर्व-नामसञ्ज्ञायाः पूर्वप्रवृत्तिस्वीकारेण तयादेशे उभयप्रतिषेध इति वार्तिक

वैयर्थ्यात् । पूर्वपरेत्यादिसु पक्षे तदभावमात्रबोधकमित्याद्यप्ययुक्तम् । प्रथमादिशब्दविषयकाप्राप्तविभाषायामगतेः । प्रथमादिशब्देषु सर्वनाम सञ्ज्ञाविकल्पसामर्थ्येन चारमदुक्तार्थकल्पनैव ज्यायसी । तदुत्तरमप्येतन्मतस्थैर्यायाद्यप्ययुक्तम् । कार्यं कालपक्षाश्रयणेनैवोपपत्तौ पूर्वादिषु जातसिद्धत्वेति कल्पनाया अयुक्तत्वात् । सञ्ज्ञाविषये निषेधविषये वा ऽश्वल्तस्योपसर्जनिष्यमाणन्यायस्य पूर्वादिष्वाश्रयणमप्यगतिकगति । उभयशब्दे तु नोपसर्जनिष्यमाणन्यायावकाश । द्वितीये इत्यादौ तच्चारितार्थ्यात् । एवं जसीत्यस्य विषयसप्तमीत्वमप्यगतिकगति । तथा च नित्यविकल्पयो सञ्ज्ञयोरन्तरङ्गबहिरङ्गभावात्परत्वाद्विकल्पे प्राप्ते तयादेश इति वार्तिकं प्रवृत्तम् । वस्तुतस्तु जसि विकल्प विषयेऽपि अकजाद्युदात्तत्वार्थं नित्यसञ्ज्ञा प्रवर्तते एव । शीभाव परं वैकल्पिकीं सञ्ज्ञामाश्रित्य प्रवर्तते न नित्यम् । अन्यथा विकल्पवैयर्थ्यापत्ते । नित्यविकल्पयोर्विधायकशास्त्रभेदेन भेदाच्च विरोध । तथा च तयादेश इति वार्तिकं स्थितम् । स्थानिवदतिदेशप्रापिताया इत्यप्ययुक्तम् । द्वयशब्दे चारितार्थ्यात् । तदनभिधानस्य निरस्तत्वात् प्रत्यक्षम्येत्याद्यप्ययुक्तम् । पचावेदमित्यादौ पूर्वान्तवद्भावेन लोडुत्तमत्वमाश्रित्य प्रवर्तमानस्यैत्वादेरन्तरङ्गपरिभाषाया बाधदर्शनात् । स्योन इत्यादौ समप्रकालप्राप्तिकस्यापि स्थानिवद्भावेनाङ्गत्वमाश्रित्य प्रवर्तमानस्य गुणस्यान्तरङ्गपरिभाषाबलेन यणा बाधदर्शनाच्चेत्येकदेशविकृतन्यायस्य लौकिकत्वे ऽपि स्थानिवदतिदेशस्य प्रत्यक्षत्वादित्याहु । तद्ध्वनयन्निति । यु शब्दार्थमात्रविवक्षाया लिङ्गान्तरेष्युदाहरणसंभवात् स्त्रियामेवोदाहरणोपन्यासो व्यर्थ स्यादिति भावः । एकोन्यार्थे इति कस्य चिदभियुक्तस्य वचनं न तु कोश । तेनैकादिगित्यत्रैकशब्द समानार्थः । तेन तद्योगे तुल्यार्थैरिति तृतीया । एकामातेत्यत्र साधारणार्थ । नन्वत्रानियमो व्यवस्थेत्ययुक्तम् । तस्य पूर्वादिशब्दार्थत्वाभावात् । देशवाचिनः सर्वनामत्वानापत्तेश्च न हि काशी प्रयागादेव पूर्वा न ग्रामान्तरादित्यवधेर्नियमोस्तीत्याशङ्क्याह । नियमेनावधिसापेक्ष इति । उत्तरेऽइति । नियमेनापेक्ष्यमाणो ऽवधि पूर्वपक्षेऽ नावधिरिति भाव । केचित्त्ववधित्वमेतद्व्यावर्त्यं दुर्वचम् । भिन्नभावस्तु पूर्वादिभ्य इति विकल्पात्पक्षे तु सट इष्यते एव तस्माद्दक्षिणा गायका इत्येव प्रत्युदाहरणमित्याहुः । ननु कुरूत्तरशब्दस्य केवल-

रूढत्वे व्यवस्थाभावादेव संज्ञाया अभावादसंज्ञायामिति व्यर्थमित्याशङ्कस्य योगरूढि-माश्रित्य समाधत्ते । सुमेर्वावधिकेति । तात्कालिकेति पाठः । तत्तदवधिकेति । यन्निरूपितदेशस्य पूर्वत्वादि तदवधिकेत्यर्थः । अपरशब्दो रूढो न नञ्समासः । परापरशब्दयोः समानार्थत्वात् । अन्तरमवकाशवधीति । अवकाशो यथान्तरं देहि, । अवधौ मासान्तरे देयं, परिधाने ऽन्तरे शाटकः, अन्तर्द्धौ वनान्तरितः सूर्यः, । भेदे उदरमन्तरं कुरुते, । यदन्तरः सिंह शृगालयोर्द्वयोः, । तादर्थ्ये तवान्तरं ऋणं गृहीतम्, । छिद्रे ऽन्तरं पश्यति, । आत्मीयेऽन्तरे जनाः, । विनार्थे उदाहरणं मृग्यम् । बहिरर्थे अन्तरे चाण्डालगृहाः, । अवसरे ऽन्तरज्ञः सेवकः, । मध्ये ऽनयोरन्तरे शैलः, । अन्तरात्मनि अन्योन्तरआत्मा ऽऽनन्दमयः, । चकारात्सदृशार्थो ऽपि । यथा स्थानेन्तरतमः । विनाबहिः शब्दयोरव्ययत्वे ऽपि चार्थयोगमाश्रित्य द्वन्द्वः । नत्वव्यजाद्युदात्तत्वादाविति । अव्ययजाद्युदात्तत्वे तु नित्यं स्तः । तयोः कर्तव्ययोः सतोः सर्वादीनीति नित्यं सञ्ज्ञासत्त्वात् । सा तु शीभावोपयोगिनी । शीभावे विकल्पविधानसामर्थ्यात् । वर्णाश्रमेतरे इत्यादौ तु नेते । द्वन्द्वे चेति नित्य संज्ञा निषेधात् । विकल्पस्य च शीभावमात्र फलकत्वात् । एवं प्रथमे इत्यादावपि न ते । बोधकत्वरूपेति । लोके इति शेषः । वस्तुतस्त्वेकार्थीभावकल्पनातः पूर्वमेवाकचः प्राप्तिर्बोध्या । अन्तरङ्गानपीति न्यायस्तु संज्ञातिरिक्तान्तरङ्गबाधकत्व विषयः । अर्थातिरिक्तनिमित्तविनाशकविषयो वा । ननु स च समासे ऽपि श्रूयेतेत्यस्यानिभवकानित्येव दृष्टान्ततया प्रदर्शनीयः । अतिक्रान्त इत्यादिकं तु न प्रदर्शनीयम् । प्रकृतासंगतेरित्याशङ्क्याह । अतिक्रान्त इत्यादीति । तथा चातिक्रान्तो भवकन्तमिति लौकिकविग्रहवाक्य इवालौकिके प्रक्रियावाक्ये प्रवर्त्तमानो ऽकच् यथातिभवकानिति समासे श्रूयते तथा त्वकं पितेति लौकिक विग्रह वाक्य इवालौकिके वाक्ये प्रवर्तमानो ऽकच् त्वत्कपितृक इति समासे ऽपि श्रूयेते ति मूलार्थ इति भावः । प्रत्यङ्गमन्तरङ्गम् । एतच्चेति । भाष्यकृत्कारिष्यमाण सूत्रप्रत्याख्यानस्य सूत्रकृदभिप्रायत्वमित्यर्थः । भाष्येध्वनितमिति । एवं हि तत्र भाष्यम् । कायमकारः श्रूयते न क्वचिन् श्रूयते लोपोस्य भवति । यदि न क्वचिन् श्रूयेत किमर्थमिदमुच्यते न लोप एवो च्यते । नैवं शक्यं लोपे सति गुणः प्रवर्तेत । अत्वे च न सति अकारलोपस्य स्थानिवद्भावाद् गुणो न भविष्यति । ननु च लोपे ऽपि न

घास्विति निषेधो भविष्यति । आर्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्धधातुकनिमित्तो लोपः । अपि च प्रत्याख्यायते ऽस्त्वपि स योगः । तस्मिन्प्रत्याख्याते गुणः स्यादेवेति । एवं च प्रत्याख्यानविरुद्धफलकसूत्राशयकल्पनं वृत्तिकाराणामनुचितमिति सूचितं तदाह । एवं चेति । कैयटे स्पष्टमिति । नन्वेवं सूत्रमते ऽतिसर्वायेत्यादौ स्मै प्रसङ्गः । बहुव्रीहिग्रहणस्योपसर्जनोपलक्षणत्वात् संज्ञायां तु व्यवस्थायामसंज्ञायामिति पृथक्कृत्य निषेधो बोध्यः । अन्तर्गणकार्यमप्यनुपसर्जनादित्यस्याकारात्कारावनुपसर्जनस्य इष्टव्याविरपर्येन परिहर्तव्यम् । सत्त्वमप्यर्थाधिकाराश्रयणेन परिहर्तव्यम् । अन्ये तु प्रियविश्वायोपसर्जनप्रतिषेधेनाप्यतीतसिद्धमिति न बहुव्रीहाविति सूत्रस्य भाष्येण न कोपधाया इत्यय योग पुंवद्भावमात्रस्य विषये सत उत्तरमात्रस्य योगस्य विषय इति न कोपधाया इति सूत्रस्थभाष्येण "सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके, इत्यभियुक्तोक्त्या च सर्वोपसर्जनप्रतिषेधोपि सूत्रकृत्सम्मत एव । अत एव बहुव्रीहिपदस्य तदर्थालौकिकवाक्यपरत्वं लक्षणया स्वीकृत्य त्वत्कपितृक इत्यादावकजभावः फलमित्युक्तं भाष्ये । तथा चात्र सूत्रकृद्भाष्यकृन्मते विरोध एव । उत्तरमुनिस्मृतिश्च प्रबलेत्येव तत्त्वम् । विभाषा दिगिति सूत्रस्थं भाष्यं त्वेकदेश्युक्तिरित्याहुः । ननु सर्वार्थवाचकत्वं सर्वविश्वयोरेव नत्वन्येषामपीत्यत आह । प्रसिद्धस्त्वीयेति । तथा च स्वप्रवृत्तिनिमित्तसमानाधिकरणकृत्स्नधर्माश्रयवाचकत्वं सर्वार्थवाचकत्वम् । मानाभावइति । तेन सदादीनामेकशेषोपि सर्वोपसर्जनयोर्न । त्यदादीनि चेति सूत्रसज्ञापि न । नामपदस्यास्येनेति । घटपदं घटत्वस्य नामेत्यप्रयोगादिति भावः । पूर्वादिसंग्रहायेति । ननु दिग्वाचकपूर्वादीनां न स्वप्रवृत्तिनिमित्तसमानाधिकरणकृत्स्नधर्माश्रयवाचकत्वमिति चेन्न । सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित, इति प्रमाणानुरोधेन तत्तद्वर्षवासिना सूर्योदयाधिकरणत्वेन परिदृश्यमानभागविशेषाणामेव तत्तद्देशवासिनं प्रति पूर्वादिकृत्स्वाङ्गीकारेण सर्वार्थवाचकत्वोपपत्तेः । ननु द्वयोस्त्रिषु वा संकेतितसर्वादीनां सर्वनामसंज्ञा दुर्वारा सर्वार्थवाचकत्वादित्याशङ्क्याह । संज्ञाव्यावर्त्त्य इति । अभिव्यक्तयेतिन्यायमूलकेति । नन्वस्य न्यायस्य यत्तदिति वित्सत्यम् । अभिव्यक्तेति न्यायस्य पदकार्यविषयकत्वमन्यत्रोक्तं तु हेयमेव । तथा चायं न्यायः प्रातिपदिककार्यविषयोपि । अत एव सजातिशब्दे अयादेशाभावः । युष्मदस्मद्भ्यां ङसोऽशित्यादौ

थात्वाद्यभावश्च। अयं निर्देशः प्रातिपदिककार्येत्यत्रप्रवृत्तोऽलिङ्गम्। सर्वनामपदवत्यां-श एवेति। इतरांशस्तु योगार्थानुगुणनामैव संज्ञित्यसूचनायेति भावः। अन्यथा महा सञ्ज्ञाकरणाद्दुपयोगात्। एकपदोपस्थाप्ययोरिति। यत्तु परेषां कृतीष्टसाधनत्वयोर्लिङ्गुपस्थाप्ययोः परस्परान्वयस्य दृष्टत्वाद्धातोः पृथक् फलव्यापारौ शक्यौ नैत्तयोरुद्देश्यविधेयभावेनान्वयापत्तिः। पृथगुपस्थितयोस्तयोस्तथान्वयस्यौत्सर्गिकत्वादिति मञ्जूषायां फलव्यापारयोः पृथक् शक्तिवादस्य स्वयमपि दूषितत्वाच्चिन्त्यमेतदिति पाठकेनोक्तम् तन्न। कृतीष्टसाधनत्वयोर्लिङ्त्वाख्यातत्वादिशक्ततावच्छेदकभेदेन शाब्दबोधविषययोस्तथान्वयाङ्गीकारेपीतरत्र तथान्वये मानाभावात्। मञ्जूषाग्रन्थस्तु पृथगुपस्थितयोस्तथान्वयस्यौत्सर्गिकत्वादेकपदोपस्थाप्ययोरन्वयाङ्गीकारे एवमन्वयः स्यादित्येवं परः। अत एव वपट्कर्त्तुः प्रथम् भक्ष इत्यादौ भक्षप्राथम्ययोर्नोद्देश्यविधेयभावेनान्वयः। यद्यप्येवकारार्थयोरन्ययोगव्यवच्छेदयोः परस्परमन्वयोस्ति। तथा ऽपि नोद्देश्यविधेयभावे न सः। अगतिकगतिश्चेति न दोषः। निपातातिरिक्तनामपदोपस्थाप्ययोस्तथान्वयाङ्गीकाराद्वा। अन्यतरवियोगेनेति। यत्तु "अरिमेदः पलाशश्च चाङ्गः कल्पद्रुमश्च ते, इति पदश्लेषो दाहरणे ऽरीणामेदः पलं चाश्नातीत्यरिमेदः पलाशसोचाङ्गुररिमेदसञ्ज्ञकः पलाशसञ्ज्ञकश्च कल्पद्रुम इत्यर्थके परस्परमुद्देश्यविधेयभावेनान्यतरवियोगेनान्यमान्वयस्य दृष्टत्वादिदञ्चिन्त्यमत एव दृष्टांद, श्रुतिकटु,च्युतसंस्कृतीति पददोषविशेषलक्षण सूत्रे। ननु श्रुतिकटुप्रभृतिशब्दानां लक्षणपरत्वे विभागपरत्वाभावाल्लक्ष्यानुपस्थितौ कथं लक्षणवाक्यत्वानिर्वाह इत्याशङ्क्य रूढियोगाभ्यामुभयोपस्थितौ लक्ष्यलक्षणयोरपि प्रसयः। यथा घ्राणरसनचक्षुस्त्वक् श्रोत्राणि इन्द्रियाणि भूतेभ्य इति गौतमीयेन्द्रियलक्षणसूत्रे इति काव्यप्रदीपकृता व्याख्यातमिति पाठकेनोक्तम् तन्न। अरिमेदपलाशशब्दौ हि योगरूढौ मण्डपादिशब्दवत्। न तु योगरूढौ रूढौ वृक्षयोर्मेदः पलाशितृत्वात्। स सर्वनामशब्दस्तु योगरूढः। योगरूढस्थले च शेखरोक्तो नियम इति नोक्तश्लेषोदाहरणविरोधः। काव्यप्रदीपकृदुक्तिस्तूक्तनियमविरोधेन प्रौढिवादरूप इति दिक्। ननु सर्वनामपदस्य योगरूढत्वेन तदनुगुणानामेव सञ्ज्ञित्वकल्पनात्। ननूपसर्जनादीनां सर्वादीनां गणाद्वहिर्भावस्तथाचातिसर्वायेत्यादौ समुदायस्य सञ्ज्ञा दुर्वारा।

तस्य' प्राधान्येन स्त्रीयप्रकृतिनिमित्तवत्सर्वोपस्थापकत्वादित्याशङ्क्याह--। तद-न्तस्येइति । अवयवद्वारेति । व्याख्यानादन्तावयवद्वारोक्तसर्वार्थवाचकानामेव सञ्ज्ञित्वकल्पनायामुपसर्जनस्य सर्वादित्वादिर्भाव अर्थादापतित· । योगार्थानङ्गुणत्वेन तस्यतरे मानाभावादिति भाव· । येन विधिरिति सूत्रे कैयटे नोक्त पक्ष दूषयति । एतेनेति । आक्षेपस्त्विनैवोक्तरीत्या निर्वाहसम्भवेनेत्यर्थ । इतो लघुरिति । वस्तुत मासाप्रामविवेकन्यायाद्यनुसन्धानादाद्यपक्षोऽप्येतत्पक्षसम एव । इतरविशेषणत्वेनार्योपस्थापकत्वमिति । तेषां घन इत्यादौ तु तच्छन्दस्येतरविशेषणतया स्वार्थबोधकत्वे ऽपि न तयोपस्थितिजनकत्व उपस्थिते शक्तिग्रहासमानविषयत्वात् । नन्वेव परस्मैपद परस्मैभाषा इत्यादौ स्मै भावो न स्यादिति चेन्न । अन्तरङ्गत्वेन स्मायादिषु कृतेष्वेव समाससञ्ज्ञाप्रवृत्ते । समासस्य निष्प्रयोजकत्वाभावेनान्तरङ्गानपीति न्यायाविषयत्वात् । राजकुमारीपुत्र इत्यादौ ह्रस्वारम्भकोरेण निर्वाहसम्भवाच्च । अत्र सञ्ज्ञोपसर्जनीभूता इति वार्त्तिकारम्भादन्वर्थसञ्ज्ञाश्रयणमेव श्रेय सञ्ज्ञोपसर्जनीभूतप्रथमचरमादीना सञ्ज्ञाव्यावर्त्त्य इति बोध्यम् । नावयवानामिति । केचित्तु मासपूर्वायेत्यादौ स्मायादिवारणाय विहितविशेषणाश्रयणे गौरवात्सप्तमीनिर्देशानुरोधाच्च तृतीयासमासे विद्यमानसर्वादीना निषेध स च पूर्वोक्तरीत्या पाचाद्यहिर्भावद्वारेवेति सर्वायन्तस्यप्रयुक्तसर्वनामसञ्ज्ञासमुदाये न प्रवर्त्तते । स्पष्ट चेद विभाषा दिगिति सूत्रे वृत्तिपदमञ्जर्यो ।। अत एव भाष्ये ऽत्र सूत्रे समास इति वर्तमाने पुनस्तदुपादान योगविभागेन वाक्ये निषेधार्थमित्युक्तम् । प्रथमार्थकसप्तमीनिर्देशे तु तदनुपपत्तिरित्याहु । अवयवस्यानिषेधफलाभावइति । के चित्तु विहितविशेषणानाश्रयणे एव सति समवतीति वर्णाश्रमेतराणामित्यादौ सुडभावस्तत्फलमित्याहु" । अन्यथात्वेति । अवयवनिषेधवादिनस्तवेत्यर्थ' । अतएवेति । उक्तरीत्या ऽवयवेभ्य पृथक् तदनुत्पत्तेरेवेत्यर्थ । अन्यथा समुदायस्य शीभावे कर्त्तव्ये एव विकल्पोऽप्यवयवस्य नित्यसर्वनामसञ्ज्ञामाश्रित्याकचो दुर्वारतया तदसङ्गति·" । मम त्वयत्रस्य सर्वनामत्वेपि तदर्थमात्रे कुत्सान्वयाकजभाव'। समुदायकुत्सामादाय तु नाकच् समुदायस्यासर्वनामत्वादिति भाव । ।नन्ववयवकुत्साविवक्षाया उक्तरीत्या ऽभावे ऽकच प्राप्तिरेव नेति शीभाव प्रति विभाषा ऽकञ्चि न भवति इति भाष्य पुनरसङ्गतमेवेत्यत

आह । समुदायेति । यद्वा त एवेमस्यानयवमात्रस्य निषेधाभावादेवेत्यर्थः । तथात्वे हि सर्वाद्यर्थकसर्वाद्यन्तत्वेन समुदायस्य नित्यसर्वनामसञ्ज्ञायामकच्स्यादेवेति भाष्यासङ्गतिः । अकज्ञिनभवतीति । ननु कृताकचा समासेनानेन विकल्पः । अज्ञाताद्यर्थकत्वेनासर्वार्थकत्वात् । पूर्वं द्वन्द्वे असि सर्वनामसञ्ज्ञा विकल्पे पश्चाद्वयवकृत्सामादायाकचि शीभावविकल्पघटितं रूपमित्यवयवकृत्साद्यर्थकाकजमिप्रायकत्वमप्यकज्ञि न भवतीति भाष्यस्य संभवतीत्याशङ्क्याह । तत्रेति । मानामात्राश्चेति । अन्ये तु दाण्डिनायनसूत्रे त्सरसर्वनामैकश्रुत्या द्वयोरैश्वाकशब्दयोरिवोदात्तानुदात्तयोस्त्वशब्दयोः सकृत्पठितेन ग्रहणे सिद्धे च त्वेत्युभयपाठः एकस्य तान्तत्वे मानमित्याहुः । जरायाजरसन्यतरस्याम् । अकृपरिमाणस्येति । परिच्छिन्नपरिमाणस्येत्यर्थः । स्थानिद्वद्धचैवेति । नन्वेवं लावस्यायामप्यपिचदित्यादौ आगमिबुध्या सादृकस्य पिबादेशापत्तिरिति वाच्यम् । उक्तयुक्त्या निर्दिश्यमानत्वाप्राप्तावपि पादः पदिति सूत्रस्थभाष्यप्रामाण्येन सागमस्य निर्दिश्यमानत्वानङ्गीकारात् । अन्ये तु निर्दिश्यमानत्वं स्वबोध्याघटितत्वे सति स्वबोध्यत्वम् । तच्च सागमके तदन्ते च न । आदेशे स्वस्येवेति तत्र निर्दिश्यमानपरिभाषया ऽऽदेशवारणम् । यद्वा स्वरूपमित्येतद्विन्नशक्तिग्राहकशास्त्रानुसंधानकालीनस्थानषष्ठ्यन्तपदजन्योपस्थितिविषयत्वरूपनिर्दिश्यमानत्वमादेशेपि । यदागमन्यायोपि शक्तिग्राहक एव । अस्य स्त्रावित्यादौ जातिपक्षे ऽथवा यतः पष्ठ्युच्चारिता तत्त्वतस्स्थानिकत्वान्यतरत्त्वम् तिसृणामित्यत्र तिस्रादेशे कृते त्रयादेशाशङ्कापरभाष्यप्रामाण्यादित्याहुः । वैचित्र्ययोरिति । न च पदत्वभत्वयोर्द्वयोरननुसंधानेपि नापि निर्जरसेत्यादिसिद्धेरतस्तयोरुल्लेखः । अन्ये तु दधृत्यं मान्स्यामित्येतदर्थं स्वादिष्वित्यस्यावश्यपाठ्यतया दत्त इत्यादौ जश्त्वशङ्काया यचि भमित्यपि पाठ्यमिति विशेष इति वाच्यम् । तथा सति शिवोर्च्ये इत्युदाहरणे प्रथमयोः पूर्वसवर्णे नादिचीत्यनयोरनुमन्यसनीयत्वापत्तेः । तदभावपक्षे तस्याप्राप्तेरिति । अभावपक्षोपक्रमे पुनर्भावपक्षस्वीकारायोगादिति भावः । तस्याप्राप्तेत्यस्य । जरसादेशस्याप्राप्तेरित्यर्थः । पाठकस्तु तस्याप्राप्तेति पाठं स्वीकृत्य संनिपातपरिभाषाया अप्राप्त्येत्यर्थमाह । ध्वनितंचेदमिति । नपुंसकाद्द्वितीयैकवचने जरसभाव इत्येतदर्थमित्यर्थः । भवितव्यमिति । उक्तमिति शेषः प्रश्लेष आवश्यक इत्युत्तरमित्याहुः । परत्वेत्यपपाठः । विभक्तयादेशानामिति । पूर्वोक्तो-

पञ्चलक्षणविभक्तिसम्बन्धिकार्यमात्रस्येत्याह । विभक्तिसम्बन्धीति । इत्याहुरिति । अन्ये तु नुम्जरसाविति वार्तिके नुम्पद लक्षणया नुम्शीभावोभयपरम् । यद्वा नित्यत्वा॰त्पूर्वं शीभाव॰ जरसादेशस्तु न नित्य । शीभावे कृते नुमि तदप्राप्तेरिति शङ्का-परिहाराय शीभावोत्तरमपि विप्रतिषेधेन जरस प्राप्तिरिति भाष्यकृतोक्तम् । न तु शीभावोत्तरमेव जरसित्याशयेन । अथ विप्रतिषेधोपन्यासम् जरसो नुमा समबल-तामभ्युपेत्य । वस्तुतो जरसादेश सर्वविधिभ्यो बलवान् जरसो ऽन्तरङ्गो जरसा जरसेइति जराया इति सूत्रस्थभाष्यप्रामाण्यात् । अन्यथा जरस इत्यत्र जरसादेशात्पर-त्वाद्याडाप इति याडिति तदसङ्गति । एव च विभक्तिसम्बन्धिकार्यमात्र पूर्वविप्रतिषे-धेनेत्यस्य कारकाश । जरसादेशस्य सर्वत॰ प्रबलत्वात् । एतेन एव स्त्रियां जरसादेशे कृते इत्यारभ्य तपा परत्वादित्यन्तो ग्रन्थो निरस्तो वेदितव्य । तथा च पुंसि निर्जरेण निर्जरसेत्यादिरूप स्त्रिया जरायै जरस इत्यादि भवति । नचैव टाङसीति सूत्रस्थकैयटासङ्गतिरिति वाच्यम् । वैकल्पिकत्वेन प्रथम जरसादेशाभावे इनादेशे कृते पश्चात्प्राप्तस्य जरस सन्निपातपरिभाषया वारणमित्याशयात् । न चाऽभावोपक्रमे पश्चान्न भावपक्षादरणम् । अन्यथा शिशिवयतुरित्यादौ द्वित्वोत्तर विभाषा श्वेरिति सम्प्रसारणाप्रसक्तिरिति वाच्यम् । अकारनिमित्तकस्य जरसो ऽभावो-पक्रमेपि इकारनिमित्तकस्याभावानुपक्रमात् । शिशिवयतुरित्यादौ तु द्वित्वस्यैव पश्चात्प्रवृत्तेर्विशेष । नपुंसकाद्वितीयैकवचने तु जरसादेशो भवत्येव । अथेह तु कस्मान्न भवति अतिजरस पश्येति भाष्यात् । अमूलुगभ्यां जरस॰ परत्वाच्च । न च लुक सर्वविधिभ्य प्राबल्य बहिरङ्गलुक एव तथात्वात् । स्वमोरिति सूत्रस्थ त्यदादिभ्यश्चेति वक्तव्यमिति वार्तिकमान तेन भवतादित्यत्र लुक बाधित्वा त्वानङ् । अतिजरमतिजरैरिति भवितव्यमित्याग्रिमभाष्य तु प्रथमैकवचनविषयम् । ध्वनित चेद जराया इति सूत्रे भाष्ये यथा हि । अथेह लुङ्कस्मान्न भवति अति-जरस पश्यति पूर्वपक्षिणा शङ्कित तद पूर्वपक्षिणा ऽस्त्यत्र विशेष॰ । नाङ्कृते ऽम्भावे जरसादेश॰ प्राप्नोति किं कारणमचीत्युच्यते । न चाय परिहार द्वितीयै-कवचनेत्यवशिष्ट इति वाच्यम् । अनवबोधात् । किं कारणमचीत्युच्यत इत्यन्त एव विशेषप्रतिपादनपरो नात्र स । तस्य चायमाशय । अतोमित्यम्प्रवृत्ति विना न जरसभाव॰ मोहलादित्वात् । अम्भावे तु न लुक् । अमा बाधितत्वात् । अमा

बाधितस्यापि पुनः प्रवृत्तौ ज्ञानमित्यत्रापि तदापत्तिरिति । न च जरसादेशार्थे सोरम्विधाने ऽकारादेशविधानेनैव सिद्धावम्विधानवैयर्थ्यात् । ततो द्वितीयैकवचने लुकं समाधत्ते सिद्धान्ती । यदा च जरस् भावः कृतस्तदा लुङ् न भविष्यति। सन्निपातलक्षणो विधिरनिमित्तमिति । यदाचेत्यास्याम लुकं च बाधित्वा परत्वादिति शेषः । ततः पुनः पूर्वपक्षी प्रथमैकवचने तृतीयाबहुवचने च शङ्कते । यथैवमति । जरसा ऽतिजरसैरिति न प्राप्नोति । अतिजरमतिजरैरिति भवितव्यमिति। लक्ष्यानुरोधाज्जरसादेशविषये सन्निपातपरिभाषा नाश्रीयत इति तद्भावः । ततः सिद्धान्त्याह । गोनर्दीय आह इष्टमेवैतत्संगृतमित्यादि । किं कारणमचीत्युच्यते ऽअम्भावे कृते सन्निपातपरिभाषया न जरसिति नव्योक्तपाठोत्तरं तु भाष्यपुस्तकेषु क्वापि नोपलभ्यते । पूर्वं ग्रन्थासंगतेश्च प्रथमैकवचने ऽतिजरसं तिष्ठती स्वत्र लुक् कुतो न शङ्कित इति तटस्थेन शङ्किते सन्निपातपरिभाषया जरसादेशाप्रवृत्त्योक्तरूपमेव दुर्घटमिति समाधानस्य पाठान्तरकल्पनया भवदभिप्रेतस्य प्रतिपादनायास्यत्र विशेष इत्युक्तयसंगतेः । तथोक्त्या हि अतिजरसं तिष्ठतीति रूपं स्वीकृत्य विशेषमात्रमभिधित्सितमिति प्रतीयते । किं चास्त्यत्र विशेषः । नात्राकृते ऽम् भावे जरसा देशः प्राप्नोति किं कारणमचीत्युच्यतेऽम्भावे कृते सन्निपातपरिभाषया न जरसिति भवत्कल्पितपूर्वभाष्येण प्रथमैकवचने ऽम्पात्तोत्तरयेव जरस् प्राप्नोति । द्वितीयैकवचने त्वमादेशात्प्रागेव परत्वाज्जरसिति लभ्यते । तत्र विभक्त्यादेशाः । पूर्वविप्रतिषेधेनेति वदतस्तव विरुद्धम् । यथैवमतिजरसमतिजरसैरिति न प्राप्नोतीति भाष्यस्य भवदुक्तं द्वितीयैकवचनाभिप्रायकल्पयापि न युक्तम् । यथैवमिति पदस्वारस्येन पूर्वं ग्रन्थोक्तं युक्तिमुपजीव्येयं शङ्केति प्रतीयते । पूर्वग्रन्थार्थश्चोक्तरीत्या ऽति जरसं पश्येत्यादावमादेशात्पूर्वं जरसः प्रवृत्तिः । तदङ्गीकारे च द्वितीयैकवचने कथं सन्निपातपरिभाषया जरसादेशाभावः । किं च द्वितीयैकवचने लुकि पूर्वपक्षिणा शङ्किते ततः परेण प्रथमैकवचने लुक् कुतो न शङ्कित इति पृष्टे ऽस्त्यत्र विशेष इति पूर्वपक्षिणा विशेषे प्रतिपादिते पश्चात्प्रवृत्तो यद्येवमिति ग्रन्थो न तावत्पूर्वपक्षिणः । तेन जरसादेशमङ्गीकृत्यैव लुक आपादनात् । नापि तटस्थस्येष्टमेव ह्येतत्संगृहीतमित्यग्रिमभाष्यासङ्गतेः । अतिजरसैरित्युपन्यासामङ्गतेश्च । नापि सिद्धान्तिनः । तेन जरसादेशाभावप्रतिपादनद्वारोक्तरूपस्यैव

खण्डनीयतया ऽतिजरसमिति न प्राप्नोतीत्यनिष्टापादनासङ्गते । अत एव ह्याप्ग्रहणे ऽदीर्घ इतिवदित्याद्यप्ययुक्तम् । अदीर्घपदेन दीर्घभिन्नजरसोऽपि ग्रहणात् । दीर्घभिन्नस्य ह्रस्वस्यैव ग्रहणे तु चिनाया जाताश्चिन इत्यादौ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हलिति लोपयाद्यागमाद्यापत्तेरित्याहु । पद्दन्नोमास् । अन्यतरस्यामित्यस्यानुवृत्तिं दूषयित्वा स्वानुरूपा स्थानिन आक्षिप्यन्त इत्युक्तमपि दूषयितुमाह । शिरसो ग्रहणं कर्तव्यमित्युक्तमिति । विकल्पानुवृत्तौ दूषणान्तरमाह । वाकेशेष्विति । ये च तद्धित इत्यत्रैव वा केशेष्विन्यारम्भेणान्यतरस्या ग्रहणस्यानवृत्तेरुत्तरत्र मण्डूकप्लुत्या तदनुवृत्तेश्च कल्पनामपेक्ष्य सर्वथा तस्यास्वरितत्वकल्पनैव न्याय्येति भाव । ननु याडादीति । ह्रस्वनद्याप इत्यत्र न प्रश्लेष इत्यभिमानेनेदम् । जरसामित्यादौ नुडभावार्थं तु प्रश्लेष आवश्यक इत्युक्तं तु न विस्मर्तव्यम् । व्याख्यानादिति । अन्यत्वप्रयुक्ता यस्येरसञ्ज्ञेति व्याख्यानात् औटष्टकारेण प्रत्याहारो न तु टाटकारेणेत्यर्थ । प्रथमैकवचनमिति । सप्तमीबहुवचनग्रहणे ऽसर्वनामस्थान इति व्यर्थं स्यादित्यर्थ । व्याख्यानादिति । तदुत्तरप्रत्ययाभावाच्च । कप्रत्ययावधीत्युक्तौ कप्रत्ययस्य न स्वादिषु ग्रहणमिति प्रतीयते अत आह । तदन्तेष्विति । नपदान्तसूत्रस्थइति । तत्र हि येतस्वानित्यत्र रुत्वमाशङ्क्य भत्वेन समाहित तत्र च भसञ्ज्ञाया रुत्वप्रतिबन्धातिरिक्त न किञ्चित्कार्यम् । व्याप्स्येर्थति । ननु मर्यादार्थकाडा उवार्थादिति निर्देशेपि न कोपि दोष इति चेन्न । समाहारे द्वन्द्वबहुव्रीहिसञ्ज्ञयो समावेशापत्ते । पक्षुयुक्तमिति । ननूक्त वर्णगौरवात्पदगौरवस्य गरीयस्त्वादिति पाठक । सङ्ख्यावाच्येकशब्दोपादानादिति । वस्तुतस्तु दीक्षितो नव्यश्च द्वावपि स्थूलदृश्वानौ केवलार्थैकशब्दस्यैवात्र ग्रहणात् । कैवल्य हि सजातीयसञ्ज्ञान्तरासमानाधिकृतत्वम् । एकाकी तिष्ठतीत्यादौ तथा प्रतीते । ननु परत्वानवकाशत्वाभ्यामेव बाधसिद्धौ आकडारादेकेति व्यर्थमित्याशङ्क्याह । आभ्यामेवेति । परत्वानवकाशत्वाभ्यामेवेत्यर्थ । अन्यत्राकडारीयाविषय सञ्ज्ञाभिन्ने । लोकेसञ्ज्ञाविषयइति । ग्राम इति सञ्ज्ञाया वारणसीति सञ्ज्ञाया कृष्णदेवदत्तादिसञ्ज्ञया त्वष्ण्यन्धकादिसञ्ज्ञायाश्च बाधादर्शनादित्यर्थः । आकडारेइति । तेन धनुषाविध्यतीत्यत्र न पञ्चमी । विरोधाभावेनेत्युक्त्या तत्स्पष्टत्वात् । पर्यायापत्तिदोष इति । इदम-

युक्तम्। विप्रतिषेधे परमिति परकार्यस्यैव प्रवृत्तेः। वाच्यसामान्यचिन्तयेति। अत्र च सिति चेति सूत्रं मानम्। तद्धि भवदीय इत्यादौ पदत्वार्थम्। अन्तरङ्गत्वात्नुग्विभ्रन्तमिति पदत्वे तु तद्वैयर्थ्यम्। नन्वाकडारीयसंज्ञयोः कार्यकालत्वे एकदेशस्थत्वेन या परेत्यसङ्गतमित्याशङ्क्याह। आकडारस्थेति। णलुत्तमोवेति। णुलुत्तमा तिङ्षु परस्मैपदसञ्ज्ञाया बाधिका उत्तमत्वात्। परस्मैपदसंज्ञा तु शतृक्वसोश्चरितार्था। तथा च परस्मैपदानामित्यनेन शतृक्वसोरिव णलादेशः स्यात्। तस्य च स्थानिवद्भावेनोत्तमत्वाभावादसंगतिरिति भावः। इदमुपलक्षणं तयोः समावेशे सिचि वृद्धिरित्यपि ज्ञापकं बोध्यम्। एकदेशिनएवेति। इदमयुक्तम्। इशब्दस्य तदन्तसंज्ञापक्षेपि समानावधिकया लघुसंज्ञया परत्वाद्बाधेन धित्वानापत्तेः। घिसंज्ञा तु हरिशब्दे चरितार्था तत्र भिन्नावधिकत्वेन द्वयोः समावेशात्। अस्य श्रीरित्यत्र गुरुसंज्ञाया बाधेन नदीत्वानापत्तश्च। तस्माद्दीर्जिन्यादिनिर्देशैस्तयोः समावेशो भवता वाच्यः। स च समो वर्णसंज्ञापक्षेपि। तथा हि वेतस्वानित्यादौ भसंज्ञाया इवादीदपदित्यादौ अभ्यासेकारस्य घिसंज्ञायां दीर्घो लघोरित्यस्य वैयर्थ्यापत्त्या तद्बलेन तयोः समावेशकल्पनात्। पञ्चमीसमासाश्रयणादिति। परस्येत्येतदर्थान्तर्भावेण वृत्तिः पञ्चमी भयेनेत्यत्र पञ्चमीति योगविभागेन भाष्यकृता तत्पर इत्यत्र पञ्चमीसमासाश्रयणादिति भावः। दीक्षितेन पञ्चमीसमासोदाहरणस्यापी पत्नित्यस्य विदिसाहर्येण लङ एव ग्रहेऽसमाश्रित्यान्यथा साधनात्पंचमी समासस्य लङि ज्ञुम्कारणप्रयोजनमाह। तेनेति। अतएवेति। एवं जातीयस्थले ज्ञुगो ऽनित्यत्वादित्यर्थः। इदमुपलक्षणम्। अभिन्दन्नित्यादौ सिजभ्यस्तेति ज्ञुसभावोपि फलम्। ननु श्नरित्यत्रेकारो ऽविवक्षितः। तथा च श्नितो श्नस्य ज्ञुसिति वाक्यार्थः। इतश्चेनीकारलोपे श्नमात्रस्यैव ङित्त्वादिसंभवात्। तथा च प्रत्ययेपिपन्नविन्दन्नित्यादौ न दोषः श्नत्वस्याल्वृत्तित्वेन स्थानिवद्भावेनानेतुमशक्यत्वात्। एवं च पञ्चमीसमासस्योदाहरणं मृग्यमिति चेत्सत्यम्। पञ्चमीसमासानित्यत्वे ज्ञापकमाह। प्रविगणय्येति। निश्रायां सेटीत्यत्र सेड्ग्रहणमप्यत्र ज्ञापकं बोध्यम्। तद्धि कारितमित्यादावपि कृत एव णिलोपो यथा स्यान्न ततः प्रागित्येतदर्थम्। पूर्वं णिलोपे हि एकाजिति निषेधादिण् न स्यात्। पञ्चमीसमासस्य नित्यत्वे हि पूर्वं णिलोपेपि तस्य स्थानिवद्भावादिणनिषेधप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव। कंचित्यादौ आकुग-

त्यन्तो ऽपपाठः । स्थानिवद्भावलब्धाकारस्यैव प्रविगणय्येत्यादौ व्यपदेशिवद्भावेन लघुपूर्वत्वस्वीकारे प्रविकीर्येत्यादावयादेशापत्ते । अन्तरङ्गपरिभाषाशरणायाह । यतिषट्त्विनेति । इदमयुक्तम् । न लुमनेति निषेधानित्यत्वेन सुप्परत्वमादाय त्वन्मतेऽपि सूत्रेण सिद्धिसम्भवात् । तदनित्यत्वस्यागतिकगतित्ववत् शब्दत्वेन सादृश्यमादाय पदादि प्रवृत्तेरपि अगतिकगति । भाष्यपठितेति । इदमप्ययुक्तम् । नामिकाशब्दप्रयोगाभावाय तदावश्यकत्वात् । तस्मादिति । व्यवस्थाया इत्यर्थ । नलुमनेति निषेधाऽनित्यत्वे न सर्वत्र सुप्परत्वादिति भाव । पादयतीत्यादौ पद्भाववारणाय सुप्येव पदादय इति व्यवस्थार्थं तद्धारितार्थ्यादयुक्तमेतत् । नन्वेव सूत्रवैयर्थ्यं प्राप्नोतीयत आह । तत्वेपीति । अनादेशस्वेपीत्यर्थ । आवश्यकत्वादिति । एतेन पादशब्दात् हृदयशब्दात्सौ प्रश्निमित्तके पद्हृदादेशे सन्निपातपरिभाषया लोपलुकौ न स्यातामित्यपास्तम् । ननु कोशे पद्हृदादिवत् नसमासादयोपि कुतो नोक्ता इति चेन्न पदादीनामिव तेषां सर्वनामस्थानप्रयोगाभावादित्यवेहि । ननु कोशशब्दानां लोकप्रसिद्धशब्दानुकरणत्वेन शब्दपरत्वादभिव्यञ्चकपदार्था य इति न्यायेन पदार्थप्रवृत्तिसम्भवात्पद्दध्रि स्यान्त हृदित्यादे प्रकारार्थत्वप्रयोजनस्योक्तिरसङ्गतेत्यत आह । कोशेशब्दादीति । अर्थपराण्येवेति । अनुकरणत्वे प्रमाणाभावादिति भाव । ननु तन्नदेव शक्तिग्रहस्य कोशाधीनत्वात् शक्तिग्रहमन्तरेणार्थपरत्वासम्भवात्कोशस्थशब्दानामर्थपरत्वं शशविषाणसदृशमत आह । शक्तिग्रहस्त्विति । सामान्यत इति । अर्थविशेषापुरस्कारेणेत्यर्थ । इदं पदमर्थबोधकं पदत्वात् गोपदवदित्यनुमानं बोध्यम् । एवञ्चेति । अनेनानुमानेन सामान्यतो विष्णुपदार्थोस्तीति ज्ञाने विष्णुपदश्रवणेन तत्स्मरणस्य इत्यर्थ । इतिक्रमेणेति । कोशस्थ पर्यायेष्वेक पद निशिष्यार्थबोधकम् विदितशक्तिकैकपदम् पुरुष प्रत्येव कोशस्य शक्तिग्राहकत्वादत आह । स्वस्वप्रसिद्धेति । तत्तत्पुरुषस्येति । क चित्पुरुष प्रति विष्णुपदमर्थविशेषे गृहीतशक्तिकमन्य प्रति नारायणपदम् तथेति भाव । अत्र भाष्य प्रमाणयति । अतएवेति । इदमुद्गीताधिकरणस्थ शङ्करभाष्योपलक्षणम् । तत्र हि सामानाधिकरण्य चतुर्धा ऽध्यासेनापवादेनैकत्वेनेति । अध्यासेनयथा । इयं प्रतिमा विष्णुरिति, । अपवादेन यथा नेदं रजतमि, त्येकत्वेन यथा द्विजोत्तमो

ब्राह्मणो भूदेव, इति । विशेषणत्वेन यथा । नीलमुत्पलमित्युदाहृतम् । तत्रैकत्वो-
दाहरणे उक्तरीतिः स्पष्टैव । कोशतात्पर्यादिति । तथा च भेदाख्यानाय न द्वन्द्वो
नैकशेषो न संकरः । कृतोत्र भिन्न लिङ्गानामनुक्तानां क्रमादृत इति कोशकारैः परिभा-
षितम् । अस्यार्थः । भेदस्य लिङ्गभेदस्य स्वरूपभेदस्य चाख्यानाय द्वंद्वैकशेषसंक-
रा न कृता इति । लिङ्गभेदाख्यानाय ह्रादिनी वज्रमस्त्री स्यात्कुलिशमित्यस्य स्थाने
कुलिशह्रादिनीवज्रा इति द्वन्द्वः । सहो बलं सहामार्ग इत्यस्यापवादः भिन्नलिङ्गा-
नामनुक्तानां क्रमादृत इति । भिन्नलिङ्गानामिति भिन्नस्वरूपाणामुपलक्षणम् । तेन
समानलिङ्गानां समानस्वरूपाणां द्वन्द्व एकशेषश्च कृत एव । यथा । स्वर्गनाक
त्रिदिवत्रिदशालया इति । पादा रश्म्यङ्घ्रितुर्यांशा इति च । अनुक्तानामित्यनेन
जनयित्रीप्रसूर्माता । तातस्तु जनकः ऽपितेति स्थानान्तर्निर्दिष्टानां द्वन्द्वैकशेषौ कृता-
वेव । मातापितरौ पितराविति । एतेन खं नभः श्रावणो नभा इत्यत्र खश्रावणौ तु
नभसी इति न कृतमिति मञ्जूषोक्तमपास्तम् । नभोन्तारिक्षङ्गगनं नभाःश्रावणि-
कश्च स इत्येवं स्वस्वपर्यायेषु पठितत्वात् । क्रमादृत इति क्रमःप्रस्तावस्तंविना
संकरो न कृतः । सति प्रस्तावे संकर एव । यथेन्द्रादि प्रस्तावे मेरुः सुमेरुरित्ये-
वमादिरूपेण गिरिवर्गादिभ्यः कृप्यसंकरो न कृतः । सति प्रस्तावे संकरः कृतः ।
ननु विष्णुपदार्थाभिन्नो नारायणपदार्थ इत्यादिबोधे एकशेषो न प्राप्नोति । इदित
इत्यादि निर्देशेन सहविवक्षायामेव तत्प्रवृत्तेरिति चेन्न । करीरादि पदार्थानामप्र-
सिद्धानां मिलितानां प्रसिद्धघटपदार्थेन्वयभेदेनान्वये घटः करीरः कलश इत्यादौ
करीरादिपदानामेकशेषापत्तिरित्याशयात् । पाणिनिनेति । प्रकृतिवदनुकरणमित्य-
देशे अत्वकरणवदेकशेषाकरणादिति भावः । एतेनेति । उत्तरपदे इत्यस्य सप्त-
म्यन्तत्वाभावेनेत्यर्थः । इत्यदन्ताः । भाष्यानुक्तक्विब्भ्य इति । एतेन ध्यायते
धीरित्युपपन्नम् । ईत्वं न कृतमितीति । इदमप्राधान्येन वर्णाश्रये प्रत्ययलक्षणमिति
वार्तिकमतेन । वस्तुतस्तु शंस्था इत्यत्र क्विपि ईत्वापादनं न तावद्वार्तिकमतेन ।
तेन ईत्वमवकारादाविति निषेधारम्भात् । नापि भाष्यमतेन । तेन वर्णाश्रये प्र-
त्ययलक्षणानङ्गीकारात् । तदेतदभिप्रेत्याह । अन्येत्विति । दीर्घविधायकेति ।
नन्वेवं रामानित्यत्र दीर्घे कृते आतो ऽनाप इति लोपापत्तिरिति वाच्यम् । आतो
ऽनाप इत्यनेनाकारान्तादङ्गाद्विहिते भसञ्ज्ञानिमित्ते प्रत्यये लोपविधानेनादोषात् ।

एवं रामाणामित्यादावपि वक्ष्यमाणरीत्या दीर्घे आतो लोपो नेति बोध्यम् । इत्यादन्ता । यूइतीति । पूर्वसूत्रे तस्य दीर्घपरत्वेपि शब्दाधिकारादत्र ह्रस्वपरत्वम् । ह्रस्व इत्यनेन समानाधिकरण्यानुरोधात् । तदेतदभिप्रेत्याह । अनुवृत्तयुम्यामिति । अनवकाशत्वादिति । ननु गवाम्पत्यै ब्राह्मण्यै इत्यत्र पति समास एवेति नियमेन घित्वाप्रवृत्तौ चरितार्था नदीसञ्ज्ञा मत्यै इत्यादौ परत्वाद् घित्वेन बाध्यते । अत एव ऊदुपधाया गोह इति सूत्रे उऊदिति प्रश्लेषमाश्रित्य गोह इति विकृतनिर्देशः प्रायाख्यातो भाष्ये । तत्र हि । निजुगुहतुरित्यत्र चरितार्थमुत्वं बाधित्वा गूहयतीत्यादौ परत्वाद् गुणे आन्तर्यादोर्ध ऊकार इत्युक्तम् । निजुगुहतुरित्यादौ गुणस्य प्राप्तिसत्त्वेप्युत्वस्य तदपवादत्वमनाश्रित्येदं भाष्यं प्रवृत्तमिति स्पष्टमेवेति चेत्सत्यम् । नन्वधिकारादित्यसङ्गतम् । एतस्य परिभाषात्वात् । अधिकारत्वे हि प्रतिसूत्रे सम्बन्धकल्पनागौरवम् । बहुषु बहुवचनमित्यादौ तदसम्बन्धाय मण्डूकप्लुतिकल्पने ऽतिगौरवमित्यत आह । ङिद्धिस्थत्वादित्यर्थइति । स्पष्टतयेति । शब्दस्वरूपविशेष्यमध्याहृत्य तदन्तविधिस्तु कल्पनीयत्वादस्पष्ट इति भावः । नमुनेइति । न मुने इत्यत्र नेत्यकारस्तूच्चारणार्थ इति भावः । वार्तिकविरोधादिति । पूर्वपक्षिणो वार्तिकविरोधस्याकिञ्चित्करत्वादिदमयुक्तम् । अमुनाघटेनेति लक्ष्यासिद्धेरिति तु वक्तुं युक्तम् । नेतिनोक्तमिति । ने इति निर्देशस्तु शब्दस्वरूपस्य विशेष्यत्वेन नपुंसकत्वमाश्रित्य तत्रापि नुमोपि ज्ञानगौरवमिति । नन्वाङो नुट् पुंसीति न्यासेऽस्तु न मुने इत्यत्र च न मुनीत्येव च न्यासोस्त्विति चेन्न । अमुष्मै कुलायेत्यादौ मुत्वस्य सिद्धत्वेन नुमापत्तेः । ननु नुम्विधिं प्रति सिद्धत्वेपि स्मायादेशं प्रत्यसिद्धत्वेन मुत्वात्पूर्वं स्मायादेशे कथं नुमः प्राप्तिरिति चेन्न । अने इत्यादौ मुत्वस्यासिद्धित्वेन सवर्णदीर्घस्येनादेशगुणयोर्वावारणाय नाभावे कर्तव्ये कार्यमात्रं प्रत्यसिद्धत्वनिषेधावश्यकत्वात् । सवर्णदीर्घस्मायादेशयोरुभयं निरवकाशविशेषात् । पररूपन्त्वन्तरङ्गत्वान्मुत्वात्पूर्वमेव प्रवर्तते । न मुने इत्यत्र मुनीति न्यासे तु आङो नुट् पुंसीति सुवचम् । नत्वस्येति । आङिस्यस्यासञ्ज्ञात्वमनाश्रित्याङो नादेशविधानादेव टकि लोप इत्यादौ विषयप्रत्ययाङादेशं विधाय तदीयङकारस्य नेत्वमित्यर्थः । एवमौङ इत्यत्रापि बोध्यम् । वार्तिकमनेपीति । अपिना भाष्यकृन्मतेपि । याटि कृते निर्दिश्यमानपरिभाषया

शीभावस्य प्रवृत्त्ययोग्यत्वेन खट्वायामित्यादावाट इव भाष्यकृन्मतेपि निरवका-
शत्वेनेति न पाठः । पूर्वं शीभावप्रवृत्तेः । केचित्त्वङ्गस्येत्यनेन सामानाधिकरण्या-
यावन्ताङ्गस्य निमित्तस्यौङः शीभावविधानात् लुकोपि याटि शीभावप्रवृत्तेः ।
भाष्यकृन्मते तत्कौण्डिन्यन्यायादेव शीभावेन याटो बाध इत्याशय इत्याहुः ।
अविधित्वेनेति । ननु इकारस्य वस्तुतो ऽनुबन्धत्वेनैतस्याप्यनुबन्धकार्यत्व-
मिति चेन्न । तथा सति प्रपठ्येत्यादावतिव्याप्तेः । क्त्वाप्रत्ययककारस्यानुबन्ध-
त्वेन स्थानिवद्भावेन वलादित्वस्य सुवचत्वात् । नन्वेवं तिविंशतेर्डिति, । ष्ठिवु-
क्लमुचमां शिति, अनुदात्तङित आत्मनेपदमित्यादावपीत्पदं व्यर्थमिति चेत्स-
त्यम् । ङसोरित्येवेति । न च द्विवचननिर्देशात् ङसोर्ग्रहणं स्यादिति वाच्यम् ।
अतीत्यस्यानुवृत्त्या दोषाभावात् । औतस्तकारस्योच्चारणार्थत्वादित्सञ्ज्ञां विनैव
निवृत्तिः । अत एव न स्वरितत्वमिति प्राचीनोक्तं दूषयितुमाह । यादित्विति ।
स्वभावत एव निवृत्तित्वादस्योभयत्रोच्चारणार्थं इत्सञ्ज्ञकेव । ननु तपरस्तत्काल-
स्येत्यनेन औकार एव विधेय इति न विभक्काविति शङ्कासमाधाने निष्फले इति
चेत्सत्यम् । ध्वनितइति । तत्र हि नाम्नलोप इति न्यासे नान्दितेरयादौ नलोप
आपादितः । उक्तपरिभाषासत्त्वे तु न शब्दस्य प्रत्ययत्वाभावादेव नलोपाप्रसक्तौ
तदसङ्गतिः । नेतादिगेति । ननु तपरस्तत्कालस्येत्यनेनौकारमात्रस्यैव तस्य ति-
त्त्वाभावात्स्वरितत्वशङ्का तत्समाधाने द्वे अपि निष्फले इति चेन्न । किमोदि-
त्यत्रापि तथात्वापत्तौ केत्यत्र स्वरितत्वानापत्तेः । यदि च तदर्थं तित्पदम्
तिद्बोध्यपरम् । तदाप्रकृतेपि तदापत्तेः । नव्यमते ऽणुदित्सूत्रस्थभाष्यानुरोधेनानु-
बन्धातिनिर्मुक्तपदार्थोपस्थित्यङ्गीकारेण तित्पदस्य तद्बोध्यपरत्वस्यावश्यकत्वाच्च ।
तदेतदभिप्रेत्य तित्स्वरितमिति सूत्रे कैयटेति । ताप्रत्यायितसञ्ज्ञाद्वारेण सञ्ज्ञी कथ्यत
इत्यस्ति तित्पदव्यपदेश आदेशस्येत्याद्युक्तम् । समुदायस्येति । नानर्थकेति परि-
भाषा त्वत्रैव सूत्रे भाष्ये प्रत्याख्याता । शस्येति । आस इति समुदायात्पूर्वत्वे-
पीति शेषः । अदृष्टार्थमिति । यत्तु पाठकेनोक्तं हल्ङ्याब्भ्य इति सूत्रे हलन्तानां
सुतिसीनामित्यर्थे हन्यादित्यादौ यासुड्घटितस्य लोपः स्यादिति तन्न । सुति-
सीनां तस्मादित्युत्तरस्येति परिभाषया यन्तत्वकल्पनेन निर्दिश्यमानपरिभाषा-
प्रवृत्तौ दोषाभावात् । त्यत्यादित्यत्र मृदिहीत्यत्रादः सर्वेषामङ्गार्थगाल्वयोरि-

स्याभ्यामण् नेष्यत एव हल्ग्रहणात् । वस्तुतस्तु गुणोऽप्यके इत्यस्य हलादौ सार्वधातुके इत्यर्थे ऊर्णोतीत्यत्रापि गुणापत्ति । नचोर्णोतेर्विभाषेत्यस्य वैयर्थ्यमिति वाच्यम् । सूत्रद्वयस्य विषयव्यवस्थाया एवानापत्तेः । एवमद सर्वेषामित्यस्य हलादे सार्वधातुकस्येत्यर्थापत्तौ अत्तिअत्तामित्यादावद्दापत्तिः । तस्मादष्टकसञ्ज्ञासूत्र इत्यर्थमिति । द्वेधेति । गोचष्कयणीमहुश्रेयर्सीत्यर्थयमिदम् । रागदत्यादाविति । राजेत्यादौ तु संयोगान्तलोपेन सिद्धि । यद्वा हल्ड्याब्भ्य किमित्यस्य ड्याब्भ्य इति किमर्थमित्यर्थ । समुदायद्वारा ऽवयवप्रश्ने तात्पर्यात् । इदितोरित्यर्थइति । सञ्ज्ञाविधौ प्रथमान्तयोरेवोपयोगात् । सङ्ख्यवयवभिन्नाविद्युताविद्युचितम् । वर्णसञ्ज्ञापक्षे सूत्रार्थमुक्त्वा तदन्तसञ्ज्ञापक्षे त वक्तुमाह । तदन्तेति । यज्ञमध्ये । ब्रह्मयज्ञमध्ये । अतएनामाधुत्वादेय । आयन्यासे दोषमाह । शुपतिनेति । द्विर्नाये दोषमाह । शुसस्येति । इदमुपलक्षणम् । पतिगुतान्स्यानित्यादौ द्वन्द्वेपीति पूर्वनिपातोपि पूर्वन्यासेन सिध्येत् । उत्तरन्यासे च बहुसलिशब्दे नित्व न स्यादित्यपि बोध्यम् । भाष्ये स्पष्टत्वादिति । तथा च भाष्यम् । बहुष्विति वक्तव्यम् । इह माभूत् कियान् न वक्तव्यम् किमेलत्परिप्रश्ने वर्तते परिप्रश्नश्चानिज्ञाते । अनिर्ज्ञानम् च बहुषु । द्व्येकयो पुनर्निज्ञातम् । निज्ञातत्वात् द्व्येकयो परिप्रश्नो न परिप्रश्नाभावात्किमेव नाम्नास्ति । कुत प्रत्यय इति । स्वतन्त्रास्तु किम प्रश्नार्थकत्वात्प्रश्नस्य च सशयपूर्वकत्वात्सशयस्य च तत्तद्धर्मावाचिकविषयकोटिकत्वात्त्रैकत्व द्वित्वयोरिव नित्वादीनामपि परिस्फुरणात् द्विना इत्यादाविव स्वौजसिति विधिसूत्रगत परत्वमादाय बहुवचनम् । तथा च कति पुत्रा इति प्रश्ने द्वौ पुत्राविदुत्तर लोके कुर्वन्तीत्याहु । बहुगण । नहिशदन्तेति । इदमुपलक्षणम् । त्यन्तपर्युदासोऽप्यत्र ज्ञापक । यत्तु पाठक्रनोक्तम् । त्यन्तपर्युदासो न ज्ञापक कतिन्याप्त्याचारितार्थत्वादिति तत्तुच्छम् । भाष्यकृता त्यन्तपर्युदासे ऽर्थवतविंशतिशब्दस्य ग्रहणमित्युक्तत्वेन विंशतिशब्द एव त्यन्तपर्युदासस्फुरे । कतिशब्दात्तु कानिष्ट एव । स्पष्ट चेद् भाष्ये इति । तथा च भाष्यम् । अथवा महतीयसञ्ज्ञा क्रियते तत्करणे एतत्प्रयोजनम् । अन्वर्थसञ्ज्ञा यथा विज्ञायेत । सङ्ख्यायतेनेनेति सङ्ख्या । एकादिकया चापि सङ्ख्यायन इति । ननु महासञ्ज्ञा-

करणेन तदर्थानुगुणं सञ्ज्ञित्वं कल्प्यतां प्रदेशेषु लोकप्रसिद्धार्थावगतिस्तु कुत इति चेन्न । तदर्थाननुगुणानां वक्ष्यमाणप्रकारेण सञ्ज्ञित्वव्यावृत्तिसम्भवात् । नियतविषयपरिच्छेदहेतुत्वाभावेन बह्वादीनामन्वर्थसञ्ज्ञाननुगुण्याञ्चागत्या महासञ्ज्ञाप्रकरणेन प्रदेशेषु लोकप्रसिद्धार्थावगतेः कल्पनात् । एतन्न्यायोपयोगः । कृत्रिमा कृत्रिमन्यायोपयोगः । अभ्यासोऽत्रेति । तत्र महासञ्ज्ञाकरणे ऽपि न लोकप्रसिद्धार्थस्य ग्रहणं ऐच्छिकं द्विःप्रयोगेपि अभ्यासादिकार्यापत्तेः । ननु संख्यापदेन लोकप्रसिद्धार्थग्रहणे सूत्रे बहुगणयोर्ग्रहणं व्यर्थम् तयोरपि संख्यावाचित्वादित्याशङ्क्याह । सूत्र इति । अत एव । बहुत्वादेः संख्यात्वाभावादेव । इदमुपलक्षणम् । बह्वादीनां ग्रहणं शक्यमकर्तुं ज्ञापकात्सिद्धमिति भाष्यस्य । बह्वादीनां सङ्ख्यावाचकत्वे तु ज्ञापकवैयर्थ्यम् । ननु बहुत्वादेः सङ्ख्यात्वाभावे एकादिकयाचापि संख्यायत इति भाष्यविरोधः । तत्रापि शब्देन बह्वादीनामपि ग्रहणादित्याशङ्क्य समाधत्ते । यत्त्वित्यादिना । स्वव्याप्येति । तथा च स्वव्याप्यवत्त्वादिद्वारा बह्वादीनां सङ्ख्यार्थकत्वेपि साक्षात्तदभाव इति भावः । कैय्यटोक्तं दूषयति । एतेनेति । नियतविषय परिच्छेदहेतुत्वाभावेन बहुत्वादीनामसङ्ख्यात्वेनेत्यर्थः । अथवा महतीयं सञ्ज्ञा क्रियत इति भाष्यमुपादाय कैयटेनोक्तम् । ननु महत्याः सञ्ज्ञायाः करणात्संवैपुल्यवाचिनोर्बहुगणयोरसञ्ज्ञा माभूदेकादीनान्तु कथंस्यात् । नैषदोषः । संख्येति योगो विभज्यते । तत्रचान्वर्थसञ्ज्ञानुरूपः सूत्रः सञ्ज्ञा आक्षिप्यते । ततो बहुगणेत्यादि । इदम्पूर्वोक्तिव्यावृत्त्यर्थं नियमार्थं व्याख्यायते ऽन्वर्थसञ्ज्ञाश्रयणादेव संवैपुल्यवाचिनोर्बहुगणयोः संज्ञा नेति । ननु महासंज्ञाकरणसामर्थ्याल्लौकिकसंख्याया अपि प्रदेशेषु ग्रहणमित्ययुक्तम् । संवैपुल्यवाचिनोर्बहुगणयोः सञ्ज्ञानिरासार्थं तत्सार्थक्यादित्याशङ्क्याह । संवेति । यद्वा लोकप्रसिद्धसंख्यावाचित्वस्य बह्वादिष्वभाव इति पूर्वमुक्तत्वेनान्वर्थसञ्ज्ञात्वेन संवैपुल्यवाचिनोर्बहुगणयोर्व्यावृत्तिरिति वक्तुमशक्यम् । एवं चतिशब्दोपि ऽव्ययत्वेन सञ्ज्ञिकोटौ निविष्टो न व्यवच्छेद्येनेत्याशङ्क्याह । सङ्ख्येत्यादिनेत्यन्तमित्यन्तेन । पर्यवइति । संख्यापदानुवृत्तिरप्युणादीनां व्युत्पत्तिपक्षस्य ज्ञापिका । अतो न संकर इति । वस्तुतस्त्वनेकसञ्ज्ञाकरणसामर्थ्यादेकशेषत्वाभावेपि नाम्नां सञ्ज्ञानां समावेशः । लोपसञ्ज्ञा त्वासां विषये प्रवर्तत एव । बाधकाभावात् । नद्यनाविव लोपसञ्ज्ञा प्रत्ययदर्शनबुद्धि-

श्य विहिता किन्त्वदर्शनमात्रम् । एकसञ्ज्ञोद्देश्यकानेकसञ्ज्ञानान्तु पृथक् सञ्ज्ञाकरणसामर्थ्यान्नियुक्तः समावेशः । न लुमतेति निषेधारम्भाच्च लोपसञ्ज्ञैव तासां विषये प्रवर्त्तते । ननु यथा लोपसञ्ज्ञा एतासां विषये प्रवर्त्तते तथैता अपि लोपसञ्ज्ञाविषये प्रवर्तेरन् । तथा च गोमती गोमती सम्पन्ना गोमतीभूतेत्यत्र च्वेर्लोपे तत्र लुक् तद्धितलुकीति ङीपो लुक् प्रसज्येत । छिद्भिदित्यादौ श्लाविति द्वित्वं प्रसज्येत । च्वेः क्विपश्चादर्शनस्य लुक्श्लुसञ्ज्ञाप्रवृत्तेः । वेरपृक्तस्येति लोपे प्रत्ययत्वव्याप्यधर्मपुरस्कारेणैव प्रत्ययस्योपपादनादिति चेन्न । पृथक्सञ्ज्ञात्रयविधानसामर्थ्येनासां स्वभिन्नसञ्ज्ञासामान्यविषये ऽप्रवृत्तिकल्पनात् । लोपसञ्ज्ञायास्त्वासां विषये प्रवृत्तिरुपपादितैव अत एव प्रत्ययादर्शनन्तु लुमत्सञ्ज्ञामाप्नोति । तत्र को दोषः । तत्र लुकि श्लुविधिमतिषेधः । न वा पृथक्सञ्ज्ञाकरणात् । तथैव तर्हि अदर्शनसामान्ये लोपसञ्ज्ञा लुमत्सञ्ज्ञा अपि लोपसञ्ज्ञां अवगाहेरन् । तत्र को दोषः । गोमतीसत्र लुक् तद्धितलुकीति ङीपो लुक् प्रसज्येत । ननु चात्रापि न वा पृथक् सञ्ज्ञाकरणादित्येव सिद्धम् । यथैव तर्हि पृथक्सञ्ज्ञाकरणसामर्थ्याल्लुमत्सञ्ज्ञामपि लोपसञ्ज्ञा नावगाहते । एवं लोपसञ्ज्ञापि लुमत्सञ्ज्ञा नावगाहते । तत्र स एव दोषः । लुक्युपसङ्ख्यानमित्यादि भाष्योक्तं सङ्गच्छते । न वा पृथक् सञ्ज्ञाकरणादिति भाष्यस्य तन्त्रानितसञ्ज्ञाभिप्रायकत्वे तु गोमतीसत्र लुक् तद्धितलुकीति लुगापादनपरभाष्यं यथैव तर्हीत्यादि तदुत्तरभाष्यं चासङ्गतं स्यात् । तन्त्रानितसञ्ज्ञाश्रयणे गौरवं च । विहितविशेषणमिति । अत्र वदन्ति । एवं सति परमकतीत्यत्र षड्भ्यो लुगिति लुगनापत्तिः । ष्णान्तस्य षट्सञ्ज्ञाविधानात् । न चायं समास एव दुर्लभः दिक्सङ्ख्ये सञ्ज्ञायामिति नियमादिति वाच्यम् । दिक्सङ्ख्ये समानाधिकरणविशेषणत्वेनोपादाय प्रवर्त्तमानसमाससञ्ज्ञाया एव तेन नियमेन व्यावृत्तेः । अत एव सर्वादिसूत्रे परमपञ्चेति प्रयुक्तं भाष्ये । न च बहुगणवतुडतिसङ्ख्येति वचनयोर्द्वन्द्वस्तदन्तविधिः । अति कतय इत्यत्रापि षट्सञ्ज्ञाया लुगापत्तेः । बह्वादीनामसङ्ख्यात्वस्य तथाखीकृतत्वेनान्वर्थसञ्ज्ञात्वेन सङ्ख्याषट्सञ्ज्ञयोरुक्तस्थले वारणसम्भवादिति । आग्नेयेति । आङो यमहन इत्यात्मनेपदं विधिलिङुत्तमपुरुषैकवचने इट् गमहनेत्युपधालोपः सीयुटः सकारस्य प्रत्ययावयवस्य लोपे प्रत्ययलक्षणेन झलादिप्रत्ययपरत्वेनानुनासिकलोपवारणाय प्रत्ययग्रहणं तस्मिंस्तु सति कृत्स्नप्रत्ययलोप एव तत्प्रवृत्तेर्न दोषः । चरिता-

र्थमिति । प्रत्यावयवे प्रत्ययत्वस्वीकाराभावे तु प्रत्ययरूप शराभावेन पत्वाप्रवृत्तौ सातिग्रहणं व्यर्थं स्यात् । ननु प्रत्ययरूपसकारस्य कुत्राप्यसंभवएव कुतोनोक्तः । अवैपीदित्यादौ आदेशरूपत्वेनैव पत्वसिद्धेरितिचेन्न । इन्द्रोमाववसन् सेदेवान्यक्षदित्यत्र वहियजिभ्यां लेटि सपि प्रत्ययरूपसकारसंभवादिहापीति भाष्यम् । तदाहेति । अतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इत्येतत्प्रमेयमेवत्यर्थः । प्रत्ययलोप इति । गुणे प्राप्ते इति वक्तव्ये जासि चेति गुणे प्राप्त इत्युक्तचैतल्लभ्यम् । न लुमताङ्गस्य । लुप्तप्रत्ययपरतो यः पूर्व इत्यस्य फलमाह । तेन पञ्चत्वादाविति । वार्तिकमतेनतत्सूत्रोदाहरणमाह । राजपुरुषादाविति । सर्वमतसाधारण्येनैतत्सूत्रोदाहरणं तु कतीत्यादि । लब्धाङ्गसञ्ज्ञक इत्यस्य प्रयोजनमाह । अङ्गसञ्ज्ञात्विति । अन्यथान्तरङ्गानपीति न्यायेनाङ्गसञ्ज्ञातः पूर्वं लुक् प्रवृत्तौ यथोद्देशेपि स न स्यादिति भावः । अतएवेति । अङ्गसञ्ज्ञायामुक्तरीत्या न लुमतेति निषेधाप्रवृत्तेरेवेत्यर्थः । स्त्रीप्रत्ययलुकीति । इदमुपलक्षणं तथाहि । इदं स्त्रियां चेत्यत्र स्त्रीईइति प्रश्लिष्य ईकारेपरतः स्त्रियां तृज्वद्भावः । अत एव ज्ञापकात्तुनन्तान्ङीपीति भाष्योक्तपक्षान्तराभिप्रायेणायं ग्रन्थः । आहोस्वित् स्त्रियां क्रोष्टोरङ्गस्य तृज्वद्भाव इति पक्षान्तराभिप्रायेण । नाद्यः । स्त्रीप्रत्ययलुकि प्रत्ययलक्षणेन ईकारपरकत्वस्य न लुमतेति निषेधे जागरूकेसत्यसम्भवेन तत्पक्षेपि च क्रोष्टे इति रूपस्यैव दुर्लभत्वात् । नान्त्यः । तत्पक्षे तृज्वत्वप्रवृत्तेः पूर्वं स्त्रीप्रत्ययस्यैवाभावेन तल्लुकः खपुष्पगन्धायमानत्वात् । तस्मात्पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलमित्यर्थे ठकि तस्याऽध्यर्धेति लुकि पञ्चक्रोष्टु इत्यत्र तृज्वत्वमिति वक्तुं युक्तम् । वस्तुतस्तु पञ्चभिः क्रोष्ट्रीभिः । क्रीतं कुलमित्यर्थे ठकः पूर्वंतृज्वत्वविनाशकत्वाभावेनेति वक्तुंयुक्तम् । अन्तरङ्गत्वात् । अङ्गसञ्ज्ञाया लुगुत्तरमपि प्रत्ययलक्षणेन प्रवृत्त्या लुकोऽन्तरङ्गतृज्वत्वाविनाशकत्वाभावेनान्तरङ्गानपीति न्यायाप्रवृत्तेः । अङ्गस्य क्रोष्टुरिति । अङ्गस्यावयवो यः क्रोष्टुशब्द इत्यर्थः । अङ्गसञ्ज्ञा च भवति प्रत्ययलक्षणेनेति । नन्विदं भाष्यं पञ्चभिः क्रोष्ट्रीभिः क्रीतैरथैः पञ्चक्रोष्ट्रीभीरथैरित्युदाहरणं प्रवृत्तं तत्र च श्रूयमाणमिसमाश्रित्याङ्गसञ्ज्ञा भविष्यतीति न प्रत्ययलक्षणोपयोग इति चेन्न । तस्य पञ्चक्रोष्टुइत्युदाहरणोपलक्षणेनादोषात् । तथाचोक्तदिशान्तरङ्गत्वेन तृज्वत्वस्य समाससञ्ज्ञातः पूर्वमेव तृज्वत्वप्रवृत्त्या न प्रत्ययलक्षणोपयोग इति वाच्यम् । अङ्गसञ्ज्ञा तु भवतीति भाष्यस्य लुकोन्तर-

ङ्निमित्तविनाशकत्वाभावसम्पादनार्थत्वेनादोषात् । नियमतइति । नन्वेवं तृज्वत्त्वस्यापि परनिमित्तकत्वेन तस्मिन्न लुमतेति निषेधप्रवृत्त्यापत्तिरिति चेन्न । नलुमतेति निषेधे व्याख्याने शब्दतः परनिमित्तकत्वस्यैवाश्रयणात् । अतएवेति । उरन्नित्यत्र शब्दतः परनिमित्तकत्वानाश्रयणे न लुमतेति निषेधाप्रवृत्तेरेवेत्यर्थः । इदमयुक्तम् । अत्रप्रवृत्तावपि गुणो यङ्लुकोरिति निषेधेनेष्टसिद्धेः । यत्तु चर्करीत्यजन्तो इत्यादौ तयोरितिपुनिमिकाङ्क्षत्वमादायात्वप्रवृत्तिरिति पाठकेनोक्तं तन्न । अङ्गाधिकारस्थाभ्यासकार्याणामभ्यासाङ्गोभयनिमित्तप्रत्यय एव प्रवृत्तेः । अत एव जिहनीयिषतीत्यादौ न कुत्वम् । कार्यकालत्वस्याभावाच्चेति । इदमयुक्तम् । कार्यकालं सञ्ज्ञापरिभाषं यत्रोद्देशमित्युपस्थितमिदं भवति यचिभमित्याद्यनेकभाष्यविरोधात् । कैयटोक्तं दूषयति । एतेनेति । आकडारस्थस्य कार्यकालत्वाभावेन प्रत्यय इत्यस्यावृत्तिं विनैवोक्तदिशा निर्वाहेण चेत्यर्थः । पदैकवाक्यतयेति । यत्राङ्गमिति श्रूयते तत्र यस्मात्प्रत्यय इत्युपतिष्ठते इति सूत्रार्थाश्रयणात् । अस्मिन्पक्षे च प्रत्यय इत्यस्यावृत्तिर्नापेक्षिता । अङ्गाश्रितप्रत्ययनिमित्तमिति । न लुमतेति निषेधस्तु अनाश्रितप्रत्ययनिमित्तककार्य एवेति चर्करीत्यादावत्वप्रवृत्तिरिति भावः । अनडापत्त्याचेत्यमिति । इदं च विशेषणतया वर्णाश्रयणे प्रत्ययलक्षणं न भवतीति वार्तिकमतेन दूषणं न वस्तुतः । अपास्तमिति । वस्तुतस्त्वाकडारीयेष्वपि कार्यकालपक्षस्योपपादितत्वात्कैयटोक्तमपि युक्तम् । आवृत्तिरप्यावश्यकी अङ्गसञ्ज्ञायाः सुपक्षीणाया परत्वेडेरङ्गसञ्ज्ञायामुपक्षीणत्वेनोरदत्वस्य प्रत्ययनिमित्तत्वात् । कुलालपितुर्घटं प्रतानं ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य प्रश्नक्रिया प्रतीयान्यथासिद्धत्वात् । स्वमोर्नपुंसकादिति सूत्रे इति । एतत्सूत्रोत्तरवर्तिनि नेतराच्छन्दसीति सूत्रे इत्यर्थः । पदान्तरसन्निधानं विनेति । वस्तुतो ऽलिङ्गे युष्मदस्मदीत्यत्र टाबभावोपपादनार्थं प्रवृत्तत्वेनेदृशार्थकत्वं न युक्तम् । न चाटाव्यत इत्यादौ पदान्तरसन्निधानं विना स्त्रियां वर्तमाने टाबित्यर्थ इति वाच्यम् । मानाभावात् । न पदित्यत्र पद्ग्रहणवैयर्थ्यापत्तेश्च । तस्मादलिङ्गे युष्मदस्मदीति वार्तिककस्य चित्पर्यमतमाश्रित्य प्रवृत्तमिति बोध्यम् । उच्चारणार्थत्वशङ्कावारणायेति । इदमयुक्तम् । त्रयोदशेत्यादौ सान्तादेशविधायके त्रेस्त्रय इत्यादाविवात्रापि सान्तत्वभ्रमवारणसंभवात् । अभ्युच्चयायेति । भवामीति प्रत्युदाहरणस्यापि निर्दुष्टत्वादिति भावः । केचित्तु तुम

पूर्वं परत्वात् त्यदाद्यत्वे पश्चाद्रुगिदचामिति नुमि सर्वनामस्थाने चेति दीर्घे भवानिति सिध्यतीत्याहुः । तन्न । नलोपापत्तेः । झलन्तानामेवोगितां नुम् विधानाच्च । अन्यथा विद्वांसि नुमापत्तेः । अपरे तु इदं जातिपक्षे । व्यक्तिपक्षेऽन्त्वत्वसन्तस्येति सूत्रे ऽस्याप्यतोनुपस्थितिसामर्थ्यात्सौ न त्यदादीनाम इत्यस्य प्राप्तिरिति शङ्का स्यात् । अतो भवन्तावित्यपास्तमित्याहुः । इति इदन्ताः । ईदन्तेभ्य इति । वातप्रपूर्वान्मा- धातोः क्विपो न विधानमित्यर्थः । वातप्रमीशब्दाद्वाराकनन्तात्कर्तरि क्विवित्यन्ये । मृगाकृतिरिति । हरिणाकृतिः । यूवयारुयौ । दीर्घाज्जसि चेति निषेधमाशङ्क्याह । वाच्छन्दसीति । मूलविभुजादिभ्यइति । आतोनुपसर्गे क इत्यनेन तु न । उपसर्गत्वात् । अत एव "यस्मिन्दशसहस्राणि पुत्रे जाते गवां ददौ । ब्राह्मणेभ्यः क्रियाख्येभ्यः सोयमुञ्छेन जीवतीति, सिद्धम् । प्राधान्येनतद्बोधकत्वनिवेशेऽइति । नन्वेवं कुमारी वर्षाभू शब्दे नदीसञ्ज्ञा दुर्वारा । विशेषणतया नित्यस्त्रीलिङ्गार्थबोधकत्वादिति चे- त्सत्यम् । अवयवस्त्रीविषयत्वात्सिद्धमिति वार्तिकस्य यथोद्देशपक्षाभिप्रायेण प्रवृ- त्तेः । तथाचावयवस्त्रीविषयत्वात्सिद्धमिति भाष्यमुपादाय कैयटेनोक्तम् । अन्तर- ङ्गत्वात्पूर्वरूपमेव स्त्र्याख्यत्वात्प्रवृत्ता नदीसञ्ज्ञा पश्चादुपजायमाने लिङ्गान्तरयो- गे न निवर्तत इति । आकाडारस्थेत्यारम्य केषाश्चिन्मतम् । कार्यकालत्वाभावादित्यु- त्तरं अवयवस्त्रीविषयत्वात्सिद्धमित्येतद्यथोद्देशपक्षाभिप्रायकमेवेति शेषः । कथमिति । पौर्वापर्यायभावादिति शेषः । भाष्येस्पष्टमिति । वस्तुतो नैवं भाष्यकृतोक्तम् । किन्त्वम्बार्थानां ह्रस्वः । नदीह्रस्वयोर्न्यासे असि चेति नद्या अपि गुणः प्राप्नोतीत्या- शङ्क्यैवं तर्हि योगविभागः करिष्यते ततो ह्रस्वःअम्बार्थनद्योरिति वर्तते । अन्यो- र्ह्रस्वस्य ह्रस्वो भवति । किमर्थमिदं गुणो भविष्यति तद्बाधनार्थं ततो गुणश्च गुणो- भवति ह्रस्वस्येति । अथवा ह्रस्वस्य गुण इत्यत्राम्बार्थनद्योर्ह्रस्व इत्येतदनुवर्तन इत्युक्तम् । वक्तुमशक्यइति । अम्बार्थनद्योर्गुण इति न्यासेनेत्यर्थः । गुणः स्यादे- वेति । अनित्यस्थले लक्ष्यैकचक्षुष्कतया आवश्यकत्वेन न लुमताङ्गस्येत्यस्याप्र- वृत्तौ बीजाभावान्नदीसाहचर्यात्स्त्रीलिङ्गस्यैवाम्बार्थस्य ग्रहणादनः शब्दे गुणप्राप्ते रमावाचीति मौनिश्रीकृष्णभट्टाः । अयंह्रस्वइति । विधानसामर्थ्यलभ्यो भाष्यो- क्तयोगविभागलभ्यो वा ह्रस्व इत्यर्थः । वृद्धिवारणायेति । न चान्तरङ्गायां वृद्धौ बहिरङ्गस्योत्वस्यासिद्धत्वम् । नाजानन्तर्य इति निषेधात् । परत्वं बाधकमिति ।

न चाड् विधानसामर्थ्यम् । डेरामिति नुड्बाधनार्थं चरितार्थत्वात् । यत्त्वेव सति, ह्रस्वनद्यापो नुडित्यस्यानन्तरं ङेर्नेत्येव ब्रूयादिति मौनिश्रीकृष्णभट्टाः । तन्न । षट्त्रिचतुर्भ्यश्चेत्युत्तरसूत्रेषु नेत्यस्यानुवृत्तिप्रसङ्गात् । ननु ह्रस्वनद्याप इति सूत्रे आडेरिति पाठ्यम् । अथवा ङेराम् उकारानुबन्धविशिष्टं कार्यं । तथाचैव छघुन्यासेन सिद्धे ऽङ्विधानं पररूपबाधनार्थमिति चेन्न । सखीशब्दात् ङस्यटि पररूपेऽपि तस्य पूर्वस्मादपि विधौ स्थानिवत्त्वेन ख्यत्यादित्युत्त्वाप्रवृत्त्यर्थं आड्विधान स्यादित्याशयात् । अतएवेति । अनवकाशत्वेन बाधे ऽपवादप्रवृत्त्युत्तरमुत्सर्गप्रवृत्ते-रेवेत्यर्थः । किन्त्वनवकाशत्वादिति । अल्लोन्त्यपरिभाषैकवाक्यतया णेरन्त्यस्य अस्यैवेत्वमित्यर्थे ऽनवकाशत्वमिति भावः । वस्तुतस्त्वेवमर्थाश्रयणेनानवकाशत्वोप-पादने ऽभ्यासविकारे बाध्यबाधकभावो नेति परिभाषाश्रयणेऽपि हलादि शेषो न स्यात् । इत्त्वस्योकरीत्या निर्विषयत्वापत्तेः । तस्माद्युगपद् द्वयोरसम्भवे ऽनवका-शत्वं यथा ऽड्डामोराम इति द्विर्वचनापहारकत्वेनागमिन एवासत्त्वेन युगपत्तयोः प्रवृ-त्त्यसम्भवात् । तुकृदीर्घयोस्तु युगपत्प्रवृत्त्यसम्भवः । दीर्घेण सर्वस्यागमिनो नाप-हारात् । इत्त्वहलादि शेषयोरपि न युगपत्सम्भवः । एकस्य स्थानिन आदेशद्व-यासम्भवात् । प्रक्रियावासनावता दृश्य हि रूपान्तरप्राप्तिः । लोपः सर्वथा निवृ-त्तिरिति । तथा च लोके ऽपि ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषातामिति भोजनपरिवेषणयोर्युगपदसम्भवेन स्वप्रवृत्तिसमये भोजनबाधेऽपि परिवेषणानन्तरं माठरकौण्डिन्ययोर्भोजनं दृश्यते । हयवरट्सूत्रे च भाष्ये नेदानीन्तौ भुञ्जाते इति कालनिशेषप्रदर्शनं च कृतम् । च्छ्वोरिति सूत्रे च भाष्ये ऊठाष्टित्वे ऊडुत्तरं यलोप उक्तः । ऊड्वलोपयोर्युगपदसम्भवादिति दिक् । ननूहचगमादीनामिति वार्ति-कानिष्पन्नभ्रूशब्दस्य धातुत्वादेव सिद्धे तदुपादानं व्यर्थमत आह । भ्रूशब्दस्येति । सुभ्रुवाविति सिद्धमिति । तथा च प्रयुज्यते । गूढसूचितरहस्याविभेद सुभ्रुवा प्र-वर्तते परिहासः इति । एरनेकाचोऽसंयोगपूर्वस्येत्यर्थात्सुश्रियावित्यादावपि-यङ् सिद्धिः । न भातीत्युक्त्या क्रियान्वयेन प्रसज्यप्रतिषेधशङ्का निराक-रोति । धात्ववयवसंयोग पूर्वाभिन्न इति । उदियादिति । उत्पूर्वादीङ्गतावित्यस्मा-ल्लिङि रूपम् । इत्यर्थेनसिद्धेरिति । वस्तुतस्तु संयोगाभिन्नात्संयोगकदेशात्तद्व-ट्टिनसमुदायाद्वा परस्य संयोगपूर्वकस्यापि यणापत्तेः । धात्ववयवसंयोगात्परस्य

नेत्यर्थैतूदियादित्यादौ दोषः । पर्युदासाभावेनोक्तार्थालाभादिति पूर्वग्रहणमावश्यकं किमिति । पूर्वसूत्रात् द्वयोरित्यनुवृत्त्या सिद्धमित्याशयः । निषेधादिति । ननु खरकुट्यै ब्राह्मण्यै इत्यादौ शाकलं प्राप्नोतीति चेन्न । उत्तरपदत्वेति वार्तिकारम्भे तत्प्राप्तावपि प्रत्याख्यानपक्षे तदप्रवृत्तेः । प्रतिपदोक्तत्वादिति । तथा च दुर्धियावित्यत्र बहुव्रीहौ यण् नेति तदाशयः । विशिष्टरूपोपादान विषय इति । दिक्समास इति वत्कातिसमास इति विशिष्ट कपोपादाने इत्यर्थः । इतिविग्रहाभिप्रायेणेति । प्रकृष्टन्ध्यायतीति विग्रहे तु नित्यस्त्रीत्वाभावः । सत्त्वभूतार्थकेति । शुद्धधात्वर्थविशेषणत्वे तु कर्मकारकत्वमस्त्येवेति भावः । सूत्रारम्भेपीति । भयहेतुरिति हेतुपदस्वारस्यात् । तथा च सत्यारम्भेपि पञ्चमीसमाससम्भवान्नोक्तस्थले यणिति भावः । अभ्युच्चयेति । पूर्वपरिहारे ऽरुच्यभावादिति भावः । अनर्थकेव निषेध इति । तथा च सुध्युपास्ये निषेधप्रवृत्तिर्नेति भावः । प्रकारान्तरमाह । सुधीति वेति । यलोपे सख इति । यावत्पर्यन्तं लोपो व्योरित्यस्य प्रवृत्तिसम्भावना तावत्पर्यन्तंवेरप्टक्तोति लोपो न प्रवर्त्तते । ननु नः क्य इति निषेधः दन्त्यान्तविषयकोनुनासिकान्त्यविषयो वा स्यादित्याशङ्क्यासति बाधक इति न्यायाच्छब्दानुरोधाच्च सामान्यापेक्ष इत्याह । नःक्यइति । परपदस्याजादेशस्यैवेति । अपीपचन्निति पञ्चमीसमासप्रयोजनप्रदर्शनपरभाष्यप्रामाण्यादिति भावः । अनित्यत्वादिति । अन्तरङ्गपरिभाषया अनित्यत्वेनैव निर्वाहे नाजानन्तर्यपरिभाषा नाश्रयिणत्येति मतेनेदम् । नन्वह्लोपस्य स्थानिवत्त्वाचाणि प्राप्ते क्कौलुप्तं न स्थानिवदित्यसङ्गतम् । लोपस्य लोपकर्मत्वाभावादित्यत आह । भावेक्तइति । अस्मादेव भाष्यप्रयोगात्क्वचित्सकर्मकेभ्योपि भावे क्तो भवति यत्र प्रयोगस्य न गत्यन्तरमिति भावः । ननु नैवं विज्ञायेत क्कौलुप्तं न स्थानिवत् कथं तर्हि क्कौविधिं प्रति न स्थानिवदिति न पदान्तसूत्रस्थ भाष्यात्क्कौलुप्तं न स्थानिवदिति नास्त्येवेत्याशङ्क्याह । अस्याप्यर्थस्येति । तथा चोक्तभाष्यं सर्वत्र नैयमिज्ञायते क्कौ लुप्तं न स्थानिवदिति सर्वत्र क्कौ विधिम्प्रति न स्थानिवदिति विज्ञायेत इत्यर्थकमिति भावः । पदकार्यविषयएवेति । एवं चाभिव्यक्तपदार्था य इति न्यायमूलकं प्रसिद्धे इति सर्वनामप्रकरणस्थस्वग्रन्थविरुद्धं तस्मात्तन्न्यायप्रवृत्तावपि विशेषणतया ऽभिव्यक्तपदार्थकत्वमादायानङ् बोध्यः । किन्तस्य

धातुत्वमिव । इति इदन्ता । प्राधान्याचेति । सर्वेषां कार्याणां रूपनिष्पत्त्यर्थ-त्वादिति भावः । ननु रूपातिदेश एव रादेशो न स्यात् वर्णसंस्थानविशेषस्यैव रूपत्वेन स्वरस्याऽरूपत्वात् । अत एव तिमिन्नस्वरकयोर्निभिन्नार्थयोर्हरिणीशब्दयोः सरूपाणामित्येकशेष इत्याशङ्क्याह । तचेत्यादि । अथ तदारूपाभावादिति । यद्यपि स्थानषष्ठ्यभावेन स्थानेऽन्तरतमपरिभाषा नोपतिष्ठते तथापि रूपातिदेशस्य फलं स्थान्यादेशभावपर्यवसायित्वेनोक्तपरिभाषाप्रवृत्तिरिमिप्रेत्येदम् । सञ्ज्ञाशब्दा-नामिति । इदमुणादिव्युत्पन्नानामित्यनेन पाक्षिकं । यथाऽन्यासमिति । ण्वुल्तृचौ अप्तृन्तृच् इति यथा न्यासे इत्यर्थ । नियमफलं चिन्त्यमिति । मातरौ पितराविः त्यादौ निरनुबन्धकत्वेन तृन्तृजन्तत्वाभावादेव दीर्घापत्तेरिति भावः । विशिष्टाभा-वस्येति । म्यामि तृतीयादिपरत्वेपि शस्यजादिविभक्तिपरत्वे ऽपि क्वचिद्विशेषणाभावेन क्वचिद्विशेष्याभावेन चादित्वविशिष्टतृतीयादिविभक्तिपरत्वाभावस्य । एतेनेति । उक्त नियमस्यैव निर्दुष्टत्वेनेत्यर्थः । तथा च तृज्वत् क्रोष्टुरित्यस्य तृज्वत्सर्वनामपरत्व-एवेति नियमपरत्वे सर्वनामस्थाने तृजन्तस्यापि प्रयोगापत्तिः । आवृत्त्या द्विविधनि-यमपरत्वे ऽपि क्रोष्टुपु इत्यादौ तृजन्तस्य प्रयोगापत्तिः । तृजन्त सर्वनामस्थान एवेति नियमे विभक्त्यन्तरे एव तृजन्तप्रयोगवारणात् । तत्र लक्षणवशेनेत्वप्रवृत्ता-वपि किर इत्यस्यानुकरणत्वाभावात् । धातोः कार्यमुच्यमानमिति परिभाषात् कि-रश्च पश्चम्यां इति निर्देशादित्याहि । इत एव निर्देशादिति । अनुकार्यानुकरणयोरभेद-विवक्षां त्वमाश्रित्याह इति भावः । न वलोप इति । लोप शाकल्यस्येत्यनेन । लोपान्यो-रिति लोपस्तु छान्दस प्रानिमित्तकत्वेन बहिरङ्गश्च । यद्यपि लोपः शाकति लोपस्य पाक्षिकत्वेनापि परिहारः सुलभस्तथा ऽपि पक्षेपि लोपाकरणेऽपपत्तितनमित्यदोषः । इत्युक्त्वा । उक्तोत्तरत्वादिति । इदमयुक्तम् । विवृतत्वसाम्येन कदाचिद्विवृतस्य ऌ-कारसाम्येन कदाचिदीषत्स्पृष्टस्येत्याद्यु क्तरीत्यैतद्दोषद्वयावारणात । न च धातॄणा-मित्यत्र रेफद्वयावटितत्वविवृतत्वरूपधर्मद्वयसाम्येन विवृत एव दीर्घो भविष्यतीति वाच्य-म् । तथा सति होतॢल्कार इत्यत्रापि ऌकारद्वयाघटितत्वविवृतरूपधर्मद्वयसाम्येन विवृतस्यैवापत्तावीषत्स्पृष्टस्य पक्षेप्यनापत्तेः । वस्तुतस्तु गम नित्यत्रेषत्स्पृष्टस्य शङ्कैव निरस्ता । तस्य पूर्वसवर्णत्वाभावात् । गमॄणामित्यत्र तु पक्षे ईषत्स्पृष्ट ऌकार इष्यत एव । नविरे पठति ॥ ननु क्रोष्टा कृत्वा तेन क्रोष्टा इत्यत्र ऋत्यकः इति प्रकृतिभावे

ऋकारस्य यणि रपरत्वे रोरीति लोपे ढ्लोप इति दीर्घे विशेषःस्यात् इति चेत् । न । यणो वहिरङ्गतया इको यणीत्येकवाक्यतापन्नोरणुपर इत्यस्यापि वहिरङ्गतया रेफस्यासिद्धत्वेन दीर्घाप्राप्तेः । यद्वा । ढसाहचर्येणानागमकरेफपरत एव दीर्घाङ्गीकारेणादोषात् । यत्तु आ च आ च ऋ आ तेन ऋरा इत्यत्र दीर्घोपपत्तिमाशङ्क्य यणोऽचः परेति स्थानिवत्त्वेन ऋकारपरत्वबुद्धौ लोपप्रयोजकरेफपरत्वाभावान्न दीर्घ इत्युक्तम् । तन्न । ढ्रेति सूत्रे पूर्वेणाण्ग्रहणस्य निश्चितत्वेन दीर्घप्राप्तेरेवाभावात् । पदान्तविधित्वेन स्थानिवद्भावस्य दुर्लभत्वाच्च । ढ्रदंमानंचिन्त्यमिति ॥ इदमसंगतम् । अग्निपुराणे इको यणीत्यस्य लाकृतिरित्युदाहरणदर्शनात् । अलोन्त्यस्येत्यतोऽल्ग्रहणमपकृष्य शब्दाधिकारं चाश्रित्योः स्थाने लकाराभिन्नोण् रलपर इत्यर्थाङ्गीकारेण लाकृतिरित्यग्निपुराणोक्तप्रामाण्येन मूलोक्तसाहचर्याश्रयणाद्वा नोरण् इति सूत्रस्थभाष्यविरोधः । महासंज्ञयानव्ययत्वादिति । यात्विदं स्वरादिनिपातमव्ययमिति सूत्रविषयकं कृन्मेजन्त इति सूत्रविषये तु अन्वर्थसंज्ञा नाङ्गीक्रियते। अत एव कुम्भकारेभ्य इत्यत्राव्ययसंज्ञापादककृन्मेजन्तसूत्रस्थभाष्यं संगच्छते इति । तन्न । अव्ययीभावविषये वचनप्रामाण्याछिङ्गाद्यन्वयेऽव्ययत्वाङ्गीकारेप्यत्र तथाङ्गीकारे मानाभावात् । कृन्मेजन्तसूत्रस्थभाष्यं त्वेकदेश्युक्तिः । आद्गुणस्तुनेति । तस्मिन्निति उत्तरपदपरकसहशब्दाभावेन सादेशो न स्यात् । इकारैकदेशस्य तदुत्तरनिमित्तकत्वाभावेन नाचःपरस्मिन्निति स्थानिवद्भावेनोत्तरपदत्वं प्रत्याशा । एतेनाद्गुणे विशिष्टस्य सादेशापत्त्या ऽकारन्त रूपमापद्येतेति मिश्रोक्तं परास्तम् । इत्यन्य इति । इदं चिन्त्यम् । असिद्धवत्सूत्रे भाष्ये ओः सुपीत्यत्राकारप्रश्लेषपरभुवोऽवुगितिवार्त्तिकस्थ अोरिति प्रयोगासङ्गतेः । संभवति चात्र पूर्वान्तत्वेनोकारस्य पदान्तत्वम् । तस्मात्सरोसुपीत्यादौ पञ्चमीसमासेन स्थानिवद्भावान्नोत्वप्राप्तिरिति पदान्तादङः परो रुर्नास्ति इति भाष्यविरोधो न । एवम् 'मदमनमयूरस्य घ्नं माल्यवतो गिरेः । सीताविरहसन्तप्तं रामं मुहुरमूमुहन्' ॥१॥ इत्याभियुक्तोक्त गिरा झारीति कर्तृगुणोक्तावपि बोध्यम् । त्वदुक्त्या तस्याप्यसङ्गत्यापत्तिः । अयचीति । असर्वनामस्थान इत्यत्र अ इति पृथक्पदं निषेधार्थकं स एवात्राकारो निर्दिष्टः । न त्वसर्वनामस्थानेऽयचीति पदच्छेदः । नञ्द्वयैयर्थ्यात् । असर्वनामस्थाने इति । प्रसज्यप्रतिषेध

इति वक्तुं युक्तम् । ननु सर्वनामस्थाने पूर्वं पदं नेत्येवास्तु किं यचीति विशेषणेनेति चेत् न । सुवागिति विशिष्टस्य सुबन्तत्वप्रयुक्तप्राप्तपदत्वस्यापि प्रत्ययलक्षणेन सर्वनामस्थानपरत्वेन निषेधापत्ते । पूर्वमिति । सर्वनामस्थानं यस्माद्विहितस्तदादीत्यर्थ । यस्मात्प्रत्ययविधिरित्यतस्तदनुवृत्ते । सुबन्तमिति । सुतिङन्तमित्यत सुबित्यनुवर्तते इति भाव । स्वमतेनाह । उत्तरपदत्वेचेति । अत्र यद्वक्तव्य तदन्यत्र वक्ष्यते । नन्वन्तर्भूताविभक्त्या मा भूत्पदत्व पूर्वान्तत्वेन तु दुर्वारमेवेत्यत आह । आतिदेशिकस्यपीति । स्पष्टमेवेति । प्रत्ययलक्षणेन प्राप्तपदत्वस्य तेन निषेधादिति भाव । प्रतिषेधाचेति । प्रतिषेधाद्धेत्यर्थ । पूर्वान्तत्वेन प्राप्तपदत्वस्य वारणायाह । तद्घटितस्येति उत्तरपदत्व इत्यत्रोत्तरेत्यावर्तते । एकमुत्तरपदपरमपर तु उत्तरपदघटितपर वाशब्दश्चार्थे इति भाव । केचित्तु वाशब्द पक्षान्तर बोधक । उत्तरपदघटितत्व चोत्तरपदाविषयकपदविषयकप्रतीत्यविषयत्वम । स इत्येतद्घटक एडित्यस्य पराविवद्भावेनोत्तरपदविषयत्वात्तदविषयकपदविषयकप्रतीत्यविषयत्व धटादिपदे तदविषयत्व से इति समुदायस्य तद्घटक एडित्यस्य चेति तयो. पदत्वेऽन्तर्वर्तिविभक्तौ प्रत्ययलक्षणं न भवतीत्यर्थ । एतेन दधिसेगिनि समुदायस्योत्तरपदघटितत्वेन समुदायोत्तरलुप्तसो प्रत्ययलक्षणाभावप्रसङ्गात्तद्घटितस्येत्यसगतमित्यपास्तमित्याहु । णितइति ॥ णिद्वत इत्यर्थ । वस्तुतस्तु सर्वनामस्थान इति सप्तम्यन्त, गोत इति पाचन्त, णित्पद णित्वप्रयुक्तकार्यपरम् । एव च गोशब्दस्य सर्वनामस्थाने परतो णित्वप्रयुक्त कार्यं भवतीत्येवार्थो युक्त । परत्वादिति । आद्गुत्वादिति वक्तुं युक्तम् । तपरकरणेनेति । परे तु त्वदुक्तरीत्या गोद्योशब्दातिरिक्तौकारान्ताभावेन तयोश्च णित्वस्येष्टत्वेनानाङ्गस्य विवक्षितत्वे थोर्णिरव पक्तव्यं स्यादिति लाघवाद् गकारविवक्षैव । चित्रगौ इत्यादौ तु विहितविशेषणेन, लक्षणप्रतिपदोक्तपरिभाषया वा न दोष । एव च 'गो पूर्वत्वाणित्वात्त्वे'त्यत्र णित्वात्वग्रहण न कार्यमित्यपरमनुकूलम् । ध्वनितं चेद तपरकरणं 'णित्त्वात्वयो स्थानिवत्त्वप्रतिषेध' इति वार्तिकप्रत्याख्यानपरभाष्येण । प्रकृतसूत्रस्थं भाष्यन्त्वेकदेश्युक्तिरित्याहु । तृतीयादिष्विति । अमादिष्विति शेष । सूत्र इति । अस्य वक्तव्येत्यनेनान्वय । 'द्यौश्चवृद्धिर्वक्तव्ये'त्यस्य 'गोतोणिदि'ति सूत्रे द्योग्रहण कर्तव्यमिति तात्पर्यम् । वार्तिक इति । औतोऽमशसोरिति सूत्रस्थे इति शेष । एतेनास्य वार्तिकस्य

ओतोमिति सूत्रे दर्शनाद् गोत इति सूत्रे इति शेखरोक्तिरसंगतेत्यपास्तम् । इदानीं-तनभाष्यपुस्तकेषु वार्तिकत्वेन नेदमुपलभ्यते तथापि वार्तिकसाजात्याद्वार्तिकत्वोक्तम् । ईट्शसानामिति । अजादिविभक्तिपराणां सुपराणां चेत्यर्थः ॥ इति श्रीमद्राघवेन्द्राचार्यविरचिते विषमार्ख्ये लघुशब्देन्दुशेखरव्याख्यानेऽजन्ताः पुंलिङ्गाः ॥

रमयेति । असन्तत्वेन मित्त्वाद्ध्रस्वः । लिङ्गविशिष्टपरिभाषयेति प्राग्ग्रन्थेऽभिहितत्वेन तद्विपरीतमाह । पूर्वान्तत्वेनेति । पञ्चम्येति आवन्तादिति सूत्रानुसारेण । अभत्वादिति । एवं च नैतदर्थं श्यां प्रतिषेध इति भावः । आप इति । संबुद्धौ चेति सप्तम्या षष्ठ्यन्तत्वं परिकल्प्यत इति भावः । समानकार्यत्वाभावेऽपवादत्वं नेति मतेनाह । शीभेति । अनेनेति । प्रक्षेपपक्ष इदम् । वस्तुतस्तु हल्ङ्यादिलोपापवादत्वेन पुनरुत्सर्गाप्रवृत्तौ एङ्ह्रस्वादिति लोप इत्याशय उचितः । नन्वेवं सति अचः परस्मिन्निति सूत्रे पूर्वस्याभावेन हेगौरीत्यादौ लोपप्राशङ्क्य एङ्ग्रहणसामर्थ्यादिति वर्णितम् । भवद्रीत्या तक्रकौण्डिन्यन्यायेन बाधे पुनरुत्सर्गाप्रवृत्तौ एङ्ह्रस्वादिति लोपस्यैवावश्यकत्वेन एङ्ग्रहणसामर्थ्यस्यासंगतत्वामिति चेत् । न । तस्य तक्रकौण्डिन्यन्यायानाश्रयणेन ङ्याब्ग्रहणेऽदीर्घ इति न्यासाश्रयणेन च प्रवृत्तत्वात् । संनिपातेति । आतिदेशिकसंनिपातानित्यत्वातस्य न संनिपातपरिभाषाप्रवर्तकत्वमिति भावः । परस्येति । तेन यस्यै इत्यस्य सिद्धिः । नस्याद्द्वति । चेन द्वयोरेककपाले विधेयत्वप्रतीतिरिति भावः । नाधीति । नत्र विधानैवयर्थ्यम् । एकवचने तत्साफल्यात् । आपइति । कार्यभेदेऽपि संनियोगशिष्टत्वमात्रेण चः समुच्चायकमिति भावः । नचैवमिति । तुल्यन्यायात्सर्वस्यै इत्यादावप्युकरोत्यैवाभिमतेति भावः । सिद्धान्तीति । आवन्तत्वस्य सुबन्तत्वेनापि सुत्रभत्वाच्चिन्त्यमेतत् । सर्वनामत्वमपि स्थानिवद्भावेन सुलभम् । लिङ्गविशिष्टेति । इदं यथोद्देशे । कार्यकाले तु मदुक्तरीतिरेव शरणम् । सकृद्गतेति । वृद्धावित्यादिपरसंनिपातपरिभाषयापि सुवारः सुद्रु । यत्तच्छब्दाभ्यामिति । प्रतीत्यैत्वं तस्य इत्यर्थ इत्यनेनान्वयः । हेतुत्वं च तृतीयार्थः । तत्त्वं च न विप्रतिपत्ति न्यायद्वारकम् । इत्यन्यत्रेति । अत्रायं संग्रहः ॥

दीक्षितं त्वज्जनं भाष्टं प्राक्रीयमतं तथा ।
विवेचयामि निष्कृष्य सात्रकैर्वार्तकैस्तथा ॥ १ ॥

तथा हि । तत्रेदं प्रक्रियं मतं सा पूर्वा उत्तरा यस्यास्तस्यै उत्तरपूर्वायै इत्येव ।

या पूर्वा सोत्तरा यस्येत्युक्तौ सर्वनामपूर्वपदस्यैव प्रवृत्तिप्रकारकज्ञानविशेष्यत्वस्य सर्वानुभवसिद्धतया तस्यैव गुणवाचकत्वेन पूर्वनिपातौचित्यात् । न विधाविति न्यायस्तु श्रोतृप्रतिपत्त्यर्थस्य न प्रतिबोधनाय तद्विपरीतार्थबोधकस्यान्याय्यत्वमूलको नात्र प्रवर्तते । लोकाना तद्विपरीतबोधाजननेरनुभवसिद्धत्वात् । यच्छब्दयोग प्राथम्यमित्यादिममस्तविषयकम् । सप्तमी विशेषणे इति शास्त्रेण तन्न्यायबाधात् । एतद्विरोधादेव च हितयोगे येनि वार्तिकस्थउद्देश्यविधेयभावेन बोधे समासानिष्टत्वप्रतिपादनपरोऽत्तग्रन्थोऽप्यपास्तः । हरिदीक्षितास्तु विशेषणविशेष्यभावो हि लोकाधीन । लोके च शुक्ती रजत यस्य शुक्तिरजतको देवदत्त इत्यादौ गुणपररजतपदसंनिधानेऽपि अधिष्ठानबोधकशुक्तिपदस्यैव विशेषणसमर्पकत्वानुभवात्पूर्वाशब्दस्याधिष्ठानबोधकस्यापि पूर्वनिपात । अत एव या पूर्वा सोत्तरा यस्योन्मुग्धस्य स पूर्वोत्तर इति उद्देश्यविधेयभावभावानुगतपूर्वनिपातो भाष्यकृतोदाहृत । न विधाविति न्यायस्तु उक्तरीत्या प्रवृत्त्युद्देशे विषये विधेये एव लक्षणेति वदन्ति । भट्टास्तु या पूर्वेत्यादिभाष्ये उद्देश्यविधेयभावानुगतपूर्वनिपातस्यापि करणादुद्देश्यपदेऽपि लक्षणा भाष्यकृत्सम्मता । अननुभवसिद्धं शुक्तिरजतको देवदत्त इत्यादि त्वप्रामाणिकमेव । अधिष्ठानबोधकस्य विशेष्यसमर्पकत्वमनुभवसिद्धमिति तु अपर्यवसमधिगम्य विधेय बोधके तु न लक्षणा । उक्तन्यायात् । एतदप्रवृत्तिबीजकथन तु स्वमौल्यैनैव । ईदृशे विषये विधेयबोधके एव लक्षणाया सार्वजनीनानुभवसिद्धत्वेन या पूर्वेत्यादि भाष्यसगत । उक्तभाष्यविरुद्धस्य प्रत्युत तदनुकूलस्योक्तन्यायस्य त्यागे बीजाभावाच्च । एव च या पूर्वा सोत्तरेत्यादिविग्रहे उद्देश्यविधेयभावानुगतपूर्वनिपात एवेति भाष्यानुसारिसरणिरिति वदन्ति । अन्नमानमिति । अन्तरायां पुरीति भाष्योदाहरणात्पू शब्दस्य प्रयोगे एवायं निषेध इति केचित् । अन्ये तु स्व रूपमिति शास्त्रात्पू पदस्य स्वरूपपरत्वे प्रत्यासत्त्याऽन्तरशब्दार्थकविशेष्यसमर्पके पू शब्देऽसतीत्यर्थः । एव च नगरीविशेष्यत्वे सर्वनामत्वमिष्टमेवेत्याह । अतएवाजय्यं स्गतमिति सूत्रे "भृगैरजय्यमि" त्यादौ सगतमिति विशेष्यमध्याहार्यमित्याभियुक्ता । प्रश्लेषादिति । येन नाप्राप्तिन्यायमाश्रित्येदम् । एतत्सौत्रुत्स्याद्यामाभीति । इदमेवभेत्वेपीति वक्ष्यमाण च चिन्त्यम् । तथाहि । नित्यत्वस्य एतद्विषये जरस्यापि तौल्यादिति । तस्मात्परत्वादेवे पश्चाज्जरसि लभ्ये लसगम्येति न्यायेन पुनरत्वामप्रवृत्तिरित्येव तत्त्वम् । प्रश्ले

षड्ति । याडामोः कृतयोरपि पश्चान्निशादीनां प्राप्तिः संभवत्येव । आमि छिद्धद्वयेव पश्चान्निशादिप्रवृत्तेः संनिपातपरिभाषाविरोधाभावादित्याशयः । यद्वा । शस्प्रभृति-ष्विति विषयसप्तमीति पूर्वमेव निशादीनां प्रवृत्तिरिति भावः । फलाभावेनेति । इदं चिन्त्यमिति शेषोघ्यसखीति सूत्रे निरूपितम् । वर्णग्रहणेनेति । वर्णग्रहणे तत्प्रवृत्तौ बहूपद्धवापत्तेः । ओदिति सूत्रस्थमाष्यस्य चैकदेश्युक्तित्वमित्यन्यत्र प्रपञ्चितम् । पद्धाङ्गेति । शब्दस्वरूपस्याप्यध्याहारेण पृथक् तदन्तविधिरिति भावः । लाक्षणि-कत्वेन समाश्रयेति । एवं च तन्नाप्येणाकारप्रश्लेषोऽपि सूच्यते इति भावः । वा-र्तिकस्येति । चिबायां जातश्चेत्र इत्यादौ दोषवारणायोभयोरप्यावश्यकत्वेन चि-न्त्यमेतत् । यत्तु निशे इत्याद्यर्थं तस्यावश्यकत्वाच्चिन्त्यमित्याहुस्तत्तुच्छम् । पद-न्तिति सूत्रस्य प्रयोगनियमार्थत्वाज्जरसपेक्षया याटः परत्वाच्च जरसर्थमपि तत् । अद्ध-खट्वायामिति । अर्द्ध नपुंसकमिति सूत्रभत्याख्यानपक्षे तु गोवाश्याये इत्यादिबोध्यम् । मानाभावादिति । इदं चिन्त्यम् । अतिखट्वायेत्यादावकरोत्येव याड्प्रवृत्तौ आ-कारप्रश्लेषवैयर्थ्यापत्तेरेव मानत्वात् । अतिखट्वायेत्यादौ संनिपातपरिभाषयापि याटो वारयितुमशक्यत्वादिति बोध्यम् । अत्र निष्कर्षस्तु आबन्तान्तमित्येव सर्वत्र वाक्या-र्थः । परम्परयापि कार्यमालोच्य स्थानिवत्त्वं प्रवर्तते एव । अतिखट्वेत्यादावुक्तैव गतिः । आ आबितिप्रश्लेषस्तु चित्र इत्याद्यर्थं इति सुधीभिराकलनीयम् । आहुरिति । अत्र पाठकाः । विभ्राट् विभ्राडिति दीप्त्यर्थफणादितद्भिन्नभ्राजिभ्यां साध्यम् तत्र फणादिदीप्त्यर्थक भ्राशिभ्राजिभ्यां सुसाधमिति सूत्रे भ्राजिग्रहणं व्यर्थम् । तस्मा-त्फणाद्रिभ्राशिरशान्तः । वाभ्राशेत्यत्र शान्तपाठात्तालव्यान्त इति तिङन्तशब्दरत्नग्रन्थस्तु चिन्त्य एवेत्याहुः । तच्चिन्त्यम् । भ्राशिति तालव्यान्तपाठस्य धातुसूत्रयोश्चिरन्तर-सार्वजनीनसंप्रदायसिद्धस्यापलापायोगात् । भ्राजिग्रहणं तु विभ्राजयतेर्णिजन्तात्क्वि-पि टिलोपे षत्वार्थः । यत्तु वृक्षं वृश्चतीति क्विबन्ताण्णिजन्तात्क्विपि वृक्षव् इति लघुसूत्रस्थकैयटप्रयोगमुपादाय टिलोपे धातुमात्रिकस्थान्यादेशभाव वृक्षन्व्रश्चः वृ-श्चनयोरेव । एकदेशविकृतन्यायस्तु नाद्धातिकविकार इति न षत्वमित्युक्तं विवर-णकृद्भिः । तच्चिन्त्यम् । अथवतो वृक्षवृश्वबृक्षवृश्चनयोः स्थान्यादेशभावस्य भ्राजिग्रहण-सार्थक्याद्ग्राहकस्य संभवेन षत्वमापत्तिस्तदवस्थत्वात् । अत एवाकृत्या वृक्षं चेति वाति वेति विग्रहप्रदर्शनं कैयटोपाध्यायैःकृतमिति सुधियो विभावयन्तु । चिन्त्यमि-

ति । इदं विन्यस्य । धातोरित्यस्यैकाचःइत्युत्तरार्थमानानुवृत्तस्य विशेष्यत्वेन तद-न्तविधेरसुलभत्वात् । पत्वाप्राप्तानिति । वाचादीनामनभिधानमिति भाव । धुड-भावइति । वर्णग्रहणे यदागमन्यायाप्रवृत्तिरिति भाव । तत्रेति । जस्त्वामित्यादि भाष्यकृत्प्रयोगनिर्वाहायोक्त,थज्ञापकस्य सम्भवेऽप्यमयादित्वकल्पनानौचित्यात् । अ-न्यथा पुमान् स्त्रियेति निर्देशस्यानुपद स्वनैव ज्ञापकत्वोक्तेरसङ्गतिरिति । तथा शास इव अनिदित् असिद्धवत्पूर्वपद्दादित्यादिषु सूत्रेषु भाष्यकृन्निर्देशज्ञापकत्वोक्तेरस-ङ्गति । कृत्वावनापत्तेश्चेति तु दृष्टापत्त्या ज्ञापनादाह । अचोऽश्रु इति तु ज्ञापकसि-द्धस्यासार्वत्रिकत्वात्सिद्धम् । अत एव स्तोश्रुनेत्यादौ विसर्गषत्वजश्त्वादीन्यवमेव । यत्तुतोऽस्मान्निर्देशादेकवर्णात्मके पदे पदान्तत्वप्रयुक्तकार्याणि न । विसर्गस्यायोग-वाहकत्वेनाश्रय विना तस्य प्रयोक्तुमनर्हत्वाच्च । स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वेन अजित्यादेत शादीनामनेनैवैनेकवर्णात्मके पदान्तत्वप्रयुक्तकार्याप्रवृत्तेर्युक्तिसिद्धत्वा-च्च । अनुकार्यस्वरूपभङ्गाभियेत्येतदपि स्थान्यर्थाभिधानसमर्थेति युक्तिमूलकमेव । सरुपुरित्यादौ तु विश्लेनापि स्थान्यर्थाभिधानाशुक्तस्तत्पादेशादे । अत एव त्रे सख्याया, ष्णान्तेति निर्देशोपपत्ति । तत्र नलोपे हि शून्यमेवावार्तिष्ठेतेत्युक्तन्यायेन तत्र नलोपाप्रवृत्तिरिति सेचतस परिभावयन्तु । विचार्यइति । हो ढ इति सूत्रे भाष्ये एकाच इत्युत्तरसूत्रे धातोरित्यनुवृत्तस्तत्त्वेन मध्यस्थेप्यस्मिन्ननुवृत्ते स्पष्ट-त्वेन विचार्य,इत्युक्तिश्चिन्त्यैव । क्विदाविति । ननु क्वित्वस्य प्रत्ययाप्रत्ययसाधार-ण्येनाव्यभिचारस्यैवाक्षेपनियामकत्वेन कथमत्र नाक्षेप । नन्वियइुवङ्स्थाने इकारा-व्यवहितोत्तरवर्त्तिङितप्रत्यय एवेति वाच्यम् । एव सति तदव्यवहितोत्तरवर्त्तिङित. प्रत्ययासाधारणतया प्रत्ययग्रहण इति परिभाषापरिस्थित्यैव निर्वाहे ङङ्गारे पकरणा-नौचित्यात् । न चोपात्तरूप ङित्व प्रत्ययप्रत्ययसाधारणमिति उपात्तरूपस्य प्रत्ययासाधारणनिमित्तकप्रवृत्तिकपरिभाषाया अप्रवृत्तिरित्याशय । । इयमपि धीचित्रावित्यादौ चित्रद्वादिङित इयङ्स्थानिन परत्वेन व्यभिचार एव । न चेद सकलशास्त्रस्थ तत्तत्स्थलीयेयङ्स्थानिन पर ङित्व तु प्रत्ययासाधा-रणमेवेति वाच्यम् । द्वन्द्वे धीत्यस्याप्रवृत्त्या अतिचित्रयोर्द्वन्द्वे चित्रमती इत्ये-तत्सिद्धेरेव फलत्वात् । न च लौकिकविग्रहवाक्ये विभक्त्या व्यवधानेन ङित्परत्वाभावेन नदीत्वाप्रवृत्तौ विग्रहाया द्वन्द्वे धीत्यस्याप्रवृत्तौ पश्चात्प्रवृत्तनदी-

त्वेन प्रथमप्रवृत्तकार्याप्रवृत्तिरिति वाच्यम् । दण्डिदत्ताविल्वप्यनुरोधेन प्रयोगसम-
वायिवित्वस्य तत्प्रवृत्तिप्रयोजकतया प्रकृते च नदीत्वेन बाधे वित्वस्याप्रयोगासम-
वायित्वेन द्वन्द्वे घीत्यस्य प्रथममप्यप्रवृत्तेः । न च हरिश्चाहश्चेति विग्रहे परिनिष्ठिते
रूपे यणादेशेन वित्वस्य प्रयोगसमवायित्वाभावात्तत्र द्वन्द्वे घीत्यस्याप्रवृत्तिरिति वा-
च्यम् । यणादेशेपि स्थानिवद्भावेन वित्वस्य सुलभत्वात् । तदन्तसंज्ञापक्षे विवस्य
पदत्ववदलभमत्वाभावात् । शेषग्रहणप्रत्याख्यानपक्षे उपसंजनिष्यमाणन्यायेन भावि-
नदीत्वमालोच्य पूर्वं वित्वाप्रवृत्तेश्च । न च तदन्तविध्यर्थं शेषग्रहणस्य नव्यैः
स्थापितत्वेन तत्पक्षे प्रथमतो वित्वप्रवृत्तिर्निर्बाधैव । पश्चादाकडारीयत्वादिति नदी-
त्वाप्रवृत्तिरिति वाच्यम् । अन्तरङ्गानपीतिन्यायेन समासलुकः पूर्वं घित्वाप्रवृत्तेः
पश्चाच्च नदीसंज्ञाविषयत्वेन न वित्वं न च ङित्परकत्वं निमित्तीकृत्य ङित्वे नदी-
संज्ञा तदभावे तु नेति मनोरमोक्तरीत्या विभाषाया व्यवस्थापने नदीत्वस्यापि तस्यैष्टत्वात् ।
द्वन्द्वे घीत्येतत्प्रवृत्तिफलं संगादिनमेव । पूर्वं विभाषा व्यवस्थापने तु न नदीत्व-
मित्युभयतः पाशेति वाच्या । चित्रे परतो मतिशब्दस्य नदीसंज्ञया द्वन्द्वे घीत्वस्याप्र-
वृत्तौ रामादीनां पूर्वनिपातापत्तेः । किंच कर्त्रीशब्दादाचारक्विबन्तात्संबुद्धौ सु-
लोपे चित्रङि परतो ङिति ह्रस्वश्चेति विकल्पनात्सिद्धिरिति फलम् । एतेन वामी-
त्येतदकरणलाघवेन वामि ह्रस्वश्चेति वक्तव्ये ङिति ह्रस्वश्चेत्युक्तिः सन्निपातपरि-
भाषाया अनित्यत्वज्ञापनायेति बृहच्छब्देन्दुशेखरोक्तमपास्तम् । ननु वामीत्येतत्साहचर्येण
ङित्प्रत्यय एवेति चेत् न । यामेऽपि प्रत्ययाप्रत्ययसाधारणत्वादितिचेद् । अत्रा-
हुः । इयङुवङ्स्थानिप्रत्ययेन ङिद्विशेषणात्तद्विशेषणाङ्गस्याक्षेप इत्याशय इति । नेय-
ङित्यादौ इयङाक्षिप्तस्याङ्गस्येयङ्विशेषणतैवोचिता । प्रकृते च ङिदाक्षिप्तस्याङ्गस्य
तुल्यन्यायान्ङिद्विशेषणात्वेऽपि घीत्वे न तद्विशेष्यत इति । असंभवेति । अति-
श्रियेत्याद्युदाहरणविषय इत्यर्थः । श्रियेत्यादौ तु संभवोऽस्त्येवेति भावः । एवं च
प्राचां मते अतिश्रिये इति भाष्योदाहरणासंगतिः । अङ्गाक्षेप इति युक्तिसिद्धत्वेन
तस्य नित्यस्त्रीत्वाभावात् । सूचितमिति । प्रवृत्तावित्यस्य नदीसंज्ञाप्रवृत्तिकाल इ-
त्यर्थः । एवं च यदा नदीसंज्ञा कार्या तदा स्त्रीवाचकादेव न पुंवाचकादित्यर्थेना-
न्यत्र पुंवचनत्वेऽपि प्रवृत्तिकाले पुंवाचकत्वाभावस्य विवक्षितत्वसूचनादिति भावः ।
इति वक्तव्यमित्यस्य ङिति ह्रस्वश्चेत्यपहायेत्याशयः । नदीसंज्ञा भवत इत्य-

स्वरस्वारम्येन-स्वानर्थ्येण विधायकत्वावगते । अनेन च वार्तिकेन कटप्रुवे ब्राह्मण्यै इत्यादावपि नदीसंज्ञा प्राप्नोत्येव । प्रवृत्तौ पुंवाचकत्वाभावात् । प्रथमलिङ्गग्रहणं चेत्येनदप्रवृत्त्यन्वाख्यायकत्वं तु श्रियै ब्राह्मणायेत्युदाहरणविषयएव । अनिश्रियै इत्याद्युल्लेखस्तु यथाश्रुतसूत्रसत्त्वे ङिदाक्षिप्तस्याङ्गस्य स्त्रीलाभावान्नदीत्वाभावेन सिध्यत कथमिदानीं सिद्धिरिति शङ्कानिरासाय । यड्यक्यवलोप इति वार्तिकस्य स्वरितेति प्रयोजनदानवद् दृष्टान्तार्थं वेति भाव । वाक्यद्वयेपीति । ह्रस्वौचेत्यादिनि । वार्तिके भवन इत्युक्तत्वादिति भाव । यत्तु कौमुद्या वा नदीसंज्ञौ स्त इत्यर्थो दर्शितस्तत्तुच्छम् । नित्यस्त्रीलिङ्गावित्युक्त्या निषेधविकल्पस्यावश्यकत्वेन वा नदीसंज्ञौ स्त इत्यस्य फलितविधिविकल्पाशयकत्वस्यैव निर्णयेन स्वाभिमतेऽर्थे तद्रूपष्टम्भकरणाश्रयणौचित्यात् । ह्रस्वयोर्ग्रहणमिति पक्षोपपादने इति । इत्थं हि तदुपपत्तिः । यू इति इत्वोत्वावच्छिन्नयोर्ग्रहणम् । न चैवं बहुशकटिरित्यादौ कर्थापत्तिः । सूत्रेयाख्यौ, नेयडुवङ्स्थानौ, वाभी, त्येनद्युत्तर ङितीति योगे नेयडुवङ्स्थानावस्त्री, वा, नदीत्यनुवृत्त्या निषेधविकल्प स्वीकृत्याग्रिमे ह्रस्वागिति न्यासे इयडुवङ्स्थानौ वेति निःर्थे ङिति नदीत्यनुवर्त्य ङित्येव यू ह्रस्वौ नदीत्येव नियमेनादोपादिति पाठका । एव शकट्यादिशब्देषु नदीत्वस्य ङित्येवेति नियमेन वारणेपि इत्वादिपूभयलिङ्गेषु नदीत्वानापत्तिः । अतस्त्र्याख्यावित्यस्य नित्यस्त्रीत्वमजानत एकदेशिन इत्यवश्य वक्तव्यमिति भाव । वस्तुतस्तु शकट्यादीना ङिति नदीविकल्पानापत्त्या नियामकत्वस्याग्रे दूष्यमाणत्वेन तद्भाष्यस्य पूर्वपक्ष्युक्तित्वस्य सर्वैकवाक्यत्वेपि शेषो घीति सूत्रे शेषग्रहणसत्त्वा यथा न्यासएव बहुशकटिरित्यादौ निराकृत्या वानेन दोषाभावप्रतिपादनावसरेपि भाष्ये निषेधविकल्पत्वकथनेन तद्भाष्यस्यैकदेश्युक्तित्वे मानाभावेन त्वदुक्ताशयासङ्गतेः । तस्मान्ङितीति सूत्रेऽङ्गाक्षिपस्य युक्तिसिद्धत्वेन प्राधान्यात्तस्यैव स्त्र्याख्यावित्यनेन सम्बन्धात्तस्य नित्यस्त्रीत्वार्थकत्वे ऽनिश्रियै इति भाष्योदाहरणासङ्गत्यापत्त्या इयङादेशे तदसम्बन्धेन निषेधविकल्पमात्रबोधकत्वेपि तदसङ्गत्यापत्त्या नित्यस्त्रीत्वार्थकत्वमजानत एकदेशिन इत्याशय । भाष्यादिति । ङ्यैस्य विज्ञानीयादिति भाष्येण प्रथमलिङ्गग्रहण चेत्यस्याप्रवृत्तौ अतिश्रियै ब्राह्मण्यै इति भाष्योदाहरणासङ्गतेरिति भाव । नदीत्वप्रयुक्तमिति । नित्यनदीत्वप्रयुक्तमित्यर्थं । यथेति । एतस्य दूरस्थितेन

एवामित्यनेनान्वयः । सादृश्यं च त्रिलिङ्गगतत्वेन । तत्फलं तु नित्यस्त्रीत्वनिवेशे दोषाभावसूचनम् । यद्वा नन्वित्यस्यैवमित्यनेनान्वयः । तस्य च नित्यस्त्रीत्वानिवेश इत्यर्थः । एवं च नित्यस्त्रीत्वानिवेशे खरकुट्यै इत्यादौ भाष्यसंमतत्रिलिङ्गत्वस्वीकृते अनियतलिङ्गत्वेन नदीत्वापत्तिरिति वाक्यार्थः । न चैवं चञ्चा ब्राह्मणीत्यत्र नत्वाप्रवृत्तिरित्यत आह । चञ्चाइति इति भट्टाः । पाठकास्तु चञ्चान् ब्राह्मणान् पश्येत्यारभ्य पुंस्त्वे वाच्ये नत्वमित्यर्थादित्यन्तस्य इत्यर्थान्नत्वमिति कृत्वान्वयस्य एवमित्यादिनान्वयं कृत्वा इति न च वाच्यमित्यन्वयः कर्तव्य इत्याहुः । तद्विरुद्धेति । ननु तच्छब्देन प्रकृतिलिङ्गं परामृश्यते तत्कार्यं वा । नाद्यः । स्वाश्रयपुंस्त्वस्य प्रकृतिलिङ्गाविरुद्धस्य वक्ष्यमाणत्वात् । नान्त्यः । तत्प्रयुक्तकार्यस्यैवाबाधातिदेशाप्रवृत्तेः । न च टाबादिरेव तत्फलम् । तावतापि स्वाश्रयनत्वस्य तदविरुद्धत्वादिति चिन्त्यमेतत् । ननूक्तं हि प्रकारद्वयमतिदेशसत्त्वे एव तत्प्रत्याख्याने तु कथमित्याह । युक्तवद्भावादिति । ननु च पदार्थमात्रे शास्त्रीयलिङ्गत्रयस्यासंभवादत आह । यद्यपीति । तत्सत्तानुमानादिति । ननु गौर्यै पदार्थायेति विशेषदर्शनेन कुतो न पुंस्त्वानुमानं तथा चाडागमापत्तिरिति चेत् । न । भावानवबोधात् । अनुमानप्रकारस्तु खरकुटीशब्दो वस्तुतः पुंस्त्वविशिष्टार्थप्रतिपादकः । प्रवृत्तिनिमित्तसमानाधिकरणपुंस्त्वसमानाधिकरणत्वाभिन्नप्रवृत्तिनिमित्तवत्समानाधिकरणत्वात् । नीलो घट इत्यादौ घटपदसमानाधिकरणनीलपदवत् इति । न च पूर्वोक्तो दोषो नोद्धृतः । द्वितीयप्रवृत्तिनिमित्ते व्यतिरेकित्वविशेषणदानात् । न चैवमपि गौर्यै प्रकाण्डायेत्यादौ नदीत्वानापत्तिः । उक्तप्रवृत्तिनिमित्तवाच्यतादात्म्यसंसर्गावच्छिन्नविशेष्यतानिरूपितप्रकारताश्रयत्वस्य हेतुत्वात् । न चैवं हरिणा देवतयेत्यादौ देवताया अपि विशेष्यत्वादाक्रियामिति नात्वनिषेधापत्तिः । सामान्यविशेष्यभावे विशेष्यवाचकस्यैव विशेष्यत्वात् । वस्तुतस्तु स्वस्वप्रवृत्तिनिमित्तानुयोगितावच्छेदकप्रवृत्तिनिमित्तवत्समानाधिकरणं हेतुः । न च गौरीत्वात्र इति वाच्यम् । तस्य गौरीत्वानुयोगिनाव्यभिचारितत्वात् । न चैवमपि पदार्थादिशब्दे गौर्यादिप्रतिपादनकाले लिङ्गान्तरोपसर्जनेन नित्यस्त्रीत्वव्याहतिः (१) यस्य नदीसंज्ञा कर्तव्या तज्जन्यस्वार्थविशेष्यकरणस्वप्रवृत्तिनिमित्तकत्वस्य स्वचाख्यपदेन विवक्षितत्वादिति दिक् । इत्याहुरिति । अत्रेदं वक्तव्यम् । अङ्गाक्षेपस्तावदप्रामाणि-

क । आक्षेपेऽपि इयङादेशांशे एव तस्यान्वयः । तथा च 'ह्रस्वेयुवङ्स्थानप्रवृत्तौ च स्त्रीवचन' इति वार्तिकस्यैगाभावादियङादेशांशे नित्यस्त्रीत्वे बाधकाभावः । अतिश्रियै ब्राह्मण्यै इत्यादावर्थान्तरसंक्रमप्राक्कालीननित्यस्त्रीत्वस्य ग्रहणेन भाष्यस्य सामञ्जस्यात् । न चात्र आहेति वार्तिके प्रवृत्तौ स्त्रीवचनाविति निश्चय पठ्यते । अपि गत्वा प्रथमलिङ्गग्रहण चोदितमित्यस्योपलक्षणत्वेन तत्प्रत्याख्यानरीतीनां तद्द्वेष्यं विजानीयादित्युच्यते । एवं चातिश्रिशब्दघटकश्रीशब्दस्य कथं स्त्रीत्वविशिष्टार्थप्रातिपादकत्वम् । न चावयवस्त्रीविषयत्वात्सिद्धमित्युक्तयुक्त्या नित्यस्त्रीत्वार्थप्रतिपादकत्वं किमिद प्राचीनरीत्या उत नव्यरीत्या । नाद्य । प्राचां मते प्रधानेन स्त्रीत्वनिवेशेन स्त्रीत्वनिवेशो न उक्तन्यायात् । नान्त्य । श्रियै ब्राह्मण्यै इत्यादौ सर्वथा प्रथमलिङ्गग्रहण चोदितमित्यस्योपलक्षणत्वेन तत्प्रत्याख्यानरीतीनां सर्वासामप्यनाश्रयणसूचनात् । एतेन नित्यस्त्रीत्व यथोद्देशेन सूपपादमिति अपास्तम् । न चैव श्रियै इत्यादाना नित्यस्त्रीत्वमव्याहतम् । लिङ्गान्तरापकारकबोधजनकत्वात् । नन्वेमपि अतिश्रियै ब्राह्मणायेत्यत्र श्रीशब्दस्य लिङ्गान्तरावाचकत्वेनातिप्रसङ्गो दुर्वार इति चेत् । न । घटकतयापि लिङ्गान्तरावाचकत्वस्य विवक्षितत्वात् । नन्वेवं सति श्रीशब्दस्य घटकतया अव्यतिक्रान्तबोधकत्वेन तस्य च लिङ्गान्तरसमानाधिकरणबोधकत्वेन नित्यस्त्रीत्वार्थकत्वविशिष्टप्रातिपदिकत्वाभाव इति चेत् । न । स्त्रीवचनान्वेसेन व्यावर्त्या लिङ्गान्तरांशे घटकतयापीति निवेशेऽपि सूत्रोपात्तनित्यस्त्रीत्वांशे तदनिवेशात् । न च लिङ्गान्तरासमानाधिकरणत्वेन च नित्यस्त्रीत्वार्थकत्वविशिष्टप्रातिपदिकत्वाभाव इति वाच्यम् । स्त्रीवचनान्वेत्येव व्यावर्त्य लिङ्गान्तरांशे घटकतयापीति निवेशेऽपि सूत्रोपात्तनित्यस्त्रीत्वांशे तदनिवेशात् । न च लिङ्गान्तरासमानाधिकरणप्रवृत्तिनिमित्तवद्बोधकत्वे विशेष्यतया, यथाकथ चिद्वा । नाद्य । अतिश्रियै इत्यादौ प्रकृत्युत्तरं तदभावात् । नान्त्य । अवयवस्त्रीविषयत्वात्सिद्धमिति न्यायाङ्गीकारापत्त्या प्रथमलिङ्गग्रहणं चोदित तदिह द्वेष्यं विजानीयादिति भाष्यविरोधात् । अत एव शेखरे एतच्च प्रवृत्तौ स्त्रीवचनाविवेति सूचितमित्युक्तम् । किमर्थं पुनरिदमुच्यते इत्युक्त्वा प्रथमलिङ्गग्रहणं चोदितं तद् द्वेष्य विजानीयादित्युक्त्या प्रथमलिङ्गग्रहणं चेत्येतदनुवृत्तितात्पर्यकमुक्तवार्तिकमित्यर्थस्य लाभात् । अन्यथा त्वदुक्त्या प्रथमलिङ्गग्रहणं चेत्यस्यास्य च उभयोरावश्यकत्वे

कथनीयं स्यादिति चेद् । अत्र ब्रूमः तद् द्वैप्यं विजानीयादित्यस्य श्रियै ब्राह्मणा-येत्युदाहरणविषयत्वात्सामान्यप्रवृत्तभाष्यस्य सति प्रतिबन्धके विशेषविषयत्वात् । बाधकानि च वक्ष्यामः । किं च शकट्यै ब्राह्मणायेति भाष्यविरोधः । तथा हि । किमत्र क्यजन्तात्क्विबुत क्विन्तात्क्विबाहोस्वित्कनो लुप् । नाद्यद्वितीयौ । दीर्घत्वापत्तेः । न तृतीयः । स्वमते यथाकथं चित्स्त्रीत्वनिवेशेन श्रियै ब्राह्मणा-येत्यादाविव विकल्पापत्तेर्दुर्वारत्वात् । यत्त्वत्र पाठकेनोक्तम् 'अतिशकट्यै ब्राह्म-ण्यै इत्यत्र वृत्तेर्ब्राह्मणीमात्रविषयकायाः स्त्रीत्वान्नदीत्वं तदवयवस्यापि शकटिशब्दस्य नदीत्वसूचनाय शकट्यै ब्राह्मण्यै इति, तथातिशकट्ये ब्राह्मणायेत्यत्र वृत्तेर्ब्राह्मणवि-शेषिकायाः पुँस्त्वान्नदीत्वाभावेऽवयवस्य सत्यपि स्त्रीत्वे नदीत्वाभावसूचनाय शकट-ये इत्युक्तम्' इति । तत्तुच्छम् । अवयवशकटिशब्दस्य नदीत्वतदभावसूचने पर्या-प्त्या उत स्वरूपसंबन्धेन । नाद्यः । असंभवित्वात् । नान्त्यः । फलाभावात् । वि-शिष्टस्य नदीसंज्ञातदभावान्यतरोक्ते ऽवयवेऽतदन्यतरस्य सर्वैरुक्तत्वात् सूचनेऽस्य निस्सारत्वात् । किञ्चाङ्गस्यैव नदीसंज्ञायां घटकस्य शकटिशब्दस्य वित्वस्याप्रति-बद्धप्रवृत्तिकतयाऽतिशकट्यै इत्यादौ घेर्ङितीति गुणापत्तिः । किञ्चातिश्रियै इत्या-दौ विशिष्टस्य नित्यस्त्रीत्वाभावेऽपि नेयङिति निषेधाप्रवृत्तौ चरितार्थस्य नदीत्वस्य श्रियै इत्यत्र 'निषेधाश्चेति' न्यायेन नेयङिति निषेधापत्तिः । ननु शेषपदेन स्वरू-पेण नदीशून्यप्रदेशस्य विवक्षितत्वाद्याश्चो वार्थे निषेधस्य प्रविष्टत्वेन 'निषेधाश्चेति' न्यायानवतारादिति चेन् । न । हरेमनये इत्यादौ दोषप्रसङ्गात् । 'स्वरितसूति' इति सूत्रे स्वरतेरुदात्तत्वे एव 'निषेधाश्चे'ति संचारेण भाष्ये सलक्षणद्वत्वबाधकत्वाधा-दनेन विधिमुखेन प्रवृत्तौ तदसंचारबोधकत्वाच्च । यत्तु पाठकेनोक्तं 'वाक्यभेदेन निषेधविकल्पकत्वमपीति' तत्तुच्छम् । भाष्यादावदर्शनात् । मानाभावाद्गौरवापत्तेश्च । किञ्च प्रथमलिङ्गग्रहणं चेत्यस्य फलदर्शनावसरे लुप्स्वरकुट्यै ब्राह्मणायेति भाष्ये उक्तम् । स्त्रीत्वविशिष्टमेव य आह सः स्त्र्याख्यः । न चायं तथा । स्त्रीत्वेन रूपेण वस्तुतः पुँस्त्वविशिष्टस्याभिधानादित्यर्थकः स्वाश्रयस्य पुँस्त्वस्यानिवर्तनाद्यायं स्त्रियं स्त्रियामेव वर्तत इत्यादि कैयटेनोक्तम् । भवद्रीत्या तस्माच्छसो नः पुंसि, त्यादौ कृत्स्नस्य निरूपितत्वसंबन्धेन किञ्चिल्लिङ्गावशिष्टस्य शक्तावन्वये स्वनिरूपित-शक्तिसंबन्धेनेतरत्रान्वयं वा शक्तिनिरूपकत्वस्य स्वनिरूपकतावच्छेदकालिङ्गेपि ल-

भस्य सार्वजनीनानुभवसिद्धस्य च सामेनोक्तार्थकरणानौचित्याद् कभाष्यकैयटासङ्गति । मन्मते तु श्रिये ब्राह्मणायेत्यादौ लुपि विकल्पाभाव "फल' नित्यस्त्रीत्वस्य' ङिति ह्रस्वश्चेत्यत्रापि सम्बन्धात् । प्रथमालिङ्गग्रहण चेयस्य तदविषयत्वाच्च । किञ्च सत्यभिधाने इष्टापत्तिरिति शेखर । तत्फल तु श्रिये ब्राह्मणयेत्यादिना विवरणेन, यूस्त्र्याख्याविति सूत्रग्रन्थेन विरुद्ध । किञ्च निषेधविकल्पकत्वप्रतिपादकग्रन्थेति सूत्रग्रन्थभाष्यविरोधश्च । सूत्रैकदेशयुक्तित्वकल्पन त्वप्रामाणिकम् किञ्च ङिति ह्रस्वश्चेति सूत्रे स्त्र्याख्याविति विशिष्टानुवृत्तिप्रतिपादनपदानुवृत्तिपरभाष्यस्वारस्येन ङिति ह्रस्वश्चेत्यस्यापि नित्यस्त्रीत्वविषयकत्वमेव लभ्यते । वस्तुतस्तु ङिति ह्रस्वश्चेति सूत्रे ह्रस्वदीर्घयोरश्चयोरपि स्त्र्याख्यपदानुवृत्तिपरभाष्यस्वारस्यान्नित्यस्त्रीत्वार्थकानामेवोदाहरणदानाच्च । ङितीति सूत्रे शब्दद्वयमाधारणेनापि नित्यस्त्रीविषयमेव । अत एव यूस्त्र्याख्याविति सूत्रे भाष्ये यू इति ह्रस्वयोर्ग्रहणमिति पक्षोपपादनावसरे शेषान्नीति सूत्रे शेषग्रहणमकृत्वा विभाषाया बाधनादोपाद्ध्रस्वयोर्ग्रहणमिति भाष्ये उक्त ह्रस्वांशे स्त्र्याख्यानित्यस्यासंबन्धे तु स्त्रीवाचकपतिशब्द पति समास एवेति नियमेन घित्वाप्रवृत्तौ नित्यनदीत्वप्राप्त्या तदसंगति- स्पष्टैव । "किञ्चाङ्गाक्षेपेऽनिश्रिये इत्यादौ विशिष्टस्य स्त्रीवाचकत्वाभावादेव नदीत्वाप्रवृत्तो तदुदाहरणपरभाष्यासङ्गति स्पष्टैव । ननु अनयस्त्रीविषयत्वासिद्धमिति चोदियङुवङ्प्रतिषेधे यणुस्थानयोरपि य्वो प्रतिषेधे प्रसज्येत । एव चास्रै ब्राह्मण्यै इति भाष्यासगति । त्वन्मतेऽङ्गानाक्षेपेण ङिति ह्रस्वश्चेति विकल्प आपादयितु शक्यो न तु निषेध इति चेत् । न । तत्राप्यस्य युक्तयसहत्वेन चिन्त्यताया कैयटेनैवोक्ते । तथा हि । आध्यायतीति विग्रहो वा ध्या इपद् ध्यान धीर्यस्येति वा । नाय । नित्यस्त्रीत्वाभावेन नदीत्वाप्राप्ते । नान्त्य । नद्यृतश्चेति कबापत्ते । न च ऋदन्तसाहचर्येण समासात्पूर्वावस्थायामुत्तरपदस्य नदीत्वे एव कप प्रवृत्तिरिति विवरणोक्त युक्तम् १ । प्रियतिसृ इत्यादौ समासोत्तरमपि ऋदन्तस्य सत्त्वात् । न च तत्र कपोऽनिष्टत्वम् । तावतापि साहचर्यासंभवात् । त्वदुक्तसाहचर्याश्रयो नद्युत्तरपदादित्यर्थो निष्फल एव स्यात् । प्रियचतसृक इत्यादौ समासोत्तरमपि ऋदन्तस्य सत्त्वाच्च । तत्र तु मानाभावेन कपा प्रवृत्तिकल्पनानौचित्यात् । कृशब्दस्य दीर्घान्तस्य पदान्तरेण बहुव्रीहौ नपुंसकह्रस्वत्वे समासोत्तरमपि ऋद-

न्तस्य सत्त्वेन साहचर्याश्रयणायोगाच्चेति बहुतरमुक्तं विचार्य भाष्यकैयटाद्यारूढ-मनुनोक्तं मामकमिति सूक्ष्मधियो विभावयन्तु । ष्योर्ह्रस्वाविति । सावर्ण्ये षष्ठ्यर्थः। बाधादिति । नदीसंज्ञकेष्वेवाभ्यां बाधः कुतो न विनिगमनाविरहादित्यत आह । नदीग्रहणानुवृत्तेश्चेति । ननु चित्रो भार्या यस्येति बहुव्रीहौ स्त्रियाः पुंवदिति पुंवद्भावे तत्तत्तिसृभावानापत्तेराह । तृतीयान्तेनेति । भार्याभरणीय इति । भार्याशब्दस्य संज्ञाशब्दत्वे क्रियावाचित्वाभावात् । कर्तृकरणे इति तृतीयासमासो न प्राप्नोतीत्याशङ्कापरिहाराय भरणीयमित्युक्तमिति पाठकाः । तन्न । संज्ञाशब्दस्य नित्यस्त्रीलिङ्गत्वेन तत्तच्छङ्काया असंभावितत्वात् । तस्माद्दुर्बोधमिति कथनमनर्थं । यत्तु पाठकेनोक्तं मृजोऽसञ्ज्ञायामिति कयपा भाव्यम् चिन्त्यमिति तन्न 'मृजोऽसंज्ञायामिति सूत्रं तदनुबन्धकपरिभाषया भौवादिकस्य मृजोसंज्ञायामित्यत्रग्रहणेन जाहोत्यादिकात् इत्यनुबन्धकाद्ण्यतारूपसिद्धेः । आचिर । अलोन्त्यपरिभाषयैवसिद्धेरिति । एतदारभ्येति दिगित्यन्तस्यायं भावः । तिसृचतसृ इत्यनयोरनुवृत्तौ अचीति सप्तमीनिर्देशेन तस्य षष्ठ्यन्तत्वकल्पनया सिद्धे ऋत इति व्यर्थमिति शङ्काग्रन्थार्थः । यदि ऋत इति नोच्येत तदा कस्य रेफ इत्याकाङ्क्षायां पूर्वत्र कृत्स्नतया कृत्स्नस्य त्रिचतुरोरित्यस्यैवानुवृत्तौ रादेशस्तिसृचतस्रोरेवबाधकः स्यादिति समाधानग्रन्थार्थः । त्रिचतुरोरित्यस्यैव कार्यतया कृत्स्नस्य ऋत इत्यनेन संबन्धेन निर्वाहे तिसृचतसृ इत्यस्यानुवृत्तिः । स्थानिवद्भावात्वेपणमृ(?)कत्वाभावान्तरीयेन तिसृचतसृ इत्यस्यानुवृत्त्युक्तिः । विप्रतिषेधासम्बन्धादाह ॥ अत्रेति ॥ असमत्रमेव व्यनक्ति । एतेनेति । नुडन्तरङ्ग इति । आमिति शब्दस्वरूपस्य श्रोत्रेन्द्रियेणैव सुग्रहत्वात् । स्त्रीत्वविभक्ति त्रिचतुरादपेक्षत्वेन ह्रस्वाङ्गानपेक्षनुडपेक्षया बहिरङ्गत्वं तिसृचतस्रोरिति भावः । विनिगमनाविरहेण सञ्ज्ञार्थकृत बहिरङ्गत्वानाश्रयणे गमकमिदमित्याह । अर्थसञ्ज्ञाकृतेति । सञ्ज्ञार्थेति । पूर्वनिपातस्यानित्यत्वादित्यनिर्देशः यत्तु पाठकेनोक्तम् 'अन्तरङ्गत्वादायादेशेऽपि पश्चात्तिसृभावे लक्ष्येलक्षणस्येति न्यायेन पुनस्त्रयादेशाप्रवृत्तौ निषेधस्य साफल्याज्ज्ञापकत्वमनुपपन्नमिति' । तन्न । नतिसृचतसृइत्यन्तरङ्गे निषेधे कर्तव्ये ऽर्थसञ्ज्ञापेक्षस्य बहिरङ्गस्य तिस्रादेशस्यासिद्धत्वेन तिसृग्रहणवैयर्थ्यापत्त्या तत्सामर्थ्येन सामान्यतोऽर्थकृतबहिरङ्गत्वानाश्रयणबोधनमित्याशयात् । न चान्तरङ्गत्वादायादेशे इत्यपवादानुप्रयोग इति वाच्यम् । अस्य अन्यस्य परत्वात्तिस्रादेशे, सकृद्गतिन्यायेन पुन-

ग्रादेशप्रवृत्तिरिति ।'भाष्यविरोधस्य सूपपादाद् दूषणान्तरस्य सुवचनार्थत्वात् । न चत्रापीत्यादौ अपूर्वान्नित्यस्य प्रतिपदोक्तत्वेन प्रथमत प्रवृत्तिदर्शनात्प्रकृतेपि श्रामिति विशिष्य प्रत्ययविशेषनिमित्तकत्वेनास्य प्रतिपदोक्तत्वादिति चेत् । न । तिसृविधावपि स्त्रियामित्युपादानेनार्थविशेषविशिष्टप्रकृत्युपादानेन प्रतिपदोक्तत्वस्योभयत्र तौल्यात् । अपरे तु त्रयादेशस्य विभक्तिविशेषापेक्षत्वाद्विभक्तिसामान्यापेक्षस्य तिसृभावमपेक्ष्य नास्ति अन्तरङ्गभाव इति माहुः । तन्मत दूषयति । वस्तुत इति । नतु रुदादिभ्य इत्यादौ रुदादिभ्य इति प्रकृतिविशेषापेक्षाभ्यामडीडभ्यां धातुमात्रापेक्षस्य यामुटोऽन्तरङ्गत्वमुच्यते । एव च रुदादिभ्य स्वरूपेणैवोपादान न विशेषधर्मेणेति चेत् । न । सार्वधातुके इत्युक्तया प्रकृते धातुत्वस्यावश्यकतया धातुत्वज्ञानमपि विशेषशास्त्रप्रवृत्तावपेक्षितमिति सामान्यशास्त्रप्रवृत्तौपायिकधातुत्वानुसन्धान, तत्रिव्न धर्मानुसन्धान। चेति यामुटोन्तरङ्गत्वेपि प्रकृते सार्वधातुकत्वव्याप्यसामान्यधर्मापेक्षस्य विशेषधर्मस्यानुपपादनेन वैषम्यमित्याशयात् । यत्तु वर्णो वर्णेनेति सूत्रे कर्मधारय बहुव्रीह्योरन्तरङ्गबहिरङ्गभाव विचारयता भाष्यकृतैवार्थकृतबहिरङ्गत्वस्याश्रयणात् । अयुक्तमेतदिति पाठकेनोक्त तदपि मौढ्यात् । प्रत्यङ्गवर्ती लोक इत्यादिना । अत परस्मिन्निति सूत्रस्थभाष्योपपादितदिशोपस्थितिक्रमन्तरङ्गबहिरङ्गभावाश्रयणेन तद्भाष्यप्रवृत्ते । अत एव स्वार्थद्रव्यादिप्रयुक्तकार्याणामन्तरङ्गबहिरङ्गभावोऽचः परस्मिन्निति सूत्रस्थ भाष्य च सगच्छते । रुदामिति । स्वप्रवृत्तिनिमित्तपूर्तत्रित्वत्वचतुरत्वत्वलक्षेयर्थ । तेन 'प्रियत्रिरित्यादौ प्रियास्त्रयो यस्यामित्यर्थकेऽगहत्स्वार्थावृत्तिके पक्षे त्रिशब्दस्य विशिष्टार्थबोधकत्व त्रिशब्दस्याक्षतमेवेति तिस्त्रादापत्तिरिति परास्तम् । नडेरामिति । सन्निपातपरिभाषयापि ग्रादेशो वारयितु शक्य इत्यपि बोध्यम् । यणादेशे तु न सन्निपातानि प्रवर्तते इति तु मूल एव स्फुटीकृतम् । ननु प्रियास्त्रस इत्यालौकिकविग्रहवाक्ये कुतो न तिस्रादिस्तया चालौकिकप्रक्रियावाक्यस्य ऋदन्तप्रकृतिकसुबन्तोत्तरपदत्वादलौकिके कप्प्रसज्यादित्याशङ्क्याह । प्रियास्त्रस इति । अलौकिकवाक्य इति ॥ अपरिनिष्ठितत्वच्च तत्र तु नातिदेशमहत्संगतिर्दृष्ट शक्यमिति भाव ॥ एतेन 'बहुकर्तृकौ इत्यादौ कबापादन' परास्तम् । सन्निपातपरिभाषयापि कप परिहर इत्यपि बोध्यम् । नुम परत्वादिति ॥ इदमुपलक्षण श्री आम परत्वस्या-

षि। तिस्रादेशःपुनरामभावस्तु सकृद्गतिन्यायादिति बोध्यम् । सामान्यापेक्षत्वे प्रमाणमाह । प्रत्यय इति । एवं च रादेशस्यापवादत्वेपि न दोषभावः । नयास-योरिति । पररूपस्यापि क्ङिति चेति सूत्रस्थभाष्यप्रतिपादिते औयत इत्यादि लक्ष्यसिद्ध्युपपादकेऽसिद्ध इव पररूपस्याप्यसिद्धत्वमिति भावः । ननु स्त्रीभि-भाययेत्यर्थे ऽस्त्रीति निषेधः स्यातिस्त्रीशब्दे कथन्निषेधप्रवृत्तिसंभावनेत्यत आह । नन्विति ॥ ह्रस्वेवर्णान्तमिति पाठः । यन्वस्यन्तपाठस्तु लेखकप्रमादात् । पाठ-कास्तु स्त्रीशब्दस्य तदवयवे लक्षणायां मानाभावात्स्त्रीभिन्नावयवविशेषार्थः । एवं च परमस्त्र्यादिशब्देषु निषेधो नैव प्रवर्तत इत्याहुः । नन्वस्त्रीत्यस्य प्रसज्य-प्रतिषेधत्वे इयङुवङ्स्थानाविशेषतत्सम्बन्धत्वमेव नेत्याह । प्रसज्येति । पाठकस्तु ननु प्रसज्यप्रतिषेधङिदाश्रिताङ्गेन स्त्रीशब्दस्य संबन्धात्तदन्तविधौ अतिस्त्रीया-दावपि निषेधः स्यादित्यपि मूलाशयः संभवतीत्याह । श्रयन्त्येनामिति । इदमा-र्थिकार्थकथनम् । विग्रहस्तु श्रायत इत्येव । कर्मणीति । इदं क्रियान्वयि । बा-धकाविषयेति । स्थितिशब्दस्योरस्यादिति भावः । यव्ङोति । नदीसंज्ञाप्रयुक्तका-र्यप्रवृत्तिप्रयोजकविभक्तिनिमित्तकलब्धाङ्गसंज्ञकसमानानुपूर्वीकावयवस्वप्रयोज्यबाध-काबाधितप्रवृत्तिके इयङुवङ्स्थानभूताविति तु निष्कर्षः । तेन प्रधीशब्दघटकधी-शब्दस्याङ्गत्वसत्वेपि न कश्चिद्दोषः । एतेन 'प्रधीति समासार्थालौकिकविग्रह-वाक्ये नदीसंज्ञाभावेनोपपादयिष्यमाणः कथमावो व्याख्यात इति दिक् । अमीति च्छेदभ्रमनिरासायाह । आमीति । भिन्नक्रमइति । सूत्राक्षरालाभप्रकारस्तु इत्थ-म् । आङ्ग्रापदस्य रूढ्यर्थबोधजनकत्वपरत्वेन मण्डपादिपदानां रूढानां पदस-मभिव्याहार विशेष एव यौगिकार्थबोधजनकत्वात्तेन चायमर्थ उपलक्ष्यत इति भावः। मुख्येति । पदान्तरसन्निधानाधीनेत्यर्थः । श्रीपुंसेति । समासान्तः अजन्तः । नि-सर्गात्न्याभ इति । स्वरसत इति भावः । इदमुपलक्षणं 'प्रथमाङिद्ग्रहणं चे'-त्यस्य, लुबन्तम्परकर्त्रे इति भाष्योपन्यस्त फलस्य । अन्यथा तस्य पदान्तरसम-भिव्याहारं विना स्त्रियां वर्तमानत्वेन सूत्रेणैव सिद्ध्या तदसङ्गतिः । संभावितनदी-त्वत्वप्रकृतिकसुबन्तोत्तरपदकादिस्यर्थभ्रमं निराकर्तुमाह । ऋकारसाहचर्येणेति । प्रियतिसृणी इति भाष्यादकारांशे संभावितत्वानिवेशेन तेन सह द्वन्द्वानिर्दिष्टत्वात् । आद्ये इति । भाष्योदाहरणात्तत्त्वनिर्णय इति भावः । एतेन 'अलौकिकप्रक्रिया-

षाङ्गे तत्प्रवृत्ते प्राग्रुपादित्त्वेन साहचर्याश्रयण विफलमित्यपास्तम् । आद्यै इत्यारभ्य इतीत्यन्त कैयटग्रन्थो न्यूनतां परिहरति । इदमिति । उक्तरीत्येति । यत्र नदीकार्याभावइत्युक्तरीत्येत्यर्थः । विशिष्टस्यापीति । न भ्रूसुधियोरिति यण्-निषेधादित्यर्थः । समुदायस्येति । ह्रस्वौ चेयङ्गुवङ्स्थानो चेति वार्तिकादिति भावः । पूर्वं सुद्धु धीर्यस्याम्मा, सुष्ठु ध्यायतीति विग्रहद्वयस्य उपक्रान्तत्वात्प्राथमिकविग्रहे त्वि 'ह्रस्वौ चे'त्युक्तवार्तिकेन नदीत्वविकल्पात्सुधादित्यस्यासङ्गत्यापत्त्याह ।.इति विशेषइति । समुदायस्येति । समुदायस्य बहुव्रीहित्वान्नित्यस्त्रीत्वाभावात्तदंशे ऽप्रातिलक्षणो बाध इति निषेध इति बोध्यम् । विरहपोषकत्वादिति । एव च विशिष्टे धर्मबुद्ध्याऽसाधुशब्दोच्चारण एवानिष्टोत्पत्त्या विरहपोषकत्वतात्पर्येण तदुच्चारणे न दोषः । वाक्यैकदेशन्यायेनाह । समासपदघटकेति । एतन्न्याये बीज कारके स्फुटी-भविष्यति । व्यपदिष्टस्यापि निषेधमाह । स्त्रियामादिति । भाष्येति । तत्र हि सन्नि-पातपरिभाषाफलत्वेन स्त्रिय इत्यादौ टाबभाव उक्त इति स्त्र्यादिषु पाठोऽप्रामाणिक इति तत्त्वमिति सिद्धम् ॥

॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

; अनोम् ॥ अङ्गस्येति पञ्चम्या विपरिणम्यते इति भावः । दीर्घवारणेत्यिति तु-नाऽप्यनिर्णीतेता । तद्वीज तु आने मुगिति सूत्रे भाष्ये मुक्तिहि न्यासे पचमान इत्यादौ अनो दीर्घो यत्नेति दीर्घापत्तिर्भाष्ये दत्ता । तथा एङ्ह्रस्वादिति सूत्रे भाष्ये, हल्ग्रहणानुवृत्त्यभावे कुण्डशब्दा सम्बुद्धौ अमादेशे आदे परम्परूपकारलोपे सुपि चेति दीर्घे 'कुण्डाम्' इति प्राप्नोतीत्युक्तमेतद्वाप्यद्वयप्रामाण्यात्सामान्यतो दीर्घविषये सन्निपातपरिभाषानाश्रयस्य स्वीकर्तव्यत्वात् । अत एव सर्वेषामित्यादौ बहुवचने झल्यदित्येत्वसिद्धि । अत एव रामायेत्यादौ सुपि चेति दीर्घसिद्धि । न चैव निरुक्तिवने उपवात्व निमित्तीकृत्य जायमानमकित्त्व गुणस्य निमित्त स्या-दिति गुणाशक्ति । किप्प्रत्ययं निमित्तीकृत्य प्रवृत्तस्य नलोपस्य तद्विघातकाकि-त्वाभिमतस्यायोगादेव दोषवारणात् । न च बहुवचने झलीति सूत्रे झल्ग्रहणाद्वाल सर्वेषामिति निर्देशात्काष्टायेति निर्देशाच्च विशिष्य तत्र तत्राप्रवृत्तिः कल्प्यते इति वाच्यम् । प्रतिलक्ष्यमप्रवृत्तिकल्पनापेक्षया लाघवेन सामान्यत एव तत्कल्पनौचित्य-मित्याशयात् । अल्लोप इति सूत्रस्थ भाष्ये तु सुपि चेत्यपेक्षया नित्यत्वात्पूर्वं

लोपः स्यादित्यभिप्रायकमिति न तद्विरोध इति दिक् । ननिमित्तेति ॥ इदं चिन्त्यम् । संनिपातपरिभाषाया उपजीव्यविरोधस्यान्यायमूलकत्वेनातो मृ इति मादेशोपजीव्यस्यादन्तसंनिपातस्याविनाशेन प्रकृतपरिभाषाया अप्रवृत्तेः । प्रकृतिप्रत्ययसंनिपातं प्रयोगिणमादाय प्रकृतपरिभाषासञ्चारस्तु न । तस्य शैव इत्यादि साधारण्येनाङ्गसञ्ज्ञा तन्निमित्तं स्यादिति भाष्यैकदेशयुक्तित्वस्य वक्ष्यमाणत्वात् । भवतीत्यादावदादीनामप्यनापत्तौ दोषाः खल्वपीतिकल्पेनेति भाष्यासंगत्यापत्तेश्च । व्याख्यानादिति । सूर्यतिष्येति सूत्रे यग्रहणादिति तु नोक्तम् । अन्ततो दीर्घशङ्कावारणाय व्याख्यानस्यावश्याश्रयणीयत्वेनेति भावः । नित्यस्त्रीत्त्वमिति । विभक्तिमपेक्ष्य स्त्रीलिङ्गनिर्देश इत्यसंगतम् । नदीत्वापत्तेरिति । गौरादित्वान्ङीषिति तु हेयमेव । गौरादित्वे मानाभावात् । वस्तुतस्तु जसः शीति निर्देशानुपपत्त्या गौरादित्वमेव न्याय्यमिति कैयटः । व्याख्यानादिति । साहचर्याश्रयणेपि सुप्त्वेनैव तत्वमित्यत्र व्याख्यानमेव शरणमिति भावः । प्रकरणाच्छ्रुतेनेति । नतु कथमेतच्चिचतुरोरित्यादौ द्वयोरपि सूत्रोपात्तत्वेनोपस्थितत्वमूलकस्य प्रकरणाच्छ्रुतेरिति न्यायस्यावतारोपि नपुंसकस्य प्रकृतेऽनुवर्तमानतया तन्न्यायाविषयत्वात्पूर्वसूत्रे नपुंसकस्येत्यस्याङ्गसंबन्धत्वेन तस्यैव विशेषणत्वौचित्याच्च । किञ्च झलचोरपि श्रुतत्वान्नपुंसकस्येत्यनेनैव संबन्धापत्तावङ्गस्येति झल्ज्भ्यां विशेष्यत इति पूर्वग्रन्थासंगतिः । किं च नपुंसकस्येत्यस्याङ्गविशेषणत्वेन तदन्तविध्यापत्तावतिज्ञानानित्यादौ नुमापत्तिरिति चेन्न । भावानवबोधात् । तथाहि । अनुवृत्ते तज्जातीयपदान्तरानुसन्धात्वेनानुसन्धीयमानस्य नपुंसकपदस्य सूत्रे श्रूयमाणास्य्यादिभिरेवान्वयस्य प्रकरणाच्छ्रुतेरिति वाचनिकयै व परिभाषा स्वीक्रियत इति । एतेन प्राधान्य दङ्गविशेषणं स्यादित्यपास्तम् । वाचनिकयानया तद्बाधात् । किञ्च न्यायसिद्धत्वेपि तत्त्वार्थनिर्णयदशायां स्वान्वयितयेतराकाङ्क्षाक्षणेन नपुंसकस्येत्यात्रान्वयवेलायामस्य्याद्युपस्थितेरावश्यकत्वेन प्राकरणिकाङ्गानुसंधानात्पूर्वमेव नियमेनास्य्यादीनामुपस्थित्या तेनैवान्वयस्यौचित्यात् । नपुंसकानुवृत्तिरष्टमगहणेनेति विहितस्यन्ते दधिनेत्यादावनङोऽप्रवृत्तये । आध्यकारेण सिद्धये सपूर्वग्रहणेन प्रत्ययविधौ प्रतिषेध इति न ज्ञाप्यते किं तु येनविधिरित्यस्यानित्यत्वं ज्ञाप्यते इति बोधनमात्रेण प्रकृतेऽङ्गविशेषणत्वेपि न क्षतिरित्याशयेन तथाकरणात् । वाशाविति वक्तव्ये वा नपुंसकस्येति न्यासेन श्रुतस्यानुसंधीयमानस्य

वा विशेष्यविशेषणत्वान्यतररूपेण श्रुतेनैव सम्बन्धस्य ज्ञापनाच्च । तेनैव विधे नि-
षये कृत्स्नसंबन्धत्यागबोधनाच्च । अन्यथा आच्छादनयोरिति सूत्रेऽपि तथापत्तौ
नपुंसकग्रहणवैयर्थ्यं तादवस्थ्यं स्यात् । 'तत्र प्रत्ययाभ्यां विशेष्यत' इति प्रन्थस्तु-
न्यायप्रवृत्तौ विशेषाभावेन तदनादरेण प्रवृत्त इत्यदोषः । इतिप्रायोवादइति ।
अत एव पुम रव्यम्परे इति सूत्रे संबन्धमनुवर्तिष्यत इति भाष्यमुपादाय सम्ब-
न्धोमति कर्मणि घञ् प्रथमान्तमिति कैयटेनोक्तम् । घञजप इत्यस्य भावघञ्विष-
यकत्व तु न युक्तम् । कर्मण्याणीति सूत्रे मार्ग भक्षोऽस्येति भाष्यविरोधात् । सरू-
पभङ्गाभयेनेति । अस्याशय उक्तः । अश्वेति सूत्रे मत्वादिषु अन्यइतरात्प्राक् पठित्वा-
अड्डन्यादिभ्य पञ्चभ्य इत्येव सूत्रयितुमुचितम् । नाद्इति । अत्र वदन्ति । अङ्ग-
स्येति पष्ठो डतरादिभ्य इति पञ्चमी तत्राशक्यं विविभक्तिकत्वाड्डतरादिभ्य इत्य-
नेनाङ्गस्येति विशेषयितु तत्र किमन्यच्छक्य विशेषयितुमन्यदतो विहितात्प्रत्यय
डतरादिभ्यो यो विहित इति भाष्यस्यायमर्थ । डतरादिभ्य इति ल्यब्लोपे पञ्च-
मी अर्थपरश्चाय निर्देशो लक्षणया । एतदर्थमेव बहुवचननिर्देश । तथा च डत-
रार्थमाश्रित्य विहितयो स्वमोरिति पर्यवसितम् । एवमेव षड्भ्यो लुगित्यत्रापि ।
न च कतरधनमित्यादावतिप्रसङ्ग । प्रत्यासत्त्योपास्थितडतरादिभ्य परयोरेव वि-
धानात् । न च लुप्तकप्रत्यन्ते कतरशब्देऽतिप्रसङ्ग । तत्र 'कप्युत्पत्तौ डतर-
मानाभावादुत्पत्तौ वास्येष्टत्वे बाधकाभावात् । न च कतर इवान्य इति विग्रहे
कतरान्यशब्देऽतिप्रसङ्गः । व्याघ्रादित्वे मानाभावात् । तत्त्वे वा याद्दशडतरार्थ-
न्यतमार्थमाश्रित्य स्वमौ विहितौ तत्र परत्वस्य विवक्षितत्वात् । न चोक्तानेन वि-
धक्लेशाश्रये मानाभाव । आरम्भप्रत्याख्यानस्यैव मानत्वात् । नव्यमते च उप-
सर्जनप्रतिषेधारम्भे परमकतरदिष्यते प्रत्याख्याने तु नेति फलभेद स्पष्ट एव । किञ्च
नव्यमते सञ्ज्ञोपसर्जनप्रतिषेधप्रत्याख्यानावसरे परमकतरमिति न सिध्यति इति
वार्तिककृत प्रति भाष्यकृता न्यूनतोद्भावनीया स्यादिति । मत्वाभावइति । ननु यथो-
द्देशे इटि जातस्यानिवृत्तिरिति चेत् । न । आकडारस्थेषु कार्यैक्यतारूपका-
र्यकालस्याभावेऽपि कार्यप्रवृत्तिकाल एव 'प्रवृत्तिकत्वरूपकार्यकालत्वस्वीकारस्य
प्रागुपपादितत्वात् । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन पूर्वपक्षस्वारस्यादाह । येद्व-
ति । नन्वन्त्यवर्णतद्वर्णयोरितराव्यवधाने एवेति परिभाषेन्दुशेखरे उक्त तदनेन

विरुध्यते इति चेत् । न । शब्दत उद्देश्यत्वेनोपधातिरिक्तकृतान्यवधाने एवेति तदर्थेनादोषात् । प्रकृते च नकारो नोपधाया इत्यतोऽनुवृत्त्या शब्दत उद्देश्यत्वेन नोपात्त इत्यदोषात् । अभिमानइति । अत्र यद्वक्तव्यं तत्प्रागेवोक्तम् । सत्त्वप्रधानस्येति । अत्र वदन्ति । शब्दादीदृशार्थलाभः । किञ्च पर्जन्यवल्लक्षणप्रवृत्त्या प्रथमतो ह्रस्वे कृते ऊखतुः प्रेखतुरित्यादाविव लक्ष्ये लक्षणस्येति न्यायेन पुनःप्रवृत्तिरेव नास्ति । अत एव ग्रामण्य इत्यादौ न ह्रस्वः स्यात् । किञ्च धनलक्ष्म्यादौ अतिप्रसङ्गवारणाय प्रधानाप्रधानन्यायेन नपुंसकत्वविशिष्टार्थविशेष्यकबोधजनकस्यैव ह्रस्वस्य वक्तव्यतया काण्डे इति सप्तम्यन्तजन्यबोधविशेष्यस्य नपुंसकत्वाश्रयत्वाभावादेव दोषवारणे उक्तप्रयासवैयर्थ्यम् । एतेन 'प्रातिपदिकपदमनतिदिष्टप्रातिपदिकत्ववत्परं श्रीपादौ प्रत्ययलक्षणापदेशेनैव प्रातिपदिकसञ्ज्ञा । काण्डादौ प्रकृतिगतस्य प्रातिपदिकत्वस्यातिदेशेनानातिदिष्टत्वत् । सत्त्वप्रधानस्येत्येतदपि प्रकृतिविषयकं फलितार्थकथनमेवं च न शब्दाधिक्यार्थाधिक्यम्' इति परास्तम् । एतेनैव च नपुंसकपदं नपुंसकत्वपरं तस्य च प्राधान्यासंभवान्न प्राधानन्यायावतार इति बालप्रतारकं निरस्तमिति चेच्चिन्त्यमेवैतत् । न चान्तवद्भावेन नपुंसकत्वविशिष्टार्थविशेष्यकबोधजनकप्रातिपदिकत्वमपि स्यादिति कथं मध्यमःप्रकारः इति वाच्यम् । अन्तवद्भावेनार्थानतिदेशात् । अन्यथा सत्त्वप्रधानत्वमप्यतिदिश्येत । ननु शब्दस्वरूपस्यापि कथमतिदेशः । अशास्त्रीयत्वात् । तथा च बहूपप्लवापत्तिरिति चेत् । न । तत्रापि स्वं रूपमिति शास्त्रबोधितत्वात् । न च तत्प्रत्याख्याने गत्यसंभवः । तत्प्रत्याख्याने शब्दप्रधानतया शब्दस्य शास्त्रीयत्वात् । अथ वा लोड्रूपस्यमे निर्विधानेन शब्दस्याशास्त्रीयस्याप्यतिदेशत्वबोधनात् । शाड्रूपस्य सहेःकार्येण च तथैव बोधनात् । एकदेशविकृतन्यायेन सिद्धे तदनुपयोगाच्च । प्राधान्यमिति । प्रकारतानिरूपितत्वमित्यर्थः । एवं च प्रकारता भिन्नविशेष्यताशालिनी लिङ्गसंख्याकारकान्यान्यर्थबोधनकत्वरूपसत्त्वप्राधान्यस्याभावादिति भावः । तत्संसर्गकस्तद्घटितसंसर्गकः प्रथमार्थस्यातत्प्रकृत्यर्थस्य । एवं च तिङःकर्तृत्वशक्तिमानर्थो बोत्यःकर्तृक्रियामादिश्य वाच्यः । एवं प्रथमायास्तिङर्थकाण्डार्थाभिन्नत्वन्न प्रत्ययार्थः प्रधानमिति व्युत्पत्तिभङ्गः काण्डाद्यभेदान्विततिङर्थस्योक्तसंबन्धेन क्रियायामन्वयात् । अन्ये तु कटं भीष्ममित्यादित्वप्रातिपदिकपरम्परावच्छेदः । उक्तसंबन्धेन द्वयोरपि क्रियायामेवान्व-

यादित्याहु । चिन्त्यप्रयोजनमिति । यत्तु पाठकेनोक्तं 'चिन्ताबीजन्तु नपुंसकवृ-
त्तेरिदंशब्दादेघुनाप्रत्यये इशादेशे तुमापत्तौ यस्येति लोपो न स्यादिति' तन्तुच्छम् ।
मस्त्वादिना इनि टिलोपेनापि तत्सिद्धेः । अनिष्टसङ्ग इति । प्रवृत्तिनिमित्तभेदाच्छ-
ब्दभेदेनाय दोषः । एवं च तत्पक्षे यथाश्रुतमेव रमणीयम् । पुमान्यास्मिन्निति ।
पुमांसे प्रवृत्तिनिमित्तवृत्तित्वं च स्वनिष्ठाधेयतानिरूपिताधारतासम्बन्धेन । एवं च बोधन-
कर्मीभूतपुंस्त्वविशिष्टाधिकरणं प्रवृत्तिनिमित्तमित्यर्थः । ततोऽर्शआद्यचि तद्धेतुकप्रवृत्ति-
क इत्यर्थः । क्लीबपद च लक्षणया क्लीबत्वविशिष्टार्थप्रतिपादकपरं तत्र च तद्धेतुकप्र-
वृत्तिकत्वाभेदेनान्वये धनवान् सुखोन्यादिवद्धर्मिपारतन्त्र्येण तस्याश्रयतासम्बन्धे-
नान्वय । समानानुपूर्वीकइति । इद मधुशब्दव्यावृत्तये इति पाठकाः । तत्तुच्छ-
म् । ग्रामण्ये सेनान्ये कुलायेत्यादौ पुंवद्भावेन ह्रस्वाप्रवृत्तिप्रतिपादनपरभाष्या-
सङ्गतेः । ह्रस्वेकारान्तस्य भाषितपुंस्कत्वाभावात् । इक किं श्रीपणेत्यग्निम-
ग्रन्थासङ्गतेश्च । अग्रमरणवैयर्थ्यापत्तेश्चेति यत्किञ्चिदेतत् । तस्माद्यन्येगन्तक्लीबस्य
पुंवद्भाव कर्तव्यस्तस्य नपुंसकत्वप्रयुक्तकार्याप्रवृत्तिप्रकालीनरूपस्य भाषितपुंस्कत्वे
पुंवदित्यर्थ । समानानुपूर्वीकत्व च तत्कालीनमेव ग्राह्यम् । एतेन 'पैडविडवृन्दारके
कथं पुंवत्त्वमिडविडशब्दस्य भाषितपुंस्कत्वाभावादिति' परास्तम् । प्रत्यासत्तेरिति ।
समानानुपूर्वीकत्वमनेनान्वयि । समानार्थेनेति तु उपरञ्जकतया । द्वन्द्वेप्रयुक्तइति ।
नम्वनङ्यपि फिष इत्यन्तोदात्त उच्चारणीये आद्युदात्तोच्चारण विवक्षार्थं स्यात् । न च
झलां जश् झशीत्यादौ जशिति सञ्ज्ञाप्रतिपत्तये अर्थवत्सयादित्वेन जश्त्वाप्रवृत्तिकल्प-
नवच्छब्दे प्रवृत्त्यर्हस्य शटिति प्रतिपत्तये आद्युदात्तोच्चारण न्याय्यमिति वाच्यम् ।
एव सति विशेषपक्षस्यैवाश्रयणात् । विशेषपक्षश्च स्थान्यनुरूपानुच्चारणशास्त्राप्राप्तो-
च्चारणान्यतररूप । अत एव सहस्योदात्तानुदात्तघटितत्वेन स्वरितस्यैव तदनुरू-
पत्वात्सादेशे उदात्तोच्चारण विवक्षार्थं प्रकृते च शास्त्राप्राप्तमुच्चारण छान्दसत्वादिना
शास्त्राप्राप्तत्वे नतिभृत्तस इत्यादावपि तुल्यम् । शटिति लक्ष्यप्रवृत्त्यर्हप्रतिपत्तिफ-
लकशास्त्राप्राप्तोच्चारण तदित्यपि न । चतसर्यपि तौल्यात् । किञ्च केवलास्थिशब्द-
स्यान्तानुदात्तत्वेनानुदात्तादिकयकारान्तलोपे प्रवृत्त्यर्हस्य शटिति प्रतिपादकत्वाच्छान्द-
सत्वादिना फिट्शास्त्राप्रवृत्तिकल्पनमाधिक्य एव यत्न । लक्ष्येषु यद्यद्गुणकप्रवृत्त्यर्हं
तत्तद्गुणकस्य शटिति प्रतिपादनं स्वीकर्तव्यमेवेति चेत । अत्र केचित् । आनङादीना

व्युत्पत्तिपक्षे आद्युदात्ततया तदेकवाक्यतायै अव्युत्पत्तिपक्षेऽपि फिष इत्यस्येद्दशे विषये अप्रवृत्तिरिति प्राहुस्तन्न । ईद्दशे विषये व्युत्पत्तिपक्षस्यैव निर्मूलत्वात् । तथाहि । अर्थपरे हि शब्दे मशकादौ मशकादिव्यावृत्त्यर्थं गवादौ गोण्यादिव्यावृत्तये प्रकृतिप्रत्ययकल्पनया साधुत्वान्वाख्यानेपि शब्दपरेष्वसाधोर्व्यावर्त्याभावात्तत्कल्पने मानाभावात् । अन्यथा अनङ्गादिकल्पकधात्वादिष्वपि भ्वादिषु प्रकृतिप्रत्ययादिकल्पना स्यादित्यनवस्था स्यात् । कल्पकाविशेषात्तन्निर्णयतृदात्तसंपादकस्यापि कल्पनासंभवाच्च । आद्युदात्तत्वे फिट्शास्त्रबाधापरंपरानाथाभ्यक्पक्षैक्यरूपाय व्युत्पत्तिपक्षेऽपि तस्यैव युक्तत्वाच्च । तस्माज्ज्ञापकोपवर्णनभाष्यप्रामाण्यादीद्दशे विषये फिट्शास्त्राप्रवृत्तिकल्पनैव भाष्यतात्पर्यम् । तथा च वृद्धिसूत्रे भाष्यम् । उभयमिदं गुणेषूक्तं भेदका, अभेदका इति किं पुनरत्र न्याय्यम् । अभेदका गुणा इत्येव न्याय्यम् । कुत एतत् । यदयमस्थिदधिसक्थ्यक्ष्णामनङुदात्त इत्युदात्तग्रहणं करोति । अत्र वयं विचारयामः । स्वं रूपमिति शास्त्रारम्भे स्वरस्य रूपत्वाभावेन तस्यासंज्ञित्वे फिष इत्यादिशास्त्रप्राप्तस्वरघटितस्योच्चारणेऽपि तस्य तत्तच्छब्दाद्बोध्यत्वादस्याःपरिभाषाया उपयोगश्चिन्त्य इत्यायाति । तत्प्रत्याख्यानपक्षेऽपि सख्युरित्यादौ विकृतस्याग्रहणन्तत् । पदत्वप्रयोजकसुबुत्पत्तिप्रयोजकप्रातिपदिकप्रवृत्तिकालीनतदाश्रयरूपस्य ग्रहणेनोदात्तादीनामग्रहणात् । सूत्रव्याख्याविंत्यादावपि प्रातिपदिकत्वाश्रयस्य प्रातिपदिकाश्रयसंगतः प्रागस्त्रकत्वमेव । ऐक्ष्वाकादावेकश्रुते सर्वस्वरसंग्रहकत्ववत्प्रकृते व्यादावपि एकश्रुत्याऽनुक्तस्य शास्त्रकृतविकृतस्य सर्वस्वरसंग्राहकत्वं भवत्येव । एवं चैषा परिभाषा निष्फला । तथाप्येवंविधार्थकस्य न्यायसिद्धार्थस्य बोधकमुदात्तग्रहणमिति भाष्याशय इति तत्त्वमिति सुधियो विभावयन्तु । अन्तोदात्तेति । हन्तेराद्यचोरैक्यादाद्युदात्तस्यापि तदनुरूपत्वं वक्तुं शक्यम् । तथापि धातोरित्यन्तस्वप्रयोज्यमेवोदात्तत्वं हन्तेरिति तदेव स्यान्यनुरूपमिति भावः । प्रयोगे शेषनिघातेनानुदात्तत्वात्स्थानिनो भविष्यत्कालीनप्रकृत्यर्हो ऽनुदात्तोच्चारणस्य लक्ष्यश्रवणार्हगुणकद्धटिति प्रतिपत्तिजनकत्वादाह । अनुदात्तेति । यत्तु पाठकेनोक्तम् । उपदेशेऽनुदात्तत्वाच्चेति । तत्तुच्छम् । उपदेशेऽनुदात्तत्वेप्यान्तरतम्यपरीक्षावसरे तस्याभावादनुपयोगात् । तेनेति । प्रतिपदोक्तपरिभाषानुसंधाने नपुंसकपदानुसंधाने च न विशेष इति भावः । अानवस्वेति । लाघवानादरवन्मतुप् । छिङ्क्सिद्धेति ।

गवा मधुसबन्धस्य क्षीरसमवायिरूपस्यैव सामर्थ्याल्लाभ इति भाव । यद्यप्यनुप-दोक्तवृद्धोक्ताविकारवाचिमधुशब्दलिङ्गव्यत्ययोदाहरणसभवोऽपि तादृशार्थविवक्षये-त्यमुक्तमिति भाव । नित्यत्वादेवेति । इद चिन्त्यम् । तृजनुटोर्विप्रतिषेधोपपत्त-येऽवश्याश्रयणीयेन तृचूप्रवृत्त्युत्तरकालीनसंनिपातपरिभाषाप्रयुक्ताऽप्रवृत्तिमयुक्ता नित्यत्वेनैव पूर्वविप्रतिषेधोपपत्ते । तद्ग्रहणेनेति । इकोचीति सूत्रस्थ अतिराभ्या-मित्यादौ नुमि कृते रैशब्दान्तत्व नास्तीति विवरण तु निर्दिश्यमानरैशब्दान्तत्वाभि-प्रायकमिति । तेन न विरोध इति बोध्यम् । षष्ठीनिर्देशाभावादिति । अत्र मौनि-श्रीकृष्णभट्टा । 'एव सति षष्ठमक्रोष्टुशब्दे तदन्तविधिना विशिष्टस्यैवादेशा-पत्ति । न च प्रयोगनियमार्थत्वेन निर्वाह । क्रोष्टुशब्दस्तृज्वद्रूपको भवतीति शाब्दे निष्पन्ने क्रोष्टुशब्दस्य तद्वद्रूपकत्वासभवात्प्रयोगनियमस्य फलितत्वेन केव-लक्रोष्टुशब्दग्रहणे तस्य सर्वनामस्थानपरत्वाभावाच्छौतवाक्यार्थविषयकत्वफलित-स्याप्यविषयत्वात्तृज्वद्भावस्यैवानापत्ते । एतेनाङ्गसज्ञानिमित्ते सर्वनामस्थाने क्रोष्टु-स्तृज्वदित्यपास्तम् । अङ्गाधिकारे तदन्तविधे सत्त्वेनेति ग्रन्थासगत्यापत्तेश्चेति' वदन्ति । तन्न । प्रत्ययग्रहणपरिभाषाया तदन्तशास्त्रस्य शब्दस्वरूपादिविशेष्याध्या-हारमूलकत्वेनैकदेशान्वयस्वीकारादिना तृजन्तार्थलाभप्रयोजकादन्तविध्यावश्यक-तया तथैव पुनर्विशेष्यमध्याहृत्य तृजन्तान्नित्यर्थस्वीकारेणादोषात् । एतेन 'षष्ठ्य-र्थकविभक्तिमात्रस्य नामिनम चेत्याद्यनुरोधेन निर्दिश्यमानपरिभाषाप्रवृत्तियोग्य-ताया वृद्धिसूत्रस्य भाष्यकैयटादिध्वनिततया षष्ठीनिर्देशाभावादित्याद्यसगतमिति पाठकोक्तमपास्तम् । नाम्यादौ प्रकृतपरिभाषावश्यकत्वे तदर्थं तत्र षष्ठ्यर्थावश्यक-त्वेऽपि प्रकृते तदर्थकत्वे मानाभावात् । षष्ठीनिर्देशाभावादित्यस्य तदर्थकविभक्तिनि-र्देशाभावादित्यर्थ । यतश्चेति सूत्रे कारकेष्विति वदेदिति भाष्येण निर्धारणसप्त-मीस्थले एकवचनान्तत्वस्यासाधुत्वादाह । सौत्रमिति । यत्तु पाटकेन 'निर्धारणस-प्तमीस्थले प्रकृते समुदायबोधकत्वे ऽनुद्भूतावयवभेदविवक्षया बहुवचन स्यादित्यभि-प्रायक निर्धारणस्यानेकविषयत्वादाह' इत्यवतारित तत्तुच्छम् । अनुद्भूतावयव-भेदविवक्षया निर्देशोपपत्तौ सौत्रत्वकल्पनाया अन्याय्यत्वापत्ते । नियम्यत इति । ननु यथासख्यपरिभाषैकवाक्यतया ऐच्स्थानिकऋल्वर्णविधायकत्वसभवे-स्यायोग । न चैवमेजित्येवब्रूयादिति वाच्यम् । यथासख्यसपादनेन कृतार्थ-

त्वात् । न च ह्रस्वादेश इति व्यर्थम् । ह्रस्वादेशे प्राप्ते इत्यर्थेन विषयविशेष बोधनेन साफल्यात् । किन्च शास्त्रान्तरप्राप्तस्य नियामकत्वे एच इति व्यर्थं परिभाषाप्रकरणानुरोधेनैतस्यापि परिभाषात्वेन परिभाषाणामनियमे नियमकारित्वेन यस्येगनिग्घ्रस्वप्राप्तिस्तस्येगुरूपह्रस्वप्रापकत्वेन इगनिग्घ्रस्वप्राप्तेश्चैच एव संभवादिति चेत् । न । परिभाषाप्रकरणानुरोधेनादेशपदानुरोधेन चैतस्य विध्यन्तरशेषतयैव लक्ष्यसंस्कारकत्वेन नियामकत्वस्य न्यायप्राप्तत्वात् । आदेशपदं हि स्थाननिमित्तसंबन्धार्थकार्थेन नित्यसापेक्षत्वात्तेनैवान्वयि । तथा च एचः स्थाने आदिश्यमानेषु ह्रस्वेष्वित्यर्थे एतद्विधेयानामेतद्वाक्यविधेयज्ञानाधिकरणक्षणपूर्वक्षणावश्यकज्ञानविषयोद्देश्यज्ञानसमये ज्ञानासंभवाच्छास्त्रान्तरप्रापितानामेव ग्रहणबोधनद्वारा विधायकत्वव्युदासात् । यथासंख्यशास्त्रप्रवृत्तौ विधायकत्वापत्त्यादेशग्रहणबोधितार्थासंगत्यापत्तेः । एतदर्थमेव ह्यादेशग्रहणम् । एच्ग्रहणं तु स्थानेन्तरतमपरिभाषाबाधनेन औपमित्यादाविग्रूपह्रस्वव्यवस्थापकनिरासाय । न चैवमिग्ग्रहणमेव तत्र कुर्यादिति वाच्यम् । सामर्थ्येन विनिगमनाविरहादजन्तेषु सर्वेषु एतस्य प्राप्तिकप्रवृत्तिप्रसङ्गात् । अचश्चेति परिभाषाप्रवृत्त्यर्थं ह्रस्वग्रहणस्यावश्यकर्तव्यत्वाच्च । अनेकह्रस्वविधायकेषु ह्रस्वेग्ग्रहणयोः करणेऽत्यन्तगौरवापत्तेश्च । एतेन 'ह्रस्वे प्राप्ते एच इग्भवतीति विधायकमेवास्तु किमितराङ्गबाधकादेशग्रहणेन' इत्यपास्तम् । यथासंख्यापत्तेः । परिभाषाप्रकरणबाधापत्तेश्च । भाव्यमानोप्युकार इति परिभाषया दीर्घोकारस्यापि विधानापत्तेश्चेति सूक्ष्मचेतसो विभावयन्तु । नचेति । इयं वृथा चिन्ता । विषयसप्तमीत्वस्यास्मिञ्छास्त्रे फलप्रमाणाभ्यामेवाश्रयणात् । अतेदं बोध्यम् । प्रधीणामित्यत्र सन्निपातपरिभाषया पूर्वमात्वाप्रवृत्तावपि कृते दीर्घे तद्विरोधाभावादात्वे प्रराणामित्येव रूपम् । तद्विषय इति । नुड्विषये इत्यर्थः । एवं च सामान्यतो नुड्विषये संनिपातपरिभाषाऽप्रवृत्तिर्नामीति शास्त्रेण बोध्यते इति भावः । नन्वेवं सति रामाणामित्यादौ नामीति दीर्घ इति ग्रन्थासंगतिः ऽत आह । नामीतिदीर्घस्त्विति । वर्णमात्राश्रयेति । इदं चिन्त्यम् । नुम्विधौ यस्मात्प्रत्ययविधिस्तदादीत्यस्योपस्थितौ तस्यापि प्रकृतिप्रत्ययसमुदायाश्रयणाद्बहिरङ्गत्वात् । न च पदद्वयाश्रयत्वेन ह्रस्वो बहिरङ्गः । तावतापि ह्रस्वशास्त्रीयनिमित्तसमुदायबहिर्भूतक्विब्निमित्तकत्वेन नुकोपि बहिरङ्गत्वात् । न च प्रातिपदिकसंज्ञायां क्विबन्तत्वबुद्धेयव प्रवृ-

ष्या ह्रस्वस्यापि क्विबाश्रयत्वमस्त्येवेति वाच्यम् । एतस्य समासत्वनिमित्तकप्राति-
पदिकत्वनिमित्तकत्वेनैतन्निमित्तकोटौ क्विपोऽप्रवेशात् । एतेन विश्वौह इत्यादौ
सम्प्रसारणस्य बहिरङ्गत्वं समुदितप्रातिपदिकापेक्षत्वात्, गुणस्य त्वन्तरङ्गत्वमिति
अन्तरङ्गबहिरङ्गभावमाश्रित्यान्तरङ्गपरिभाषाज्ञापकवर्णनपरशेखरादियोजनाप्यपास्ता ।
बहिरङ्गशास्त्रीयनिमित्तसमुदायान्तःपातिर्णिनिमित्तकत्वाद् गुणस्य । किञ्च नि-
मित्तं च सप्तम्याद्यन्तोपात्तमेवेति परिभाषेन्दुशेखरेण च विरुद्धमिदमत एव
माऽस्वरसमाह । येत्यिति । अप्रवृत्तश्चेति । तत्फलन्तु मरुत्स्वेत्यादौ ल्यपोऽसिद्धत्वा-
भावेन तुकप्रवृत्तिः । उपजीव्यविरोधादिति । ग्रामकुलमित्यादावपीति भाव । 
एव हि क्वितितुग्ग्रहणस्यान्तरङ्गपरिभाषायास्तुग्विषयेऽप्रवृत्तिज्ञापकता भग्ना ।
स्वास्मिंश्चारितार्थ्यविरहात् शङ्कते । व्यर्थेति । समाधत्ते । तत्स्थेति । अन्यत्र निरू-
पितमिति । अत्र पाठकाः । अत्राप्यर्चिवैजन्तु उक्तभाष्यैकदेशयुक्तिस्ते माना-
भाव । शैव इत्यत्राङ्गसंज्ञाया लोपनिमित्तत्वापादनं तु दाक्षिरित्यत्र प्रत्ययस्य तद्-
नित्यत्वापादनेन तुल्यम् । सामर्थ्यादाङ्गो वारणविचालो भविष्यतीति प्रदीपकृदु-
क्तम् । प्रतिविधानमपि तत्र तुल्यम् । अत्र तु मते शैव इत्यत्र चरितार्थस्य लो-
पस्य दाक्षिरित्यत्राकारान्ते प्रत्युपजीवकं इञ्निमित्तं न स्यात् इति प्रतिविधा-
नान्तरमास्थेयं स्यादित्याहुः । तत्तुच्छम् । भवतीत्यादिषु विजातीयेषु बहुषु स्थलेषु
सन्निपातपरिभाषाया अतिप्रसक्तत्वेन दोषाः खल्वपि साकल्येन परिगणिता इति
भाष्यासङ्गत्यापत्तेः । सन्निपातपरिभाषाया उपजीव्यविरोधमूलकत्वेन तत्सङ्गतेश्चेति
दिक् । ननु ह्रस्वनुड्भ्यामित्यन्त इति सूत्रे ह्रस्वस्य पिति कृति तुक् इति सूत्रे विषये एव सन्निपातपरि-
भाषाया भाष्ये सञ्चारितत्वात् । तेन ग्रामणिपुत्र इत्यादौ तुगभाव सन्निपातपरिभाषया
सिध्यतीत्यर्थेन विरोधो ह्रस्वस्य पितीति सूत्रेऽन्तरङ्गपरिभाषया अप्रवृत्तेरिति
स्वीकारित्यर्थत आह । एकदेशिन इति ॥ इत्यजन्ता नपुंसकलिङ्गा । ह्लोढ ।
हास्त्वनि ।• प्रतिपत्तिलाघवायेति शेष । घुडित्याद्यसिद्धेरिति । झलन्तत्वाभा-
वेन भष्भावानापत्तेरिति भाव. । आदिपदेन ल्लोढ इत्यादि ग्राह्यम् । दादेर्धातो ।
दत्वस्यापि विधानार्थमिति । वाग्रहणं समुच्चयार्थमिति भावः । उक्ताशयम् । औपदेशि-
कदादित्ववति लक्षणेत्युक्ताशयम् । अन्यत्र विस्तर इति । अन्ये तु पूर्वं निषेध्यसम-
र्पके दादेरित्यस्यौपदेशिकदादित्ववति लक्षणायां धातोरित्युत्तरसूत्रे दादेरित्यनुवृत्ति-

वैयर्थ्य अपवादपक्षेपीत्याशयापि न । औपदेशिकदादित्ववतो धातुत्वाव्यभिचारेण धातोरित्यस्य वैयर्थ्यापत्तेः । तस्माद्दादेरित्यस्यौपदेशिकदादित्ववति लक्षणायां मानाभावात् । धातोरित्युत्तरसूत्रे दादेरित्यनुवृत्तिस्त्वधोगित्यत्र पूर्वसूत्रप्राप्तढत्वनिवृत्त्यर्था । तथा हि धातोर्व इत्येतन्मात्रेण घुगित्यादिसिद्धौ धातोरित्यनुवृत्तिर्वैयधिकरण्येनान्वयेनादादावपि अधोगित्यादौ घत्वार्था । तत्सामर्थ्येन चाधोगित्यत्र न पूर्वेण ढत्वम् । धातोरिति तु दामलिट्शब्दे घत्वाभावार्थो । दामलिहमात्मन इच्छति दामलिह्यति ततः क्विप् दामलिगित्येव घत्वप्रवृत्तेरेवेत्याहुः । इत्यादिसिद्धय इति । आदिपदेन धुग्धमित्यादिपरिग्रहः । तत्र हि घत्वे झषस्तथोरिति धत्वसिद्धिः । नन्वौपदेशिकप्रयोगिकयोरिति परिभाषयैवौपदेशिकदादित्ववतो ग्रहणे सिद्धे दादिग्रहणं व्यर्थमत आह । औपदेशिकेति । धातोरिति सूत्रे दादेरित्यनुवृत्तिर्व्यर्था । प्रयोगो नास्तीति कृत्वेति । औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणमिति परिभाषासत्वे तु लौकिकप्रयोगे सानुबन्धकानां प्रयोगो नास्तीति औपदेशिकप्रयोगग्रहणमिति भाष्यासङ्गतिः । उक्तपरिभाषयौपदेशिकप्रयोगस्य मुख्यत्वबोधनादिति भावः । ननूक्तपरिभाषयौपदेशिकदादित्ववतो ग्रहणे ऽपि नोक्तभाष्यविरोधः । सानुबन्धकग्रहणेष्वित्युक्तयोक्तभाष्यस्य सानुबन्धकविषयत्वात् इत्याशङ्क्योक्तभाष्यं सर्वविषयकं न सानुबन्धकमात्रविषयम् । न्यायस्य सर्वत्र तौल्यादित्याह । अनुबन्धप्रस्तावादित्यादिना । चर्कुर्युक्तमिति । वशस्स्थाने आन्तरतम्येन भषमेव प्रवर्त्यार्थोज्झकारस्य निवृत्तेरिति भावः । वस्तुतस्तु मदोज्झमाचष्टे मधोगित्यादौ कुत्वप्रवृत्या प्रयोगे ज्झन्तासंभवेपि भमङ्ग्णनमिति सूत्रस्थभाष्योक्तदिशा प्रातिपदिकसंख्यासाम्यमादाय परत्वादन्तरतमपरिभाषां बाधित्वा यथासंख्यशास्त्रप्रवृत्तौ गर्भवित्यादौ भकारापत्तेः । अत एव भष्भन्तस्येति नोक्तम् । स्थान्यादेशनिमित्तानां यथासंख्यविज्ञाने भान्तस्य यो वश् तस्य भ इत्यादि सूत्रार्थपर्यवसाने गर्दभमित्यादौ भष्भावानापत्तेरिति दिक् । मूले झलीतिनिवृत्तमिति । न च बुद्धिध्व इत्यत्र भष्भावनिवृत्तये ध्वमो झलीति विशेषणमावश्यकमिति वाच्यम् । इटो ध्वमो ऽनवयवत्वेपि भष्भावनिमित्तध्वशब्दानवयवत्वेनैकाच्ध्वशब्दयोरिटा व्यवधानेनादोषात् । तद्वाडिति । इदमयुक्तम् । भष्भावे प्रवृत्तेपि झलां जशोन्त इति जश्त्वेन पुनर्दकारप्रवृत्तेः । वशःकिमिति । झलां जशोन्त इति सूत्रस्थझल्ग्रहणमत्रैव कृत्वा जस्यैव भष्विधेय इति भावः । कारकं

प्रतीतेः । भावे क्विप्यपि न साध्यत्वमात्रेण भानं धात्वर्थस्येति तत्रापि धातुत्वं न सुलभमिति भावः । प्रत्ययनिमित्तकत्वाभावादिति । भ्रौणहत्ये तत्त्वनिपातनेन साक्षात्प्रत्ययनिमित्तककार्ये एवास्याः प्रवृत्तिरिति भावः । केचित्तु सशब्देन विहितप्रत्ययः क्विबेव तमाश्रित्यैव घुगित्यत्र धत्वादि । प्रत्ययनिमित्तककार्ये एवास्याः प्रवृत्तिरिति तु न । अनुदात्तस्य चर्दुपधस्याऽचि विभाषा इत्यादौ तदप्रवृत्त्यापत्तेरित्याहुः । इग्यणः । भाष्यविरोधादिति । ननु वकारस्य ऌकारोऽप्यन्तरतम इति तद्वारणाय यथासंख्यसम्बन्ध आवश्यक इति चेन्न । ऌकाराऽघटितत्वेनान्तर्याद्धकारस्यैव प्रवृत्तेः । अत्रपक्षइति । वर्णसंज्ञापक्ष इत्यर्थः । वचनप्रामाण्यादसिध्यतीति । अन्ये तु वर्णसंज्ञापक्षे न तद्भावितपक्षाश्रयणम् । सूत्रशाटकन्यायेनाप्यपरिहार्यस्यान्योन्याश्रयस्यापत्तेः । अद्युहितरामित्यत्र तु यथासंख्यविधानान्न दोषः । ऌकारोपदेशः किमर्थः । ऌकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थ इति कल्कसूत्रस्थ भाष्यं तु यथासंख्यशास्त्रप्रवृत्तेरप्युपलक्षणम् । एवं च वकारस्थाने ऌकारवारणायोक्त कुग्रहणाश्रयणमपि न । केचित्तु सम्प्रसारणस्येति दीर्घारम्भसामर्थ्येन सम्प्रसारणप्रत्ययनिमित्तकाङ्गावयवस्यैव हलः परस्य सम्प्रसारणान्ताङ्गस्यैव हल इति दीर्घविधानेनाद्युहितरामित्यत्र न दीर्घः । संप्रसारणनिमित्तप्रत्ययस्यैवाप्रसिद्धेः । उक्तार्थाश्रयणफलं तु निरुतामित्यादौ दीर्घाभाव इत्याहुस्तन्न । उत्तरपदनिमित्तकसम्प्रसारणस्य बहिरङ्गत्वेनासिद्धत्वाद्धल इति दीर्घाप्राप्ते । परत्वेनेको ह्रस्व इति ह्रस्वबाधनार्थत्वाच्च दीर्घस्य द्युभ्यामित्यत्र तु दिव उदिति तपरत्वसामर्थ्येन दीर्घबाधः । भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीत्यस्यार्थस्यापि तपरत्वं ज्ञापकमस्तु । एकस्यानेककल्पकत्वे बाधकाभावात् । वस्तुतोऽत्र उदिति तपरत्वं भाव्यमान इति परिभाषाया ज्ञापकम् । दूच इत्यस्याभिधाने चिकीर्षकः इत्यादिवद्बहिरङ्गत्वेनासिद्धत्वान्न तपरत्वसामर्थ्येन दीर्घत्वस्य वारणम् । द्युभ्यामित्यत्र तुल्यदीर्घत्वयोरन्तरङ्गपरत्वद्वाराभ्यां निमित्तकत्वेन नान्तरङ्गबहिरङ्गभावः । अक्षद्यूवरण इत्यत्रापि न पूर्वरूपम् । ऊठि पूर्वरूपात्परत्वादन्तरङ्गत्वाच्च तस्य हल इति दीर्घेऽल्विधित्वेन स्थानिवत्त्वेन सम्प्रसारणत्वाभावात् । यद्वा च्छ्वोः शूडित्यत्र ह्रस्वे विधातव्ये दीर्घविधानं च्छ्वोरिति विहितस्योठः सम्प्रसारणपदेनाग्रहणज्ञापनार्थं तेनाक्षद्यूवरण इत्यत्र न पूर्वरूपमिति दिगित्याहुः । सोऽपि द्युकाम-

इत्यत्र संप्रसारणस्येति दीर्घो न । उत्तरपदनिमित्तके संप्रसारणे एव तत्प्रवृत्तेः । न चाक्षद्यूरण इत्यत्र चरितार्थस्य संप्रसारणस्येति दीर्घविधानस्य सामर्थ्येन हल इति दीर्घस्य हूत इत्यादौ प्रवृत्तिर्न स्यात्पूर्वरूपस्य संप्रसारणत्वाभावादिति वाच्यम् । पूर्वरूपस्य संप्रसारणग्रहणेन ग्रहणत्वकल्पनादिति दिगित्याहुः । ननु संप्रसारणासंप्रसारणयोर्जातस्य पूर्वरूपस्य संप्रसारणाभावेन पूर्वरूपोत्तरं संप्रसारणं न स्यादित्याशङ्क्याह । नसंप्रसारणइति । इदमयुक्तं अचःपरेति स्थानिवत्वेन पूर्वरूपस्य संप्रसारणत्वात् । नचैवमिति । पूर्वरूपोत्तरं वचनप्रामाण्यान्निषेधप्रवृत्तावपि सवर्णदीर्घोत्तरमपि तत्प्रवृत्तौ मानाभाव इति भावः । अन्यत्रापिण्वुलिति । णिजन्ताद्विचि तु प्रष्ठोह इति रूपं दुर्लभम् । णिचा व्यवधानेनोठोऽप्रवृत्तेः । तत्रोपदेश इति । ऊत्वशास्त्रवैयर्थ्याभावादित्यर्थः । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते इति न्यायादिति भावः । भाष्यध्वनितत्वमेवाह । एवमेवेति । लोपेन प्रसयानुत्पत्तेरस्वीकारे एवेत्यर्थः । अन्ये तु विषयभेदेनोत्सर्गापवादभावः । अचि रादेशस्य नुडपवादत्वमपि न विषयभेदात् । निरूपितं चेदं सविस्तरं त्रिपथगायाम् । तथाचोत्सर्गापवादभावाभावे ऽनड्वान्निसस्य प्रत्ययलक्षणसूत्रासत्त्वे नित्यत्वात्सोर्लोपे नुमोरनापत्त्या तस्य तत्सूत्रोदाहरणत्वमुपपद्यत एव । इमनुम्विधिसामर्थ्येन भूतपूर्वगत्याश्रयणसंभाव्यन्यायमारब्धव्यर्थं प्रत्ययलक्षणसूत्रेणैव निर्वाह उचित इति भाष्याशयः । किं च लोपशास्त्रेणानुत्पत्तेरव्याख्यानेप्युत्सर्गापवादभावस्यावर्जनीयतया ऽमादिविषये हल्ङ्यादिसूत्रेण प्रत्ययानुत्पत्तेरेवान्वाख्यानमसंभावि । किं च हेगौरीत्यादौ सन्निपातपरिभाषया संबुद्धिलोपानापत्तिप्रतिपादकभाष्यासंगतिः । अपि च णिल्लोपशास्त्रेण णेरनुत्पत्तेरन्वाख्यानेनाटिटदित्यादौ सणिच्कस्य द्वित्वानापत्तिः । यदि च द्विर्वचनेचीति निषेधाद् द्वित्वे कर्तव्ये न तदनुत्पत्तिबुद्धिः । द्वित्वोत्तरं तु तदनुत्पत्तिरिति कथं चिदुच्यते तर्हि अनड्वानिसत्राप्यमा बाधात्तत्प्रवृत्तिकाले न तदनुत्पत्तिबुद्धिः पश्चात्तु तथेति सुवचम् । अतृणेडिति तदुदाहरणं तु भवत्येव । तृणेढीत्यादौ चरितार्थस्यमो हल्ङ्यादिलोपानपवादत्वादित्याहुः । तान्तस्य विधानमिति । इदमयुक्तम् । तपरस्तत्कालस्येति तत्कालस्य संज्ञित्वबोधनात् । सर्वादेशत्वापादनमिति । बोधकगतमनेकाल्त्वं बोध्ये उपकरोतीत्यभिप्रेत्येदम् । तदभावः फलमित्युक्तमिति । तित्स्वरितमित्यत्र

नित्यद् तिद्धोऽप्यपरमित्यभिप्रेत्येदम् । तथाच कैयटेनोक्तम् । निता प्रत्यायित सञ्ज्ञी सञ्ज्ञाधर्मेण कथ्यत इति अस्ति तद्व्यपदेश थादेशस्येति ।' एतेन तपरसूत्रेणान्त्यमात्रस्य विधेयत्वात्तत्रानेकाल्त्वशित्त्वयोरभावादिदमप्ययुक्तमित्यपास्तम् । उच्चारणार्थानामपीति पाठः । अनुनासिकपरस्यवेरिति । उच्चारणार्थाना विनैवेत्सञ्ज्ञानिवृत्तावननुनासिकपरस्य वे कुत्राप्यभावेन सूत्रस्य निर्विषयत्व स्यादिति भाव । उच्चारणार्थानामित्सञ्ज्ञा विना निवृत्त्यनिवृत्तिविचार काकदन्तपरीक्षामनुकरोतीति नानास्माभि सूक्ष्मेक्षिका कृता । अतएवसुव्युत्पत्तिरिति । इक्प्रत्ययान्तत्वादेव णौगमिरित्यादीति । आदिपदेन शुवो वचिरित्यादि सग्रह । नोपधालोपइति । वचिरित्यत्र सम्प्रसारणमप्येवमेव न । ऊणेति । इदमुतस्तपरत्व त्विति पूर्वग्रन्थेन विरुद्धम् । ज्ञापितेऽपि स्वस्मिन् चारिताऽर्थ्यासम्भवात् । ऊठो ऽप्रवृत्तौ व्यञ्जनस्य स्थाने आन्तर्याद् ह्रस्वस्यैव प्रवृत्ते । दीर्घस्यबहिरङ्गतयेति । उत्वदीर्घयोस्तुल्यनिमित्तकत्वेनान्तरङ्गबहिरङ्गभावो न युक्त । पदलोपवत्त्वाभावइति । षट्त्रिचतुर्भ्यो हलादि पदचतुर्भ्यश्चेत्यनयोश्चतुर्ग्रहणद्वयस्यानुकरणम् । षट्कतीत्यत्र तु चतुर्ग्रहणं कर्तव्यमेव । कतिग्रहणे न पठितेति स्वरूपग्रहणात् । रान्तस्य षट्सञ्ज्ञायान्तु पदत्रयमिति पदगौरवमिति भाव । सवार्थप्रधानएवेति । प्रधानाप्रधानयो प्रधानस्यैव ग्रहणमिति न्यायात् । परत्वस्यैवेति । अबाधितासम्बन्धेन शब्दनिष्ठपरत्वस्येत्यर्थः । तत्रसम्बन्धइति । इदशस्थले द्वयीगतिः । अवधित्वं पञ्चम्यर्थ । अवधिता निरूपकत्व वा । तथा च तत्र सम्बन्धे अवधित्वसम्बन्धे तन्निरूपितसम्बन्धे अवधित्वानिरूपितसम्बन्धे चेत्यर्थ । परम्परासम्बन्धेनेति । स्वबोधकप्रतियोगित्वसम्बन्धेनेत्यर्थ । गौणेर्थे न विभक्ति । प्रकृतिप्रत्ययार्थयो परम्परासम्बन्धेन नान्वय इत्युक्तार्थद्वये भाष्य साधकमाह । अतएवगङ्गायामिति । परम्परासम्बन्धेनान्वये तु गङ्गापदार्थस्य प्रवाहस्य समीपवर्तितीरनिष्ठत्वसम्बन्धेनाधारत्वे ऽन्वयसम्भवात् । स्वरितत्वप्रतिज्ञाश्रयण व्यर्थं स्यात् । एव गौणेर्थे विभक्त्युत्पत्तावपि बोध्यम् । इद भाष्य गङ्गापदस्य तीरे लक्षणामनाश्रित्योक्तम् । णत्वात्पूर्वमेवेति । इद द्वित्वविषये ऽसिद्ध नेति पूर्वत्रासिद्धमित्यस्यार्थमभिप्रेत्य । गस्यैवद्वित्वेइति । पूर्वत्रासिद्धमित्यस्य वर्णद्वित्वे प्रवृत्त्यभावे जश्त्वद्वित्वचर्त्वानामसिद्धत्वात्कुत्वे द्वित्वचर्त्वयोरसिद्धत्वाज्जश्त्वे तत्रश्चर्त्वस्यासिद्धत्वाद् गस्यैव द्वित्वे इत्यर्थ । गकारे झलि परे

इति । इदं गत्यैव द्वित्वमिति पूर्वोक्तं च स्वग्रन्थविरुद्धं स्वेन पूर्वं अवसाने चर्त्वस्य जश्त्वापवादत्वोक्तेः । उक्तरीत्यैवेति । अवसाने चर्त्वस्यासिद्धत्वादित्युक्तरीत्यैवेत्यर्थः । इत्येवार्थ इति । द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धमित्यर्थ इति भावः । अन्ये तु पूर्वत्रासिद्धीयमद्वित्व इदं पदद्वित्वविषये द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम् । उभौ साभ्यासस्येति वार्त्तिकसूत्राभ्यां लिङ्गाभ्यां तेन ऊर्णुनाव औजढदित्यादि सिद्धम् । अन्यथा परत्वाणत्वढत्वयोस्तदसिद्धिः । द्वित्वे कृते द्वित्वाश्रयस्य कार्ये कर्त्तव्ये ऽसिद्धत्वं नेत्यपि न मानाभावात् । अभ्यासे जश्त्वचर्त्वयोरेत्वतुकोरिति वार्तिकाच्च । अत एव फल्भजिग्रहणं ज्ञापकम् । अभ्यासादेशसिद्धत्वस्येति । अत एव हलिति सूत्रे भाष्ये उक्तं त्वद्रीत्या द्वित्वाश्रयस्यैव जश्त्वासिद्धत्वाभावेन ज्ञापकोपन्यासवैयर्थ्यम् । सुपि भूतो द्विरुच्यत इति पाठ इति दिगित्याहुः । सप्तमीबहुवचनमिति । न तु प्रत्याहारान्तर्गतानां सप्तमीबहुवचनभिन्नानां स्वरादित्वाभावात् । एवं चेति । सप्तमीबहुवचनस्य ग्रहणे सिद्धे इत्यर्थः । यथा च श्यामादावप्राप्तविधिसर्गविधिरयं नेति भावः । षडित्यन्वर्थसंज्ञेति । षडिकाचरतीति षट् । प्राधान्येन संख्येयबोधकः । टाप्निषेधानापत्तेरिति । स्त्रियां यन्नप्राप्नोति तन्नेत्यर्थाश्रयणसामर्थ्येन भूतपट्त्वमादाय निषेधप्रवृत्तेः स्वेनोक्तत्वेन वृत्तेः प्राक् स्थितपट्त्वमादाय निषेधप्रवृत्तेः संभवात् । चिन्त्यमेतत् । यद्वेत्युक्तं दूषयति । आकडारसूत्र इति । षड्भ्यइतिसूत्रविषयइति । तत्र हि षड्भ्यो लुगित्यत्र विहितविशेषणमाश्रितं त्वद्रीत्या प्रियषड्णामित्यत्र षट्त्वाभावादेव लुगप्रवृत्तौ तदाश्रयणवैयर्थ्यम् । इत्युक्तमिति । प्रधानाप्रधानन्यायेनोपसर्जने षट्त्ववारणमशक्यम् । प्रियपञ्चानामित्यत्र पञ्चनृशब्दस्य प्राधान्येन संख्येयबोधकत्वात् । अन्यथा त्रिचतुरोरित्यादावर्थवत्परिभाषया प्रधानन्यायेन च प्राधान्येन त्रित्वादिविशिष्टबोधकग्रहणे प्रियातिसेत्यादौ तिस्रादेशायनापत्तिरित्युक्तमित्यनेन ध्वनयति । अनभिधानमेवोचितमिति । सुध्युपास्यैत्यादिप्रयोगानुरोधेन । न पदान्ताः परेणः सन्तीति भाष्यस्य कार्यभाज इति पूरणावश्यकत्वे कमल् स्थत्वित्यादिरणोप्रगृह्यस्यैति कार्यभाक्त्वमस्त्येवेति भावः । यान्तास्तुनसन्तीति । एचो ऽयवायाव इति सौत्रो निर्देश इति भावः । अयादेश इत्याद्यभियुक्तप्रयोगाच्चिन्त्यमेतदिति केचित् । अङ्गानपेक्षत्वेनेति । संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणाच्चिन्त्यमेनदिति केचित् । अन्तरङ्गत्वा-

द्वित्वे ऽकजिति । अन्तरङ्गत्वापेक्षत्वेनाकचो बहिरङ्गत्वमिति कैयटोक्तरीत्येदम् । भाष्ये तु परत्वाद्द्वित्वमित्युक्तम् । ननु यद्यकच परत्वाद्द्वित्व तर्हि कादेशोपि परत्वात्तत प्राप्नोति । यद्यन्तरङ्गत्वाद्द्वित्वं कादेशोप्यन्तरङ्गत्वात्ततः प्राप्नोतीति चेन्न । अकज्विधौ तिङश्चेत्युक्त्या समनिमित्तकयोरकज्विभावयोः परत्वाद्द्वित्वे ऽकच् पश्चाद्भवत्विति ज्ञापकेन सुबुत्पत्त्यनन्तरमकजुत्पत्त्यावप्यकच प्रातिपदिकमात्रनिमित्तकत्वेनान्तरङ्गत्वादकचि ततः कादेश । अत एव त्वयाऽमादौ किमर्थेऽप्राप्तागकच् न तु सुबन्तस्य टे तदेतत्परत्वाद्द्वित्वे ऽकजिति इदम्यो हेरिति सूत्रस्थभाष्येण कादेश खल्वपि अवश्य साकच्कार्यो वक्तव्य इति त्यदादीनामिति सूत्रस्थभाष्येण च सूचित भवति । ननु सन्निकृष्ट साविति कुतो वा नानुवर्तत इत्याशङ्क्याह । साविदमिति । इदमुपलक्षणम् । य सावित्युत्तरसूत्रे सुग्रहणात्तेऽप्यपि बोध्यम् । अदन्तत्वाभावादिति । तस्य चेत्यनाश्रित्येदम् । विशिष्टशक्तत्वेति । सत्यन्यस्मिन्पूर्वो नास्ति तत्रादिशब्दस्य सत्यन्यस्मिन्यस्मात्परो नास्ति तत्रान्त्यशब्दस्य शक्तेयत्यर्थ । असहायेति । असहायत्व चात्र मुख्यव्यपदेशनिमित्तरहितत्वम् । तच्चौपगव आभ्यामित्यनयोरस्ति । सत्यन्यस्मिन्निति विशेषणस्याभावात् । तथा च यन्निरूपितमादित्वमन्त्यत्वमवयवत्व वा तस्यान्येय तदवयवस्वेतराद्वितीयासमभिव्याहारमसहायत्वम् । सभासश्रयने दरिद्राधातौ चाकार इत्यनयोर्नासहायत्वम् । तत्समुदायघटकस्वेतरवर्णसत्त्वात् । हरी इत्यादौ द्विवचननिरूपितमन्त्यत्वं ईकारस्यान्येय तदवयवः स्वेतरो न कोपीति असहायत्वं सुस्थम् । एवं व्यतिसे इत्यादावपि । हरिभ्यित्यादौ सोर्न पदत्वम् । यस्माद्विहितस्तदादेवयवकत्वस्य तत्तत्सत्वगर्भस्य व्यपदेशिवद्भावाळभ्यत्वादेवं प्रचिकीर्ष्य गत इत्यादौ नापादेश । अवयवत्वतद्व्याप्यधर्माणां व्यपदेशिवद्भावलभ्यत्वेपि लघुपूर्वत्वस्य तदलभ्यत्वात् । अत एव दधीत्यादौ न यण् । अचपरकत्वस्य व्यपदेशिवद्भावाळभ्यत्वात् । केचित्तु मुख्यव्यपदेशभागघटकत्वमसहायत्वमित्याहुः । अकोकोरीति । अनाप्यको नेश्मदसोरकोरित्यनयोरित्यर्थः । नन्वशो ऽनुदात्तत्वविधान व्यर्थम् । आभ्यामित्यादावृद्दिद पदादिति विभक्तेरुदात्तत्वेन शेषनिघातेनाशो ऽनुदात्तत्वसिद्धेरित्याशङ्क्याह । अनुदात्तावित्वति । शित्वादिति । अशविधानसामर्थ्याच्च निर्दिश्यमानपरिभाषा ऽकचो व्यावर्तनाय न प्रवर्त इति भाव । ननु तदादेरित्यस्य

विशेष्यतया तदन्तविधावनाभ्यामित्यादौ सङ्गट्कस्यादेशापत्तेर्निर्दिश्यमानपरिभाषाया अप्रवृत्तेरिति चेन्न। अकज्ज्याप्त्तिफलिकाया एव तस्या अप्रवृत्तिकल्पनात्। लुड्याप्तिका सा प्रवर्त्तत एव। नञ् संज्ञोपसर्जनयोस्त्वदायत्वात्प्रवृत्तावश्वचनं सार्थकमिति न तत्सामर्थ्यम्। तथा च साकच्के निर्दिश्यमानपरिभाषया ऽऽदेशो न स्यादित्याशङ्क्याह। संज्ञोपसर्जनयोरिति। अन्यार्थापत्तेरिति। आभ्यामित्यादौ दीर्घादिबाधनार्थत्वापत्तेरित्यर्थः। नकारलोपइत्यर्थइति। इदानीन्तनमूलपुस्तकेषु नलोप इत्येव पाठः। पर्युदासइति। प्रसज्यप्रतिषेधे तु पूर्वजातप्रातिपदिकत्वस्यापि निवृत्त्यापत्तिरिति भावः। अतएवेति। सप्तम्यन्ताद्राजन्शब्दात्क्यचो ऽनभिधानादेवेत्यर्थः। नलोपःसुप्। नियमशास्त्राणां विधिमुखेनैव प्रवृत्तिर्न निषेधमुखेनेत्याह। अन्यनिवृत्तिफलकेति। पक्षप्रशायामिति। स्वशेर्यङन्तादप्रत्यये संज्ञापूर्वकविधेरनित्यत्वात्पृषोदरादित्वाद्वा साधुः। गम्यतइत्युक्तमिति। तेन प्रतिषेधस्याशाब्दत्वमुक्तं भवति। कृन्मेजन्त इति सूत्रस्थेङ्विधिराकारलोपस्येति भाष्यं भोभगो इति सूत्रस्थं किं पुनः कारणं सुकारपर एवोदाह्रियत इति भाष्यं चात्रार्थे गमकं बोध्यम्। प्रतिषेधस्य शाब्दत्वे स्वार्थहानिपरार्थकल्पनयोरापत्तिश्च दोषो बोध्यः। न च मूलकेनोपदंशमित्यत्र कृदन्तत्वप्रयुक्तप्राप्तस्य समासग्रहणकृतनियमेन परत्वाद्बाधो न स्यादिति वाच्यम्। गम्यप्रतिषेधस्यैव परत्वेन बाधकत्वसंभवात्। यत्तु एच इगिति सूत्रस्थं भाष्यं नानेनेको निवर्त्यन्तेपि तु अनिको निवर्त्यन्ते। तच्च वार्त्तिकमुभयप्राप्तौ कर्मणीति निषेधे कादिप्रयोगे ऽप्रतिषेध इति तदुभयं गम्यमानप्रतिषेधपरम्। नानेनकोनिवर्त्यन्ते इत्यस्य नानेनेको ऽपूर्वो विधीयन्त इत्यर्थः। अप्राप्तसिद्धत्वेति। परत्र पत्वे पूर्वस्य नलोपस्यासिद्धत्वाप्राप्तेरित्यर्थः। वैरूप्येति। स्वरविध्यादौ नियमार्थत्वं सुप् विधौ तु विध्यर्थत्वमिति वैरूप्येत्यर्थः। वस्तुतस्तु क्रादिसूत्रवत् कृत्तद्धित इति सूत्र इव च नियमशास्त्राणां विधिमुखेन प्रवृत्त्या शाब्दबोधे न वैरूप्यम्। तस्य पूर्वं पदत्वेइति। एतत्फलं तु शुल्हावित्यत्र द्वन्द्वे घीति पूर्वनिपातः। कृतीतिकिमीति। कृति परतो विधौ नलोपो सिद्ध इत्येव सिद्धे तुग्ग्रहणं चिन्त्यप्रयोजनम्। अस्मादेवेति। एतत्प्रयोजनं चिन्त्यम्। वाह ऊठ्सूत्रस्थोट्ग्रहणस्य बहिरङ्गपरिभाषायां ज्ञापकत्वस्य भाष्योक्तस्यासंगतिश्चाकृति तुगेव नेति। अयं सूत्रतात्पर्यविषयो नियमो न तु शब्दमर्यादया

लभ्य, इति बोध्यम् । स्पष्टार्थमिति । अन्तग्रहणाभावे वम इत्यस्य षष्ठी स्वमभावनाया मकारमकारसबन्धी यः संयोग इत्यर्थः स्यात्ततश्च जम्भासु-हरितृणसोमेभ्य इति कृतसमासे तस्य सुजम्भादे, शसादौ निषेधापत्ति-रिति केचित् । वमादिति न्यासे तु दोषाश्रिन्त्य । श्रीकृष्णभट्टास्तु येन-विधिस्तदन्तस्येत्यस्यानित्यत्वज्ञापकमन्तग्रहणमिति समासप्रत्ययविधौ प्रतिषेध इति सिद्धमित्याहु । वृत्रहणी इत्यायनेकोदाहरणोपन्यसन वैचित्र्यार्थम् । नियमशास्त्रा-णा विधिमुखेन प्रवृत्तेरित्याशङ्क्याह । एतत्फलभूतेइति । ननु नुग्रहयतीत्यभाव्य-मशान एव स्यान्न द्वाभ्यां व्यवधाने घातक इत्यादावित्याशङ्क्याह । इदमिति । प्र-घनोघन इत्यत्रेति । केचित्वभ्यासस्य निरर्थकत्वान्नात्र णत्वम् । मूर्तौ घन इति निपात उपसर्गयोगे प्रघन इत्यत्र वार्त्तिकमतेऽपि प्राप्तणत्ववारणाय अगारैकदेशे प्रघण इति ङाणत्वनिर्देशस्योपसर्गात्परस्य घनो नस्य णत्व नेत्यर्थज्ञापकत्वाश्रयणाचेत्या-हु । हादेशेऽपीति । अर्थत. कवर्गविशेषण तत्फल तु करणे योविद्ध्विवित्यनेन हन्तेरप्रत्यये घनादेशे च द्रुघ्रण इत्यत्र पूर्वपदात्सज्ञेति णत्वसिद्धि । हस्थानिककव-र्गाभावात् । ननु घ्नन्ति इत्यादौ न णत्वम् । नकारमुपजीव्य जातस्य तद्विघातकण-त्वानिमित्तत्वादिति चेन्न । त्रैपादिके कार्ये सन्निपातपरिभाषाया अप्रवृत्ते । अत्र-चेद वार्त्तिक भाष्य च मानम् । तेन जग्धमित्यादौ घत्वादिसिद्धिरित्यन्यत्र विस्तर । मूलेऽनिनस्मिन्निति । अह्नोऽपीन । अन उदाहरण राज्ञ, अस्मना । इन उदा-हरणमिन्द्न् । दण्डी, वाग्मी । अस उदाहरण अत्वमन्तस्य चाधातो, । सुपयाः सुस्तोता । मन उदाहरण । मन, सुशर्मा, सुप्रथिमा । अत्र च ज्ञापकमत्वसन्त-स्येति सूत्रे ऽधातोरिति पर्युदास । न सयोगादिति निषेधश्च । असतोरपि यज्वानौ ब्राह्मणश्च णिजन्ताद्विपि तस्मिन्नुपपदे ऽनितेर्वाच निषेधौ सफलाविति केचित् । अलैयानर्थकेनेति । अत्र च ज्ञापक नेदमदसोरिति सूत्रे ऽदसो ग्रहणम् । इति युवो-रनकारान्तेनेति । इति शब्देनातिप्रसङ्गाभावरूपसाध्यांशमात्र विवक्षितम् । भाष्ये नपुंसकस्य झलच इति सूत्रे योगविभागेनोक्तार्थज्ञापनात् । तत्रेति । थगिद्ध-त्वाभावकल्पने एव । असाधुत्वकल्पनइति । अविशेषेण प्रवृत्तवार्तिकस्य कनिप्रत्ययान्तविषयकत्वस्यापि कल्पनात् । मतुप्वन्योर्विधानादित्युक्तग्रन्थरोधेन वनिबन्तविषयकत्वे तु कल्पनार्थ तदावश्यकत्वेन मनोनश्च न शिवामित्यागम

स्यादिति भावः । ननु कनिन्प्रत्ययस्य लोकवेदसाधारण्येन विधानादुक्तवार्तिकस्य कन्यन्तविषयमसंभवीत्याशङ्क्याह । तथाचेति । ननु निपातितान्तोदात्तमादाय मघोन इत्यस्य सिद्धावपि वनिवन्तमादाय यस्येति चेति लोपः स्यादित्याशङ्क्याह । छन्दसीति । नाल्लोपेति । अल्लोपो दृष्टान्तार्थः । अन्नन्तत्वाभावादिति । ननु वस्नसादाविव स्थानिवद्भावेनान्नन्तत्वं सुलभम् । आनुमानिकस्थान्यादेशभावाश्रयणात् । स्थानिनि मघवन्शब्दे ऽन्नन्तत्वसत्त्वात् । न चान्नन्तत्वविशेषणवैयर्थ्यम् । युवतीः पश्येत्यादौ संप्रसारणनिवृत्त्यर्थत्वात् । न चात्र विभक्तौ लिङ्गविशिष्टाग्रहणमिति निषेधः शङ्क्यः । तदननुसंधानेनैव तत्प्रवृत्तेरिति चेन्न । अन इत्युभयोः शेष इति भाष्यस्याकारवकारयोरुक्तं कार्यद्वयम् । अन्संबन्धिनोस्तयोर्बोध्यमिति वाक्यार्थाश्रयणेनादोषात् । अन्नन्तत्वाभावादिति शेखरग्रन्थो न चादेशे कृते ऽन्नन्तत्वमस्तीति कैयटग्रन्थश्चासंगत एव । अल्लोपदृष्टान्तोऽप्ययुक्तः । अनो ऽकारस्यैव लोपविधानेनान्नन्तत्वस्य श्रौतमानुमानिकं च स्थानिवत्त्वमाश्रित्य दुर्लभत्वेन धीवरीत्यादिवल्लोपवारणस्य सुकरत्वेऽप्यन्नन्तत्वमाश्रित्य प्रवर्त्तमानसंप्रसारणस्य दुर्वारत्वात् । अथवा युवतीः पश्येत्यादौ विभक्तौ लिङ्गविशिष्टाग्रहणमिति परिभाषया संप्रसारणाभावमभिप्रेत्यानं इत्युभयोः शेष इति भाष्यं प्रवृत्तम् । एवञ्चानामित्यर्थेऽपि न दोषः । विशेषणसामर्थ्येन श्रूयमाणान्नन्तत्वविवक्षणात् । लिङ्गविशिष्टाग्रहणादिति । इदमुपलक्षणम् । झलन्तस्योभितो ऽग्रहणादित्यपि बोध्यम् । सर्वानुदात्तं स्यादिति । न गोश्वन्नित्युदात्तनिवृत्तिस्वरस्यापि निषेधाङ्गीकारादिति भावः । सावेकाच इत्यस्यैव न गोश्वन्निति निषेध इत्यभिप्रेत्याह । उदात्तनिवृत्तिस्वरेणेति । अत्रायपक्ष एव श्रेयानेवन्तर्हि न वयं लक्षणस्य प्रतिषेधं शिष्मः किं तर्हि येन केन चित्प्राप्तस्य विभक्तिस्वरस्यायं प्रतिषेध इति असिद्धवत्सूत्रस्थभाष्याविरोधः । यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत नेदं शक्यमिति तदुत्तरभाष्यं तु विभक्तिग्रहणमनुवर्त्त्य स्वरमात्रप्रतिषेधपक्षखण्डनपरम् । आद्युदात्तत्वमिष्यतइति । सावेकाच इति विभक्तिस्वरस्तु न गोश्वन्निति प्रतिषिद्ध इति भावः । इदमयुक्तम् । अल्लोपपक्षेऽप्युक्तरीत्योदात्तनिवृत्तिस्वराप्रवृत्तौ ङिप इत्यस्य पुनः प्रवृत्त्या ङ्नेत्यस्याद्युदात्तत्वात् । न च लक्ष्ये लक्षणस्येति न्यायावतारः स्थानिभेदेन संप्रसारणस्येव ङिप इत्यस्यापि पुनः प्रवृत्तिसंभवात् ।

अत एवासिद्धवत्सूत्रे भाष्ये ऽल्लोपेन वा निवृत्तौ पूर्वत्वेन वा निवृत्तौ स्वरे विशेषाभावप्रतिपादनं सङ्गच्छते। तस्मात्सर्वनिषेध इति। मात्रशब्दः कार्त्स्न्ये सर्वसम्प्रसारणनिषेध इत्यर्थः। पूर्वमिति। यकारस्य सम्प्रसारणप्राप्ते पूर्वं पूर्वरूपोत्तरसवर्णदीर्घरूपैकादेश इत्यर्थः। नन्वनत्र किमिति प्रश्ने ऽनवा यज्ववदिति द्वयन्नोपपद्यते ऽस्याविति प्रतिनिधिविषयत्वेन द्वयङ्विकलत्वादत आह। अनङ्प्रत्युदाहरणमयेनेति। अनर्वन्शब्दोऽव्यावर्त्यइत्यर्थइति। तत्फलन्त्ववर्णाग्वित्यादीनि भाव्यः। ननु परस्मैपदानामित्यादाविवाकारसमुदायस्य विधेयत्वे ऽनेकाल्त्वात्सर्वादेशः स्यादित्याशङ्क्याह। विशेष्येति। भाष्येत्विति। अत्र आ विभक्ताविति सूत्रे इति शेषः। एतेन पथिमथोति सूत्र एव भाष्ये नोपलभ्यत इति कस्य चिच्छङ्का निरस्ता। तस्यात्स्येति। गुणाभेदकत्वप्रयुक्ता प्राप्तिः। प्रश्नेप्राग्निवार्येत इति दीर्घेऽत्रोक्त दूषणमनवाप्तस्मात्। केचिदिति। इदमसम्मितिति। प्रतिपत्तिलाघवेन तथैवोच्चारणे कर्तव्ये। इत्यादिभाष्योक्तमा आदिति प्रश्नेपादिति सूत्रोक्तं चेत्यर्थः। गुणाभेदकत्वेन प्राप्तस्य जातिपक्षेण प्राप्तस्य चेत्यर्थः। अतएवेति। गुणाभेदकत्वप्रयुक्तप्राप्तेरप्यणनन्यसाधारण्येनाप्रत्यय इत्यनेन निषेधादेवेत्यर्थः। इत्युक्तमिति। पण्णां ग्रहस्य प्राप्तत्वेन जातिपक्षगुणाभेदकत्वपक्षयोस्तपरसूत्रस्य नियमार्थत्वेन प्रापकत्वासंभवादिति पाठक्रमत्र। नियमशास्त्राणां विधिमुखेन प्रवृत्ते। गुणाभेदकत्वेन प्राप्नोतीत्यनुक्त्वा तपरस्तत्कालस्येति प्राप्नोतीत्युक्त्या गुणाभेदकत्वेन प्राप्तस्याप्यप्रत्यय इत्यनेन निषेध इति सूचितं भवतीत्याशयस्तु चिन्त्यः। तथा च तपरस्तत्कालस्येति प्राप्नोतीति भाष्ये गुणा अभेदका इत्यभिप्रायकम्। सर्वत्र सर्वनिषेधे जातिपक्षप्रयुक्तप्राप्तेश्च प्रतिषेधकमित्यर्थः। तत्रेति। अप्रत्यय इत्यत्रेत्यर्थः। तदाशय। गुणाभेदकत्वेन प्राप्नोतीत्यनुक्त्वा तपरस्तत्कालस्येति प्राप्नोतीति वदतो भाष्यकारस्याशय इत्यर्थः। गुणाभेदकजातिपक्षयोरणग्रहणस्याभावेनाणग्रहणस्य च तत्रसम्बन्ध इत्ययुक्तमिति बोध्यम्। अत एव। अप्रत्यय इत्यत्राणग्रहणासम्बन्धादेव। ननु जशादिविधौ जश्त्वजात्याश्रयसंज्ञकारग्रहणासिद्धिः। भाष्यमानेनेति निषेधात् तत्र चाणग्रहणमस्त्वादित्यत आह। परिभाषायामिति। पश्वानामित्यादाविति। नन्वन्त्यबाधे ऽन्त्यसदेशस्येति परिभाषया सिद्धे उपधाग्रहणं व्यर्थम्। अत उपधाया णौ चङ्युपधाया इत्यादावुपधाग्रहणं न व्यर्थम्। ननन्द अचका-

द्धसिदित्यादौ वारणार्थत्वात् । अत्र हि नोक्तपरिभाषया निस्तारः । अन्त्यसदेशान-न्त्यसदेशयोरेकस्मिन् लक्ष्ये प्राप्त्यभावादिति चेन्न । पक्कारावित्यादावृतोङीति गुणं बाधित्वा दीर्घवारणायोत्तरार्थं तदावश्यकत्वात् । चतुर्णामिति । इदं तितऊना-मित्यस्योपलक्षणम् । लिङ्गादिति । वस्तुतस्तु अस्मान्निर्देशान्नतिसृचतसृ इति धर्मिग्राहकमानाच्च त्रिपायां सन्निपातपरिभाषा न प्रवर्तत इति तत्वम् । तत्रापि प्रश्लिष्टेति । ननु प्रश्लेषेऽपि गुणाभेदकत्वाश्रयणेन प्रश्लेषवैयर्थ्यमित्याशङ्क्याह । प्रश्लेषेणेति । एवमन्यत्रापीति । आ सर्वनाम्न इत्यादौ । ऊडिति । डित्वमादेः परस्येत्यस्य बाधनार्थं अष्टन्शब्दो घृतादित्वादन्तोदात्तः । व्यर्थमन्नतादिति । तथाचात्वस्य वैकल्पिकत्वेन च प्रक्रियालाघवायाशि विधातव्ये उङ्विधानसाम-र्थ्यात्पूर्वं गुणे ततो वृद्धौ रूपसिद्धिरिति वाच्यम् । लशि नादिर्वेति निषेधेन पूर्व-सवर्णदीर्घस्याप्रवृत्त्याडि तस्य तस्माच्छसोनेति नत्वस्य च प्रवृत्त्या फलभेदाज्ज्ञापि-तेऽपि स्वस्मिन्न चारितार्थ्यमिति भावः । कार्यकालपक्षइति । यथोद्देशपक्षे तु झल्यु-पोत्तममिति स्वरे ऽङ्विधिभिन्ने स्वरे कर्त्तव्ये स्थानिवत्त्वेन पट्त्वं सुलभं पट्-त्वस्य समुदायवृत्तित्वेनाल्वृत्तित्वाभावात् । भविष्यति किञ्चित्कार्यमित्यभिसंधा-यात्वप्रवृत्तेः पूर्वकार्याभावेऽपि पट्त्वप्रवृत्तेः । ननुकार्यकालपक्षे आत्वात्पूर्वं कार्या-भावेन पट्त्वाप्रवृत्तावपि परत्वान्नित्यत्वाच्च झल्युपोत्तममिति बाधित्वा ऽत्वे कृते स्थानिवद्भावेन नान्तत्वमाश्रित्य पट्संज्ञा क्रियत इत्याशङ्क्याह । अल्विधित्वे-नेति । यथोद्देशपक्षस्यैवेति । ननु यथोद्देशपक्षस्यैवाश्रयणेन ज्ञापनेऽपि स्वस्मिन्न चा-रितार्थ्यम् । अष्टन्शब्दस्य त्रेः संख्याया इत्याद्युदात्ततया ऽन्तानुदात्तत्ववारणा-याष्टनो दीर्घादित्यस्य शसि प्रवृत्तावश्यकतया तत्र झल्युपोत्तममित्यस्याप्राप्तया चरितार्थस्याष्टनो दीर्घादित्यस्याष्टाभिरित्यादौ झल्युपोत्तममित्यनेन परत्वाद्बाधः स्यादेवेति चेन्न । अष्टन्शब्दस्य घृतादित्वेनान्तोदात्तत्वात् । नन्वेवमपि दीर्घग्रह-णस्य न स्वस्मिन्चारितार्थ्यम् स्वरविधौ स्थानिवत्वनिषेधेनाष्टाभिरित्यत्र झल्युपो-त्तममित्यस्याप्राप्तेरिति चेन्न । अनन्तरस्येति न्यायेनानः परस्मिन्नित्यस्य स निषेध इत्यङ्गीकारात् । नन्वेवं सत्यष्टनामित्यत्राष्टनो दीर्घादिति विभक्त्युदात्तत्वं न स्यात् । नलोपस्यासिद्धत्वेनाष्टन्शब्दस्य दीर्घान्तत्वाभावादित्याशङ्क्याह । अन्तो-दात्तत्वेनेति । तत्प्रकृतेऽङीति । नुटि कृते इत्यर्थः । तथाच नुट्दृष्ट्या नलोप-

स्यासिद्धत्वेन नुटो न, स्वोपजीव्यविधानकादर्शनमिति सन्निपातपरिभाषायाः प्रवृत्तिरिति न वाच्यमिति भाव । इदं कार्यकालपक्षेपि, बहिरङ्गपरिभाषायास्त्रिपाद्याम- प्रवृत्तिप्रतिपादकस्वग्रन्थविरुद्धम् । नार्कुट इत्यस्य पूर्वत्र वृद्धौ, कृतायामपि परस्य विसर्गस्यासिद्धत्वाश्रयणेन त्रिपाद्या तदप्रवृत्त्युपपादनात् । अन्तरङ्गपरिभाषादृष्ट्या विसर्गासिद्धत्वं तु तत्र पक्षे न त्रिपाद्या तदप्रवृत्त्युपपादकम् । यद्यपि तत्रासिद्ध तारिह सिद्धमिति भाष्योक्तरीत्या तत्र पक्षे ऽसिद्धवत्त्रेऽप्यन्यपरिभाषाणामिवास्या अपि प्रवृत्तेर्दुर्वारत्वात् । आशास्त्रीयत्वेनेति । राजन्यामित्यादौ नान्तत्वस्यादन्त- त्वाभावस्य वा अशास्त्रीयस्य दीर्घप्रवृत्तये ऽतिदेशदर्शनादिदमयुक्तम् । सुबादि- विधावेव नलोपस्यासिद्धत्वेन सन्निपातपरिभाषया नलोपस्यासिद्धत्वेन नाभाव । सुब्विधौ कृते इत्यर्थं तु न मानमिति वक्तुं युक्तम् । नलोपोवेति । वाशब्द इवार्थे । नन्वेवमात्वे हलीत्यस्यापकर्ष । परत्वान्नित्यत्वाच्च नुट, बाधित्वा ऽत्वे नुट् न स्यादिति तत्प्रवृत्तये । यदि च कृतात्वस्यापि पट्त्व तदा स व्यर्थ इत्याश- ङ्क्याह । कार्यकालपक्षेइति । ननु कार्यकालेपि नुडर्थं पट्सञ्ज्ञाया, ततः प्राप्तन्नुट परत्वाद्बाधित्वा ऽत्वेपि स्थानिवत्त्वेन पट्त्वमाश्रित्य नुट्सुलभ इत्याशङ्क्याह । तत्सिद्धिरीति । ततश्च नुटमिव पट्त्वमपि बाधित्वा परत्वादात्वमिति भावः । नन्नु लक्ष्यानुरोधेन यथोद्देशपक्षस्यैवाश्रयणेन नुट्सिद्धौ कार्यकालपक्षाश्रयणेन दोषो द्भावन तत्परिहाराय हलीत्यपकर्षश्चायुक्त इत्याशङ्क्याह । दीर्घग्रहणादिति । मात- पत्तिगौरवमिति । हलीत्यपकर्षापेक्षयेत्यादि । वस्तुतस्तु यथोद्देशपक्षे पट्त्वस्य स्थानिवद्भावेन सुलभत्वे पट्सञ्ज्ञायामुपदेशवचन कर्त्तव्यम् । तानाप्तनो नुडर्थं अष्टानामित्यनात्वे कृते पट्सञ्ज्ञा न प्राप्नोत्युपदेशग्रहणादवर्ततीति भाष्यवार्त्तिकयो- रसङ्गति । तस्मात् पट्त्वस्य नान्तत्वविशिष्टसङ्ख्यावाचकत्वेनाल्पटितत्वान्नातिदेश- साध्यत्वम् । सञ्ज्ञापदस्य तद्विधावुद्देश्यतावच्छेदकरूपेणैव प्रायेण सञ्ज्ञिबोधक- त्वात् । अन्ये तु हलीत्यपकर्षे नुटि कृते न आत्वं सन्निपातपरिभाषाविरोधात् । नलोपे तु न सा न तिष्ठिति धर्मिग्राहकमानेन सपादसप्ताध्याय्यामेव तत्प्रवृत्ते । अत एव जग्मिमित्यादौ घत्वादिः । अत एव दोदद्घोरिति सूत्रे, भाष्ये दान्तत्वे धान्तत्वे च नत्वधत्वे धान्तत्वे ऽदोपस्तस्मात्यान्त एवेत्युक्तम् । एवं च हलीत्यु- भयो शेष इति प्रतीकमुपादाय नुटि कृते आत्वमिति कैयटग्रन्थश्चासङ्गत एवेत्याहु ।

तज्ज्ञाप्यत्वमपि नेति । इदमयुक्तम् । प्रियाष्टानौ प्रियाष्टान इति न सिद्ध्यति प्रियाष्टानौ प्रियाष्टान इति प्राप्नोतीति ष्णान्तेति सूत्रस्थभाष्यविरोधात् । तत्र श्रात्वं कृत्वौश्च कृतो हलीत्यस्यापकर्षपक्षे प्रियाष्टाभ्यामित्यादाविव प्रियाष्टानामित्यादावप्यात्वप्रवृत्तेः सुलभत्वाच्च । अत एव । अनभिधानादेवा विशेषणार्थं इति । अन्यथा ऽनुनासिकस्य क्विझलोरित्यादाविव क्विपोपि गृहणापत्तिरिति भावः । वस्तुतस्तदनुबन्धकगृहणेति परिभाषायाः क्विपोऽग्रहणे सिद्धे न कोपि व्यर्थ एवेति भाष्यकैयटयोः स्पष्टम् । णिजादीनामिति । णिचः कृत्वे देवदत्तेन पाचयतीत्यादौ कर्तृकर्मणोरिति षष्ठ्यापत्तिः णिचः प्रकृतेः पचेरर्थे देवदत्तस्य कर्तृत्वात् । जनजनने इत्यस्माण्णिचि जनिवध्योरिति वृद्धिनिषेधापत्तिः । किञ्च चेचीयत इत्यादावकृत्सार्वेति दीर्घानापत्तिः । यङन्तत्वात् । रुदादिवेति । नन्विदमयुक्तमिति चेन्न । नेड्वशीत्यत्र तिङो व्यावर्त्यत्वासंभवेन कृद्ग्रहणसामर्थ्येन कृत्वावच्छेदेन क्रादिनियमं बाधित्वाऽस्य प्रवृत्तिविज्ञानादित्याशयात् । नेड्वशीत्यस्यापि क्रादिनियमेन बाधात् रुदिषमित्युचितम् । तत्र हि रुदादिभ्यःसार्वतीडिष्यते कृते तु नेड्वशीति निषेधः स्यात् । ज्ञापकेनेति । अकृत्सार्वधातुकेति सूत्रे सार्वधातुकग्रहणेन तिङां कृत्सञ्ज्ञाभावकल्पनयेति भावः । ननु जागृयादित्यत्र रीङोऽप्रवृत्तये क्रियादित्यत्र तत्प्रवृत्तये रिङ्विधावसार्वधातुकग्रहणमावस्याष्टुवृत्त्यर्थं तदिति चेन्न । एकदेशानुवृत्तौ मानाभावेन तत्रापि समुदायानुवृत्तौ लिङ्ग्रहणवैयर्थ्यापातेन पर्युदासस्यैवाऽप्रवृत्तेरित्याशयात् । किनोघइति । यद्यप्यल्पप्राणप्रयत्नसाम्यादिति वक्तुमुचितम् । तथापि वकारस्य महाप्राणता किनो घ इति वदेदिति कैयटोत्प्रेक्षिन्यासानुमेयेति विवरणे स्पष्टम् । इति मते इति । यदात्वन्येभ्योपि दृश्यत इति दृशिग्रहणात् किंवचीत्यादि सिद्धमित्युच्यते तदानेन षट्वमात्रं पदान्ते विधीयते क्विप् दीर्घौ त्वन्येभ्योपि दृश्यत इति बोध्यः । भाष्येऽस्वनितमिति । तत्र हि सुगणीति न्यासे तदोःससावित्यत्रानेष इत्यादौ सत्वंवारणाय तदोरिति न वक्तव्यं तोरित्येव सिद्धेरित्युक्तम् । अत एवेति । शेषग्रहणस्य विभक्तिविशेषणादेव । एवंचेति । मपर्यन्तात्छेषबोधकत्वाभावे इत्यर्थः । हलन्ता एव आदेशा इति । तत्र हि भाष्ये द्विपर्यन्तानामिति वचनप्रत्याख्यानाय शेषे लोप इत्यस्य ज्ञापकत्वमुक्त्वा टिलोपग्रहणभावार्थं इत्यादिना शेषग्रहणस्य टिलोपार्थत्वमुक्त्वा तत्खण्डितम् । एवमपि त्वाद्यादेशानामदन्तत्वे वार्णादाङ्गस्य बलीयस्त्वा-

त्परूप वाधित्वा शेषे-लोपे टाप् प्रसङ्गादवस्थ्य मनसि कृत्य तवममादिषु चादेः शेषवकार उच्चारणार्थो हलन्ता एव त्वादेशा इति न कश्चिन् टाप्प्रसङ्ग इत्युक्तम् । ननु हलन्ता आदेशा इति पक्षे णिजन्तात्क्विपि मान्तयोर्हलन्तेषु त्वाहादेशेषु कृतेषु शेषेलोपे वकारहकारयोर्निवृत्त्यापत्तिरित्याशङ्क्याह । णिजन्तादिवति । णिचमाश्रित्य तु न प्रत्ययोत्तरपदयोरित्यादिश. । बहुत्वार्थकाभ्यामेव ताभ्या णिज्विवक्षणात् । इदमुपलक्षणमिति । न तु विशेषणमित्यर्थ । अत्रैवोक्तत्वेनेति । त्वदादीनामित्यत्रैवोक्तत्वेनेत्यर्थ । युष्मय्यमिति । सयोगान्तलोपस्तु न झलग्रहणसबन्धादिति भाव. । अत एवेति । अर्थद्वयस्य व्यवस्थितत्वादेव । शेषलोप इत्यस्यार्थद्वये तात्पर्यमित्यश भ्यामादेशोपि युक्त इत्यश च द्रूपयितुमाह । वस्तुतइति । अम्यम् । सूत्रे इति । पूर्वोक्तस्य वस्तुतस्त्वित्यस्यात्रापि सबन्ध. । अन्तरङ्गत्वादिति । अज्ञातार्थानपेक्षत्वेनेति शेष । वस्तुतस्तु परत्वाच्छ्वादिषु पश्चादकचीति युक्तम् । अत एव तुह्यस्येति सूत्रे भाष्ये भिन्धकीत्यत्र परत्वाद्विभावे ऽकजदित्युक्तम् । युवकाभ्यामिति । औकारसकारभकारादाविति न निमित्तकोटिप्रविष्ट किन्त्वौकारसकारभकारभिन्नविभक्तौ युष्मदस्मदो सुबन्तयोष्टे प्रागकजित्येव वचनशरीरम् । इतरविभक्तौ त्वर्थात्सुबुत्पत्ते प्रागेव प्रातिपदिकस्य टे प्रागकजित्याश्रित्येदम् । अन्यथा भिन्धकीत्यादाविव परत्वाच्छ्वयो पश्चादकचि दोषाभावादसङ्गमेतत्स्यात् । उक्तव्याख्याने तु विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात्किमादाविव युष्मदस्मदोर्म्पर्यादेशात्पूर्वमकचि निर्दिश्यमानपरिभाषया युवावौ न स्यातामिति दोष स्पष्ट । अग्रेकस्यचित्तत्वेऽवेति । अङ्गुष्ठमारभ्य मस्तकान्त कुष्ठ इत्येव प्रयोग । न तु मस्तकपर्यन्तमपीति भाव । पदकार्यविषयइति । सर्वनामप्रकरणे सञ्ज्ञाव्याप्तेरभिव्यक्तपदार्थेति न्यायेन स्वयमभिधानात् । तद्विरुद्धमेतत्"। अत एवेति । आदेशप्रवृत्तेरनिष्टत्वादेवेत्यर्थ । प्रयोगदर्शनामिति त्वादेशघटितप्रयोगदर्शनमित्यर्थ । ननु यूयमित्यत्र शीभावस्य प्रत्ययकार्यत्वेनाङ्गकार्यत्वाभावेनोक्तपरिभाषया तद्वारणसभव इत्याशङ्क्याह । अङ्गविकारस्येत्यर्थइति । ननु विशेषणसमासे मकारस्य पूर्वनिपातापत्ति । असमासे सयोगान्तलोपप्रवृत्तौ म इत्यस्य श्रवणापत्तिरित्याशङ्क्याह । सहितयापाठेइति । तथा च मकारद्वयोच्चारणेपि न व्यञ्जनपरस्येति न्यायेनैकमकारोच्चारणादनिर्देश । असहितया पाठे तु व्यञ्जनपरत्वाभावे वि-

शेषः स्यादेवेति भावः । केचित्तु संहितया पाठे जातिपक्षाश्रयणेन द्वयोरपि मकारयो-रेक एवादेश इति भाव इत्याहुः । सुटस्त्विति । ननु यदागमन्यायस्यातिदेशरूपत्वपर्य-वसानात्तन्न्यायकृतसन्निपातविघाताभावेपि वास्तवसंनिपातविघातस्त्वस्त्येवेति परिभा-षाप्रवृत्तिर्दुर्वारा । अत एव कन्मेजन्त इति सूत्रे आत्वं पुग्विधेरनिमित्तं स्यात्क्रापयती-त्युक्तमिति चेन्न । यदागमन्यायस्यातिदेशत्वं नेत्याशयात । आत्वं पुग्विधेरनिमित्त-मित्यपि पूर्वपक्षिभाष्यम् । अत एव प्रतिविधेयं दोषेष्विति सिद्धान्तभाष्यव्याख्यावसरे क्रापयतीत्याकारान्तभक्तः पुक् न व्यवधायक इति कैयटेनोक्तम् । अन्ये तु कृतिनु-ग्ग्रहणं सन्निपातपरिभाषाया अनित्यत्वे गमकम् । क्रापयतीत्यादौ पुक् सिध्यति सगृह्कानिर्देशोप्यत्रैव गमकान्तरम् । तेन यदागमन्यायस्यातिदेशत्वेप्यवयवावय-वस्य समुदायावयवत्वेपि आमणिकुलं, स्त्रहभिः, क्रापयतीत्यादौ सन्निपातपरिभा-षोपन्यासपरभाष्यविरोधेनेत्याहुः । नतदन्तस्येति । यदा चावयवावयवः समुदा-यावयवो नेत्यपि पूरणीयम् । त्वद्रीत्येति । ननु त्वद्रीत्यापि युष्मदस्मदोर्विभक्त्या-देशेषु कृतेषु न लुकः प्राप्तिरतोमित्यमा बाधात् । प्राप्तिमात्राभिप्रायकत्वे ममापि तुल्यमिति चेत्सत्यम् । परिभाषाविषयत्वंसूचितमिति । तुभ्यं,मह्यं,त्वत,मत,तव, ममेत्यादौ स्मै;स्मात्स्या,इत्वनैव परिभाषया नेति बोध्यम् । युष्मदस्मदोर्विभक्त्या-देशे कृते विभक्तिरयानिकादेशे कृते पुनरादेशान्तरं नेत्यशि शिलिन ज्ञाप्यत इति केचित् । अत्र मान्त एवावशिष्यत इति व्याख्याने तु तुभ्यमित्यादेः सिद्धा-वपि त्वदित्यादेरसिद्धिः । अतः सन्निपातपरिभाषया वारणमकार एव युक्तः । अङ्गसंबन्धीति । इदं न युक्तम् । धर्मिग्राहकमानविरोधात् । अत एव ज्यादा-दीयस इति सूत्रे भाष्यं किमर्थं जात्परस्येयस आत्वमुच्यते लोपः प्रकृते ध्रुव-स्येतामकयकारेनि दीर्घो भविष्यति । एवं तर्हि सिद्धे सति यदात्वं शास्ति तज्ज्ञा-पयत्याचार्यो भवत्येषा परिभाषा 'ऽङ्गवृत्ते पुनर्वृत्तावविधिरिति' । लोपश्च प्रत्ययसं-बन्धकार्यं नेति दिक् । तत्फलन्त्विति । विनक्ताविनस्य फलमित्यर्थः । तावि-द्यातिश्चेति । अस्य वस्तुत इति शेषः । पूर्वग्रन्थैकग्रन्थत्वे सांमानिकाभावेन भाविन्या ग्रहणमिति पूर्वग्रन्थस्य स्थानिवत्त्वेन सामुत्त्वमेव नत्वामृत्त्वमित्युत्तरग्र-न्थस्य विरोधापत्तिः । स्थानिवत्त्वेनामुत्त्वाभावेन भाविन्या अपि मकारप्रसक्तेरसं-भवात् । सामुत्त्वमेवेति । यद्यपि स्थानिवत्सूत्रेण स्थानितावच्छेदकधर्मातिदेश

एवानिर्दिश्यत इति न नियमः । आर्धधातुकत्वाद्यतिदेशापत्तौ न ल्यपीत्यादेर्वैय-र्थ्यापत्तेः । तथापि सभावितमाम विहाय सामतिकस्य साम स्थानिकत्वेनोपादा-नसामर्थ्येन साम्त्वमेवानिर्दिश्यते न त्वाम्त्वमिति कल्पनान्न दोष प्रत्ययत्वसुप्-त्वादीना तु न व्यावृत्तिः । आमिति निर्देशेन प्रसक्तस्थानितावच्छेदकभावस्या-प्त्वस्येव प्रवृत्ते । ननु युष्माकमित्यत्र सामो भावित्व सभवति न त्वतित्वाकमि-त्यत्र । तथाह्याकम स्थानित्वेनाम्त्वात्सुट प्रवृत्त्या सकारस्य श्रूयमाणत्वात् । आनित्वाकमित्यत्र सुटो ऽप्रवृत्त्या न साम्त्वभावीत्यत आह । साम्त्वस्याशास्त्रीय-त्वेनेति । यद्यपि निर्जरसावित्यादौ जराशब्दवत् आकम्यात्व अशास्त्रीयत्वे ऽप्यति-देष्टु शक्य साम्त्व तु सुटमादायार्थसमाजग्रस्त नातिदेशतो लभ्यम् । तथाप्या-कमः सुडुत्तर आम्त्वमयुक्तशास्त्रीयकार्याभावेन स्थानिवद्भावेनाम्त्वं दुर्लभ साम्-त्वस्याशास्त्रीयत्वेन शास्त्रीयकार्यप्रवृत्त्यप्रयोजकत्वेनातिदेशालभ्यत्वात् । अतिदे-शत्वाप्रयोज्यत्वादिति शेखरार्थ । किं च यत्र साम् भावि तत्राकमित्यर्थे आकमुत्तर सुट प्रवृत्तौ तस्य श्रवणापत्तिस्तदेतदभिप्रेत्याह । इतिदिगिति । विप्रतिषेधेपूर्व-मिति । अन्ये तु पूर्वशास्त्रप्रवृत्तिप्रयोजकीभूतो विप्रतिषेधस्तुल्यबलविरोधस्तेनेत्य-र्थस्तस्य क्रियाविशेषणत्वाभिप्रायेण 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्य' पूर्वविप्रति-षेधेने'ति वार्तिकप्रयोग करणत्वविवक्षया च तद्व्याख्यानभाष्ये च विप्रतिषेधे-नेति निर्देश । एव गुणवृद्ध्योरित्यत्र नव्योक्तरीत्या समासे तु पूर्वविप्रतिषेधत इत्यस्य स्वभावपि प्रत्यान्त इत्यनेनान्वयापत्ति । उक्तभाष्यवार्तिकयोरनन्वय इत्याहु । अत एव । पदस्येत्यस्य प्रायेणावयवषष्ठीत्वादिव । ननु नलोपसूत्रे ऽन्त-ग्रहण मुख्यप्रातिपदिकान्तस्य ग्रहणार्थं तेन ब्र सख्याया इत्यादौ व्यपदेशिवद्भा-वेन प्रातिपदिकान्तस्य नलोपो नेत्याशङ्क्याह । ब्र सख्यायाइति । त्वामयोरिति । अजादित्वाट्टाबिति भाव । अन्ये तु त्काल्पप्, श्व शानज्झो, गृभश्च्यो, ल्कि इत्या-दिनिर्देशेनातो धातोरित्यत्र धातुपदमनापूर तेन त्वामोरित्युचितम् । अजादि-त्वेन टापूकल्पने न प्रमाणमित्याहु । नवाक्षरत्वेनेति । तथा च नवाक्षरस्य पाद-त्वाभावेन पादादिस्थत्वाभावात्प्रत्युदाहरणासगतिरिति भाव । वस्तुतो नवा एका-क्षरेण छन्दासि वियन्तीति ऐतरेयब्राह्मणवचनात् नवाक्षरत्वेपि पादत्वमस्त्येवेति वाच्यम् । स्थानित्यस्यचेति । इदमयुक्तम् । एव सति गणेश इत्यादौ स्मृत्या-

पत्तेः । तस्मादेवं विषये नैकदेशविकृतन्याय इति पूर्वं निरूपितम् । ननु संध्युत्तरमपादादाविति निषेधप्रवृत्तावपि सन्धेः पूर्वं नवाक्षरत्वेन तदप्रवृत्तौ आदेशो दुर्वार इत्याशङ्क्याह । संधिश्चेति । इदमयुक्तम् । यद्वितुपरमिति सूत्रस्थभाष्यकैयटाभ्यां पदद्वयनिमित्तकार्यात्प्रागन्तरङ्गोप्येकादेशो नेति कल्पनात् । सन्धेः पूर्वमादेशप्रवृत्तिशङ्कायाः परिहारं मतान्तरेणाह । नःक्ष्णेति । उपजीव्यविरोधादिति । नात्र संनिपातपरिभाषाभिप्रेता । किन्तु यतो नाव इत्यत्र द्व्यच्कतामुपजीव्य प्रवृत्तस्वरस्य द्व्यच्कताभिघातकत्र्यच्कतासंपादकता नेत्याकरोक्तदिशा न्यायान्तरमेतदिति बोध्यम् । इतिपरेइति । इदमप्ययुक्तम् । इण्धातौ वक्ष्यमाणरीत्योभयत आश्रयण इत्यस्याभावेप्यन्तादिवद्भावेन व्यपवर्गस्यालाभादेवैनैकादेशे इते पदात्परास्मच्छब्दाभावादेकवचनेन विग्रहे प्रत्ययोत्तरपदयोरित्यादेशमाशङ्क्याह । युवयोरिति । न तु द्वित्वादेर्नाप्येकत्वस्य भानं किं तु संबोध्यत्वेनैवानेकव्यक्त्यवगतिरिति त्वमौ न कृताविति योजना । तथा च संख्यानवगतिरिति भाष्यस्य विशेषरूपेण संख्यानवगम इत्यर्थ इति न कश्चिद्दोषः । पचतीत्येतन्मात्रस्येति । एतस्य वाक्यत्वे ऽनन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतः स्यादित्याशयः । निरर्थकशब्दसमुदायेति । दशदाडिमानीत्यादिशब्दसमुदायेत्यर्थः । देवदत्तेन शयितव्यमिति । अस्तिर्भवतिपरो ऽप्रयुज्यमानोप्यस्तीति भाष्ये तु साध्यत्वेन भासमानक्रियाप्रधानसुबन्तातिरिक्तविषयमित्याशयः । तृतीयः चैत्रं पश्यतीत्यादौ इति । एतद्युत्तरं स एतत्समानार्थकमेव तिङ्ङतिङ इति वदत्सूत्रकाराभिप्रेतं वाक्यलक्षणं 'आख्यातं सविशेषणं वाक्य'मिति समर्थसूत्रे भाष्ये उक्तमित्यादिः । एकतिङित्यस्यैकानुपूर्वीतिङन्तवदित्यर्थ इति न ब्रूहि ब्रूहीत्यत्र दोष इत्यलमिन्त्यतो ग्रन्थः क्वचित्पुस्तके दृश्यते । केचित्तु सुप्तिङन्तचय इत्यस्य सुप्तिङन्तयोश्चय इत्येवार्थः । देवदत्तेन शयितव्यमित्यत्रास्तीत्यध्याहारान्नातिव्याप्तिः । 'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायती'त्यदौ परस्परसम्बन्धात् निरर्थकसुप्तिङन्तसमुदाये वाक्यत्वमिष्टमेव । अत एवालङ्कारिकैरपि अस्य वाक्यत्वमभ्युपगम्य दुष्टत्वमात्रं व्यवस्थापितं किं त्वेवं पचति भवतीत्यादिकेवलतिङन्तसमुदाये ऽव्याप्तेर्लक्षणान्तरं क्रियावाचकान्वितेति । जरद्गवादिवाक्यस्य तु न वाक्यत्वं पदार्थानां परस्परमनन्वयात् । लोके त्वर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते । अर्थवन्ति देवदत्तगामानय,

अनर्थकानि दशदाडिमानि षडपूपा कुण्डमजाजिन पललपिण्डमिति वृद्धिसूत्रस्य-भाष्ये दशदाडिमानीत्यादेर्वाक्यत्वव्यवहारस्तु भाक्त इत्याहु । स्वार्थेति । स च-शब्दस्तदर्थ समुच्चयस्तदाश्रयो हरि तदन्वयी स्वामी तदन्वयित्व मे इत्यस्य । प्रकृतसूत्रस्यैवेति । षष्ठ्यार्थेरिति सूत्रस्यैवेत्यर्थ । तत्र समानवाक्ये इत्येतत्सम्बन्धात् प्राक् एव वाचो युक्ति । अतएवेति । युक्तग्रहणाभावेपि साक्षाद्योगस्य ग्रहणाद-य । नपश्चमीति । पृथग्विना नानाभिस्तृतीयान्यतरस्यामित्यनेन । एव च युक्तग्र-हणाभावेन षष्ठ्यार्थेरित्येतत्परम्परासम्बन्धेपि प्रवर्तत इति मूलोक्तमयुक्तमिति भाव । सम्बन्धित्वेन विवक्षायामिति । मत्वर्थे बहुव्रीहिरिति वार्तिकानुरोधेनेदम् । तेन स-हेति तु न समासस्तुल्ययोग इत्युक्ते । काव्यप्रकाशादाविति । काव्यप्रदीप आदि-पदग्राह्य । कातर्य केवला नीति शौर्य श्वापदचेष्टितम् । अत॰ सिद्ध समेताभ्या-मुभाभ्यामन्वियेष स, इत्यादौ तथा दृष्टत्वादिति भाव॰ । ननु सञ्ज्ञाविधौ तदन्त-निधिर्दुर्लभ इत्याशङ्क्याह । आमन्त्रणमिति । ननु प्रथमाया आमन्त्रितसञ्ज्ञायाम-प्यामन्त्रितस्य प्रत्ययमात्रवृत्तित्वेन प्रत्ययग्रहणपरिभाषया प्रदेशेषु तदन्तविधिसभ-वेनामन्त्रितसञ्ज्ञाया तदन्तविध्यभावेपि न कश्चिद्दोष इति महासञ्ज्ञाकरण व्यर्थ-मित्याशङ्क्याह । अतएवेति । तदन्तविधिस्वीकारादेव । अनसञ्ज्ञानस्यादेरिति । नन्वेवं सुप्सञ्ज्ञाया अप्यप्रवृत्तौ सुप्तिङन्तमिति पदत्व हेहे इत्यादीना न स्यात् । तस्मादन्तरङ्गानपीति न्यायो धर्मिग्राहकमानबलेन सञ्ज्ञाविधिभिन्नविषय इति न कश्चिद्दोष इति चेत्सत्यम् । अव्ययादाविस्यादावुपजीव्यत्वेन सुबादिसञ्ज्ञाया॰ लुक पूर्व प्रवृत्तावप्यामन्त्रितसञ्ज्ञायास्तत पूर्व प्रवृत्तो मानाभाव इति आशय । अतदर्थमेवेति । विभाषादिक्समास इत्यादाविव लक्षणप्रतिपदोक्तपरिभाषया सं-बोधनपदमुच्चार्यविहितप्रथमाया ग्रहणवारणार्थ सेति पद तत्सामर्थ्याच्च प्रथमामात्र सेति परामृश्यत इति भाव । ननु सबोधनपदात्प्रातिपदिकार्थेति प्रथमायामप्याम-न्त्रितसञ्ज्ञापत्ति॰ । सबोधनमात्रबोधकत्व तु अग्ने इत्यादावपि न एकत्वादेरपि ततो बोधादिति चेन्न । सबोधनमभिमुखीकरण तच्च प्रत्यासत्त्या प्रकृतक्रियाविषय तथा च सबोधनमस्तीत्यादौ प्रकृतक्रियायामभिमुखीकरणाभावान् नात्र सबोधने प्रथमा कर्मशब्दे द्वितीयाभाववत् । प्रकृतक्रियाया तद्विवक्षणे तु संबोधने चेत्यने-नैव प्रथमा न प्रातिपदिकार्थसूत्रेण । सबोधनस्याधिक्यात् । कर्म गच्छतीत्यादौ

प्रथमाभाववदत्रापि हेहे इत्यत्रापि । संबोधनपदादस्या वारणमुक्तदिशा बोध्यम् । स्वाश्रयस्यापीति ।-कतिपयस्येति शेषः । तत्करणेन सर्वथा ऽविद्यमानं किं तु तत्सदृशमिति-बोधनात् । पूर्वकिमिति । इदमत्र पूर्वमित्यादिपूर्वग्रन्थेन गतार्थम् । एवमेवेति । विश्वावलं देवबलं तदेवेति, पूर्वपदास्थित एवशब्दात्परत्वादादेश इति भावः । वस्तुतस्तु नैतदुक्तं एवशब्दस्य स्मरामीति तिङन्तघटितवाक्यस्य त्वमेतेन समानवाक्यस्थत्वाभावात् । पश्यार्थैरिति निषेधाच्च ।ग्रामानि देवदत्तेति वत् वक्ष्यमाणरीत्यां कथं चित्संभवेपि तस्मात्ते इति विभक्तिप्रतिरूपकमव्ययमित्येव युक्तम् । इत्यादाविवेति । नन्वेतदप्येतत्समशीलमिति कथमस्य दृष्टान्तत्वमिति चेन्न । हे लवकुशौ गेये गाने प्रबन्धे वां-युवां केन पुरुषेण विनीतौ शिक्षितावित्यर्थस्य विवक्षितत्वेन द्वितीयार्थकर्मत्वादेरनन्वयेन विभक्तिप्रतिरूपकाव्ययस्यात्रावश्यकत्वात् । नन्वेवं नार्थतो विभक्तिप्रतिरूपकत्वमिति वाच्यम् । परिष्करिष्यमाणस्य तस्य सत्वात् । प्रकृतेपीति । सर्वदा रक्ष देव न इत्यत्र । अन्यार्थमिति । स्वार्थमित्यर्थः । बहुवचनमसङ्गतमिति । इस्यादिभ्य इत्यनेन गृहीतानामेव सर्वेषामित्यनेन ग्रहणमित्यभिमानेनेदम् । गङ्गे इत्यादीनां ग्रहणे तु यथाश्रुतमेव साधु । निवृत्तिरिति । वस्तुतोस्य छन्दोविशेषत्वाभावेन न पादादिस्थत्वम् । नन्वग्ने तेजस्विन्नित्यनयोः परस्परं विशेषणविशेष्यभावोस्ति वा न वा । नाद्यः । न हिसम्बुद्ध्योरिति सूत्रस्थभाष्यविरोधात् । तत्र हि विसम्बुद्ध्योरनुत्तरपदे, राजवृन्दारकः । संबुद्ध्यर्थेन नार्थः । संबुद्ध्यन्तानां समासः । किं वक्तव्यमेतत् । समानसमानार्थेन वाक्येन भवितव्यम् । नचेहार्थो वाक्येन गम्यते नाभी जातु चित्समासेनावयवसंबोधनं वाक्येन गम्यते । समुदायसंबोधनं समासेनेति भाष्यम् । कैयटश्च संबुद्ध्यन्तानामिति पृथगवयवार्थयोरभिमुखीकरणे परस्परैकार्थीभावलक्षणे सामर्थ्यायोगादिति । नान्त्यः । सामान्यवचनत्वविशेषवचनत्वयोर्विशेषणविशेष्यभावाधीनत्वेन तदभावे प्रकृतसूत्रस्यासंभवदुक्तिकत्वापत्तेरिति चेदवधेह्यसि तथास्तु । शब्दतः प्रथमं संबुद्ध्यन्तार्थयोः परस्परं विशेषणविशेष्यभावानवगाहिशाब्दबोधोपगमेप्यक्षणाधिकरणन्यायेन पार्ष्णिकपरस्परावच्छेदमाश्रित्य सूत्रस्योक्तिसंभवोपपत्तेः । सर्वथा विशेषणविशेष्यभावाभावेपि वा ऽग्नित्वतेजस्वित्वयोः सामान्यविशेषभावमात्रेण सूत्रस्योक्तिसंभवाच्च । तदुक्तं कैयटेनाग्ने देवि सरस्वति इह काव्ये विहृत्य एतेषां

पर्यायत्वेन सामान्यवचनत्वाभाव । सामान्यस्य विशेषापेक्षत्वादिति। देवकरोपीति। अत्र देवपदार्थस्य कारकप्रकरणे वक्ष्यमाणरीत्या भेदसबन्धेन क्रियायामन्वयेपि तिङन्तप्रकरणे क्रियाक्रियावतोर्भेद इति वक्ष्यमाणरीत्या क्रियया सममभेदस्य वास्तवस्य सत्वेपि तिङर्थेन वा तस्य सत्वेन सामानाधिकरण्योपपत्ति । अत्र सामानाधिकरण्ये इति चिन्त्यप्रयोजनम् । ननु सकर्मकत्वादृग्धे सुप्युपपदे क्विपा भाव्यम् । न च निपातनसामर्थ्यात्कर्मणीत्यधिकारबाध । सुपीत्यधिकारस्यापि बाधापत्तेरित्यत आह । निपातनैरिति । सस्कारविशेषज्ञापकेन अञ्चिसजुबन्धनिर्देशेन सुपीति प्रकरणबाधस्य न्याय्यत्वादिति भाव इति केचित् । अलाक्षणिकस्यापि कार्यस्य पूर्वोत्तरनिपातनेषु दर्शनेन तत्साहचर्यादत्राप्यवगते. सुप्युपदे एव क्विन् न तु युजेरिव निरुपपादित्यर्थ इत्यन्ये । अनिदिताम् । हल किम् । नुत । उपधाया किम् । नष्टम् । अन्त्यसदेशपरिभाषा तु अन्त्यसदेशानन्त्यसदेशयोरेकस्मिन्लक्ष्ये युगपत्प्राप्त्यभावेन न प्रवर्त्तते । प्रत्यक्चेति । अन्ये तु सुपात्पद , विश्ववाड्घटौह इत्यादौ पूर्वस्य पदावसप्रसारणे प्राप्नुत । नह्ययमन्त्यसदेशस्येति परिभाषाया विषय. । तथा च प्रत्यासत्त्या पदान्तस्याङ्गस्य यत्कार्य तत्तस्यैव तत्कार्यमित्येव पन्था शरणम् । तेनैव च न्यायेन प्रत्यक्चेत्यादिसिद्धावन्त्यचावपरिभाषा व्यर्थैव । तदेतदभिप्रेत्यैषा परिभाषा भाष्ये प्रत्याख्यातेत्याहु । प्रत्यञ्चाविति । प्रथम नकारस्य लोपे पुनर्नुमि प्रत्यञ्चाविति रूपम् । तथा च तन्मध्यपतितन्यायेन नुम्विशिष्टस्याप्यच इत्यनेन ग्रहण स्यादिति भाव । नकाराद्दितप्रत्ययस्थामित्यपि बोध्यम् । नन्वणुग्रहणाद्धस्तौ कर्तृ चेत्यादौ दीर्घानापत्तिरतस्तदनुवृत्तिर्न कार्येत्यत आह । कर्तृ चेति । विवक्षितत्वादिति । तथा च वकारे रूपे प्रत्यये इत्यर्थे क्विबादिरित्येवार्थ पर्यवस्यतीति भाव । अन्त्यस्येति । यस्येत्यर्थ । न्यायसिद्धर्थं गमकमप्याह । अतएवेति । अनेकक्लिष्टकल्पनेति । आकडारीयेषु कार्यकालपक्षाश्रयणं तदेकवाक्यता अङ्गाक्षे उत्थिताकाङ्क्षत्वेन यजादिप्रत्ययेनान्तो विशेषणमित्यादिक्लिष्टकल्पनेत्यर्थ । न लोपस्यासिद्धत्वादिति। नलोप सुप्स्वरेति सुप्विधौ नलोपस्यासिद्धत्वादल्लोपो न इत्यस्य च सुप्विधित्वात् । बाधायोगादिति । सज्ञाशास्त्रेण कार्यकालपक्षे स्वदेशत्यागेनाकडारीयत्वाभावादसिद्धत्वाच्च । उपमद्गतभाष्येइति । वस्तुतस्तु यथोद्देशपक्षेप्यनन्तस्य यस्याङ्गस्यातो लोप इत्यर्थेपि

नानन्त्यक्षेत्यादौ दोषः। निर्दिश्यमानान्त्यनकार एव लोपप्रवृत्तेः। अस्य स इदं स इत्यादौ स चासावेष च तदेष इत्यादौ तद इदमश्च तकारस्य दकारस्य च तदोः ससाविति सत्ववारणायोक्तकल्पनाया आवश्यकत्वात्। न ह्यत्रानन्त्यविकार इति परिभाषाप्रवृत्तिः संभवति। त्यदाद्यत्वं बाधित्वा पूर्वमेव प्रवृत्त्यान्त्यवर्णतद्वर्णयोरितराव्यवधानाभावात्। एतच्छब्दस्य कृताकच्कादःशब्देन समासे एतदमुक इत्यादौ तत्परिभाषाप्रवृत्तिशङ्काया अप्यभावाच्च। न चोपसर्जनत्वात्पूर्वस्य न तत्त्वं एवमप्यस्यायं ददमयं यूयं पुत्रा यस्य स युष्मत्पुत्रस्तस्य त्वं युष्मत्पुत्रत्वं इत्यादावयत्त्वमाद्यादेशापत्तेश्च तस्मादेतत्परिभाषाप्रत्याख्यानमेव भाष्यकृतो ऽभिप्रेतं यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्त्तव्येति भाष्यं तु प्रौढ्या। प्रयोजनविशेषमप्रदर्श्य सामान्येन तथोक्तेः। असंज्ञायां कार्यकालपक्षो ऽप्याश्रयितुं शक्यः। तत्पक्षे परिभाषाणामिव संज्ञानामपि स्वदेशप्रच्युतौ मानाभावात्। अथादिभ्यः परैव प्रगृह्यसंज्ञेति भाष्यस्य प्रगृह्यसंज्ञाप्रयुक्तप्रकृतिभाव इत्यर्थ इति न दोष इति दिक्। इतराव्यवधानएवेति। ननु हंसशिरांसीत्यत्र तत्परिभाषाप्रवृत्तिर्न स्यात्। कार्यिणोन्त्यवर्णस्य च सकारेण व्यवधानादिति चेन्न। इतरपदेन निमित्ततया विशिष्य सूत्रानुपात्तस्यैव ग्रहणेनादोषात्। केचित्त्वत्र तच्छब्देनान्त्यवर्णसदेशकार्यिवर्ण इत्यर्थः। अन्त्यत्वावच्छेदकवर्णत्वव्याप्यधर्मावच्छिन्नतत्सदेशकार्यिणो व्यवधानाभाव इति तावत्पर्यन्तिकोर्थः तेन हंसशिरांसीत्यादावन्त्यसंयोगतत्सदेशकार्यिणोरितराव्यवधानादेतत्परिभाषोपस्थितिरित्याहुः। अत्र प्रमाणमिति। तत्रेणार्यद्वये इत्यर्थः। सूचितमित्याहुरिति। अन्ये त्वत्र सूत्रकार्त्तिकभाष्यकृतामसेरित्यस्य प्रतिषेध एव तात्पर्यम्। वार्त्तिककृता अदसोऽद्रेरिति वचनपाठेनैतत्सूत्रभाष्ये भाष्यकृता पदाधिकारादपदान्तस्य मुत्वं न प्राप्नोतीत्याशङ्क्य यदयमसेरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्य अपदान्तस्यापि भवतीत्युक्तेश्च। अमुमुयङिति न सिद्ध्यतीत्युक्त्येदमेव रूपं साधुत्वेन भाष्यकृतोभिप्रेतम्। अदद्र्यङिति प्राप्नोतीत्युक्त्या तत्रासंमतेः सूचनात्। अदमुयङिति भवितव्यम्। अन्त्यविकारेन्त्यसदेशस्य कार्यं भवतीति भाष्यं त्वेकदेशिनः। स्वखण्डितपरिभाषाश्रयणेन रूपापादनरूपत्वात्तस्येत्याहुः। ननु विष्वद्र्यङेवयोरिस्यस्याभावेपि चकारेण सर्वनाम्नामाकर्षणादश्वाचीत्यादौ नास्य प्राप्तिरित्याशङ्क्याह। चस्यापीति। ज्ञानकृतगौरवा-

पत्तोरिति । इदमुपलक्षणम् । साकच्के च विशेषात् । अन्याकुलङ्कच्छतीत्यर्थकइति । एतेनाञ्चुगतिपूजनयोरित्यस्य स्थाने ऽञ्चुगता,वचिपूजाया,मित्येव सिद्धे नाचे पूजायामिति व्यर्थमित्यपास्तम् । योपवत्वको नन्हारेति । नकारजावनुस्वारपञ्चमौ झलि धातुस्थित्यतिप्रायिकम् । अपिनेति । नलोपाभावोपीत्यापिनेत्यर्थः । सलोपेऽत्कोपत्वमिति । एतेन पच स्कोरिति सलोप इति मूले पाठक्रमादर्थक्रमस्य बलवत्त्वेन वैपरीत्येन व्याख्याने सूचयति । एपदादिष्वावृत्तयेइति । अतिप्रत्ययान्तस्य चेदेतयोरेवेति नियम इति भाव । ननु ध्यानवाय शत्रन्ता एते निपात्यन्ते । बृहन्महतोरुपसंख्यानस्येष्टनियमपरत्वात्सिद्धे । महच्छब्दे यगाद्यभावनिपातनस्वीकारापत्तेश्च । मन्मते तु शतृप्रत्ययान्तस्य यत्कार्यं तदतिदिश्यते न तु शतृप्रत्यये परतो यत्कार्यं तदपीति दिक् । अचसन्तस्य चाजानो । तुशब्दादिति । स्वर्थचशब्दादित्यर्थ । अतएवेति । अ गतोरित्यस्यासन्ताश एव सबन्धादेवेत्यर्थ । अनुवादकमिति । केचित्त्वन्तग्रहणमौपदेशिकान्तचप्रतिपत्त्यर्थम् । न चोपदेशे गोमानित्यतुबन्त नात्वन्तमिति वाच्यम् । उपदेशेनेति वाक्यार्थबोधस्य हल्न्त्यमित्येतद्वाक्यार्थबोधाधीनत्वात्तदुत्तरप्रकृतिकत्वात्पकारस्येत्सञ्ज्ञाया लोपे च कृते ऽत्वन्तत्वसमव इत्याहु । नन्वन्यत्र लब्धावकाशस्य परेण बाधो वक्तव्य । न चान्यत्र दीर्घो लब्धावकाश इति अत एव आह । वचनसामर्थ्यादिति । तथा च नुमि कृते दीर्घस्यावकाशसमव इति भाव । इद च निरवकाशत्वे सत्येवापवादत्वमिति वार्तिकमनाभिप्रायेणोक्तम् । सत्यपि समवे बाधक भवतीति भाष्यमतानुसारेणाह । अयमभ्युच्चयइति । वस्तुतस्तु विद्यमानमपि परत्वमन्यत्र चारितार्थ्याभावेन विप्रतिषेधशास्त्रप्रवृत्त्यनुपयोगीत्युच्यते । परं नित्य च नुम बाधित्वा वचनसामर्थ्याद्दीर्घमूलग्रन्थेन । अत्रोत्सर्गे नुमि कृते अपवादस्य चारितार्थ्याभावेन नात्र तक्रकौण्डिन्यन्यायविषय इति दीर्घे कृते ऽपि नुम् प्रवर्तत एव । नन्वाश्रीयमाणे एव भूतपूर्वगतिस्वीकारेप्युपदेशे पकारस्य सत्त्वेनोपदेशे ऽत्वन्तस्याहस्य दीर्घ इति वाक्यार्थमपत्र इत्याशङ्का मनसि कृत्य तन्निरासाय भूतपूर्वगत्याश्रयणेन लभ्यमर्थमाह । तस्मादिति । नलोपिनइति । इद विशेषण प्राङ्ब्राह्मणीत्यत्र ङीबभावार्थम् । उगितश्चेति सूत्रे भाष्ये त्वञ्चतेरेवोगितो धातोर्नान्यस्योगितो धातोरित्येव नियमशरीरमुक्त कैयटेन । न च नाचे पूजायामिति यदा न नलोपस्तदा प्रतिषिध्यते तदापि ङीप् भवतीत्युक्तम् । असतिप्रयोजनइति । प्रयोजना-

भावे सत्यशब्दार्थप्रयोजनार्थत्वोक्तेरुपहासपरत्वादिति भावः । विभावयन्निति । केचित्तु यथेको गुणवृद्धीति सूत्रे गुणवृद्धिग्रहणानुवृत्तौ पुनर्गुणवृद्धिग्रहणादाश्रितश-ब्दस्वरूपव्यापारयोर्गुणवृद्ध्योर्बोधः । एवं द्वे इत्यस्याऽनुवृत्त्यैव सिद्धे पुनरु-भेग्रहणाद् द्वित्वपर्याप्त्याश्रयसमुदायबोधो गर्गदण्डनन्यायेन । उक्तार्थलाभस्तु पाक्षिकः । देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युक्ते प्रयोजकव्यापारस्य समु-दायविषयत्वेपि प्रयोज्यव्यापारान्नफलतृप्तेः प्रत्येकवृत्तित्वेन भाष्यकैयटाभ्यां प्रदर्शितत्वात्तस्मादुभे ग्रहणं साहायार्थमिति कैयटोक्तमपि युक्तमेवेत्याहुः । ऐत्तान्नित्यादौ जुसभावार्थं तूभेग्रहणं स्यादिति आक्षिप्येदं प्रयोजनं कार्यका-लपक्षे आहोस्विद्यथोद्देशपक्षे वा नाद्य इत्याह । कार्यकालपक्षइति । ननु उक्त-समाधानप्रयासो व्यर्थः । अन्तरङ्गत्वादन्तादेशे श्नौतस्यान्यादेशभावमादायातीत्यत्र न श्नित्वम् । तथाचान्तिभावे कृते न जुसापत्तिरित्याशङ्क्याह । अन्यथेति । ह्वयादिशब्दानामेकापाये प्रवृत्त्यभावस्यानङ्गीकारे । एकादेशइति । श्नश्नकारयो-रेकादेशे नान्य इत्याह । यथोद्देशेइति श्लाविति द्वित्वे इति । अन्तरङ्गत्वात् श्ना-भ्यस्तयोरित्यालोपं बाधित्वेति शेषः । श्नाभ्यस्तयोरातइति । न चालोपे कर्तव्ये शपः श्लोः स्थानिवद्भावः शङ्क्यः । तस्यापरनिमित्तकत्वादभ्यस्तग्रहणस्याचारि-रिताथ्यीच्च । आदन्तस्य यङ्लुक्यभिधाने दृढप्रमाणाभावात् । इहज्ञानमात्रमिति । न तु पश्यार्थैरित्यनेनैवाचाक्षुषमित्यर्थः । इदं चिन्त्यमिति । केचित्तु क्विन्प्रत्ययस्य कुरिति सूत्रे भाष्ये प्रत्ययग्रहणं अतद्गुणसंविज्ञानबहुव्रीहिविज्ञानार्थम् । तेन संप्रति क्विनो ऽभावेपि कुत्वम् । मानो अस्नाक् मानो अद्राग्गित्युक्तम् । तदेतत्कुत्वस्य पत्वापवादत्वाभावे न सङ्गच्छते । रज्जुसृड्भ्यामित्यादाविव कुत्वमपवादत्वाद्बाधि-त्वा पत्वापत्तेः । न चोपपत्स्यत्काम्यति रज्जुसृड्भ्यामिति भाष्यप्रयोगौ कथं सङ्ग-च्छेतामिति वाच्यम् । क्विन्प्रत्ययो यस्मादिति बहुव्रीहावविवक्षितस्य सृजौ निरुपपदल-क्षणस्य यजौ अनुपसर्गोपलक्षणस्यैवाश्रयणेनादोषादित्याहुः । षडगकाःप्राग्वदिति । ईदृशे विषये । जश्त्वापवादत्वं चर्त्वस्य नेति नेत्यनेन सूचयति । उदकस्पर्श इति । केचित्तूदकस्पृगिति प्रत्युदाहरणमुचितम् । क्विन्प्रत्ययो यस्मादिति बहुव्रीह्यर्थाविव-क्षितस्योदकाभिन्नोपपदलक्षणस्यैवाश्रयणेन कुत्वस्याप्रवृत्तेः । न चैवं त्यदादिषूपपदेषु दृशेः क्विनो विधानेन केवले दृगित्यादौ कुत्वं न स्यादिति वाच्यम् । त्यदाद्युप-

पदस्य लुके किन्प्रत्ययप्रयोगार्थत्वेन दृष्टत्वेन केवले तत्त्वस्याप्रसिद्धेः । उदक-स्पर्श इति तु न युक्तम् । नासरूपन्यायेन कर्मण्ययेग पक्षे इष्टत्वादित्याहुः । नि-त्यत्वादिति । न च स्वरे प्रत्ययलक्षणाभावात्कथमेतदिति वाच्यम् । एकपदस्वरे लुमता लुप्ते प्रत्ययलक्षणाभावेपि तदन्यत्र तत्सत्त्वात् । पूर्वत्रासिद्धेतन्निषेधादिति । न च पूर्वत्रासिद्धमित्यत्र पदेन इत्यर्थे न स्थानिवत्त्वनिषेधपरभाष्यप्रामाण्यात्पूर्वत्रासिद्धे न स्थानिवदित्यत्र पदचरमावयवातिरिक्तस्य पूर्वत्रासिद्धस्य ग्रहणादेतत्स्थानिवत्त्वे पूर्वत्रासिद्धे न स्थानिवदिति निषेधो न प्रवर्तत इति न पदान्तसूत्रस्थप्रत्ययवि-शेष इति वाच्यम् । भसंज्ञाप्रयोजकप्रत्ययपरकत्वादिनिमित्तकपदत्वचरमावयवा-तिरिक्तस्येत्यर्थेनादोषात् । नानेनषत्वमिति । सति त्वस्याविकारत्वे उत्तरसूत्रैक-वाक्यतया ऽऽदेशप्रत्यययोरेवानेन षत्वविधानान्न कश्चिद्दोषः । प्रकृतसूत्रस्थमिति । नुम्विसर्जनीयशर्व्यवायेऽपि निंसे प्रतिषेधः । निंस्से, निंस्क्ष्वेति प्रकृतसूत्रस्थं भाष्यं प्रत्येकं व्यवधाने इत्यत्र मानम् । अवश्यं नुमो ग्रहणं कर्तव्यं अनुस्वा-रविशेषणं नुम् ग्रहणं नुमो योऽनुस्वारस्तत्र यथा स्यात् इह मा भूत्सुपीस्विति । इयं-परसूत्रस्थं भाष्यं तु नुम्स्थानिकेऽप्यर्थे मानमिति बोध्यम् । सपादसप्ताध्यायी-स्थेकार्यइति । अत्र सपादसप्ताध्यायीशब्देन षत्वशास्त्रात्पूर्व सूत्रसमुदायो लक्ष्यते । तेन संयोगान्तलोपसंग्रहः । प्रतिपदविहितत्वेनेति । ननु नियमशास्त्राणां विधिमुखेन प्रवृत्तेः सिद्धान्तत्वेन वन्वेक्तान्तादनुपनामिति इष्टोऽपि प्रतिपदविधि-त्वमिति चेन्न । आदेशानुकस्येति सूत्रविहितदीर्घानुवादरूपत्वेन प्रतिपदविधित्वाभाव इत्याशयात् । पूर्वोपस्थितिनिमित्तकमन्तरङ्गमित्यत्र निमित्तशब्देन सप्तम्यन्तोपा-त्तस्यैव ग्रहणमिति तदाशयः । स्वरप्रवृत्तौ दोषात् । केचित्त्वेवं सति विषयस-प्तम्याश्रयणं किमर्थं स्यादिति समाससंज्ञापेक्षान्तोदात्तत्वमेव भवतीति भग-वतो दाक्षीपुत्रस्याशय इत्याहुः । नित्यत्वात्सत्वबाधित्वेति । इदं पूर्वान्विधि । टिलोपे कृते दस्यान्त्यत्वाभावात्सत्वाप्राप्तेः । दस्थानिकसत्वस्य तु साकच्केचा-रितार्थ्यं । ननु म् च उत्र इतरेतरद्वन्द्वे द्विवचनापत्तिरित्यत आह । सुइति समाहारद्वन्द्वइति ॥ इति हलन्ता पुंल्लिङ्गा ॥

नहोध । हले विधातव्ये ढत्वविधानं तु नद्धमित्यत्र झषस्तथोरिति धत्वार्थम् । मूले ढत्वोपपत्ते इति पाठः सुगमः । उदः स्थास्तम्भोरिति निर्देशेनोदित्यस्य दान्त-

स्वात् । इतिपक्षेऽइति । पदस्यादिरिति पक्षे तु निषेधो न प्राप्नोति । गतिकारको-पपदानामिति प्राक् सुबुत्पत्तेः समासे उत्तरभागस्य पदत्वाभावादिति भावः । व्याख्यानादिति । उपात्तस्य रूपस्य लौकिके प्रयोगे ऽनुपालम्भाच्छास्त्रीयस्य सानुबन्धकरूपस्याश्रयणम् । अस्तीह निरनुबन्धकरूपस्य प्रातिपदिकस्य लौकिके प्रयोगे उपलम्भ इति प्रत्ययलक्षणं नैव प्राप्नोतीति व्याख्यानपर्यन्तानुधावनं व्यर्थमिति केचित् । दिश् अतिसर्जने क्विनिति पाठः । क्विपिति त्वपपाठः । जस्त्वचर्त्वेइति । इदमेतन्मते सप्तमीबहुवचनविषयम् ॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

सोपपदाद्विचइति ॥ तथा सति गतिकारकोपपदानामिति सुबुत्पत्तेः प्राक् समासे उत्तरपदस्य पदत्वं पत्वेपि दुर्लभं स्यादिति भावः । सात्पदाद्योरित्येवेति । स्वरितो वा ऽनुदात्ते पदादाविति तु पदादावनुदात्ते एकादेशस्तस्य स्वरितविधिर्न तु पदादेः साक्षाद्विधिरिति सोपि पदादिविधिशब्देन न गृह्यते इति भावः । ननु सात्पदाद्योरित्येवेत्यसङ्गतम् । उत्तरपदादेः, कर्णोवर्णलक्षणादित्यादिविध्यन्तरस्यापि सद्भावादित्याशङ्क्याह । उत्तरपदादिरिति । अन्यथा कर्णोवर्णलक्षणादिति स्वरो न पदादिविधिः अकारस्यानादित्वात् । स्वरविधौ व्यञ्जनमविद्यमानवन्नत्वादित्यपदेशसूत्रं चासमासार्थं स्यात् । कर्णशब्दादर्श आद्यचि कृते तु शुक्लःकर्ण इत्याद्युदात्तत्वं यथास्यादित्यत आह । उत्तरपदादिति । पूर्ववार्तिकमपीति भाष्ये उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वचनं पठित्वा ततः स्वादिषु पूर्वं पदं भवतीत्यात्रनेकाविधयोगविभागेन प्रत्याख्याय दधिसेचाविल्यादौ षत्वार्थं पदादादिरिति पञ्चमीसमासाश्रयणे बहुसेचौ बहुसेच इत्यादौ दोषमुद्भाव्य तदुत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं भवतीति वक्ष्यामि तन्नियमार्थं भविष्यति पदादिविधावेव न पदान्तविधाविति कथं बहुसेचौ बहुच्पूर्वस्य पदादिविधावेव न पदान्तविधावित्युक्तम् । नञ्घटितेतद्वचनपाठेनेति । अन्ये तु प्रत्याख्यानप्रकार एव युक्तः । उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणप्रतिषेधः । बहुच्पूर्वस्य चापदादिविधाविति वचनद्वयापेक्षया प्रत्याख्यानस्य लघुत्वात् । तथा हि स्वादिषु पूर्वं पदं भवति ततो ऽसर्वनामस्थाने पूर्वं तद्वटकं च पदं न । ततो भम् । यचादावसर्वनामस्थाने पूर्वं तद्घटकं च भं भवतीत्यर्थ इति सर्वेष्टसिद्धिः स्पष्टा । न च दधिसेचाविल्यादौ षत्वापत्तिः । पदादादिरिति पञ्चमीसमासाश्रयणात् ।

न चैवं बहुसेनाविसत्र पत्वापत्ति.। पद्यते गम्यते ऽर्थोऽनेनेति व्युत्पत्त्या पद- पदस्यार्थवत्परत्वात् । पदं च प्रकृतिभिन्नमेव सातिग्रहणात् । तेन प्रनीमिपतीत्यत्र न दोष । अर्थवदिति तु पिम्नन्दमादायोत्तरस्य पत्ववारणाय । एवं च सति षष्ठी- तत्पुरुषेऽपि न दोष । न चैवं कुमारीष्वित्यत्र पत्वनिषेधापत्ति । सातिग्रहणे पद- सञ्ज्ञाशून्ये प्रत्यये पदादित्वप्रयुक्तमतिषेधाप्रवृत्तिज्ञापनात् । प्रत्याख्यानोत्तर नञ्- घटितैतद्वचनपाठस्त्वेकदेशिन.। कथं तर्हि पदादादि. पदादिरिति भाष्यग्रन्थोऽपि तथैव । किं च वचनारम्भपक्षे कश्यपेन प्रोक्तमधीयते काश्यपिन इत्यादौ नलो- पापत्ति । छन्दोब्राह्मणानीत्यनेन प्रोक्तप्रत्ययान्तस्याध्येतृप्रत्ययं विना ऽप्रयुक्तत्वबो- धनेऽपि सुबुत्पत्ते. प्राक् तत्प्रवृत्तिबोधकत्वे मानाभावात् । किं च जम्ब्वा फले ल- म्बावित्यत्रैको सवर्णे इति प्रकृतिभावापत्ति । न ह्यत्र फलप्रत्ययस्य सुबुत्पत्ते पूर्वत्व प्रसाक्षापि । किं च बहुचर्मिकेत्यत्र वचनारम्भे नलोपानापत्ति । प्रत्ययलक्षणप्रति- षेधेन पदत्वाभावात् । कप्रत्ययनिमित्तं पदत्वं तु समुदायस्य ततश्च यत्प्रातिपदिक- सञ्ज्ञकं चर्मिनिति न तत्पदम् । यच्च पदं बहुचर्मानिति न तत्प्रातिपदिकमिति नलोपो दुर्लभ । अपि च वचनारम्भे पूर्वदण्डिप्रिय इत्यादर्थं मध्यमत्वानाक्रान्तेति विशेष णेतिगौरवमिति यत्किञ्चिदेतदित्याहु ।अत एवेति।एनदस्त्यदाद्यत्वापवादत्वादेवेत्यर्थ'। अनयोरपीति । एनादेशस्य एनदश्चेत्यर्थ । एनदमादायेन्पाद्येकदेश्युक्तिरित्यन्तो ग्रन्थो ऽपवादत्वमजानत एकदेशिनो यत्तेनदित्याद्युक्तिरिति पूर्वमन्थेन पुनरुक्तोऽपि तद्विव- रणपरतया कथञ्चिन्नेय । अन्ये तु यत्तेनत्क्रियते एनो न वक्तव्य इत्यादिभाष्य- स्वारस्येन द्वितीयाटौस्स्वेन इत्यनेनैव एनद्वक्तव्य इति लभते । न च येन नाप्राप्ति- न्यायेनैनदस्त्यदाद्यत्वापवादत्वेन तत्र कृते त्यदाद्यत्वाप्राप्ते । यत्तेनदित्याद्येकदेश्यु- क्तिरिति वाच्यम् । न लुमतेति निषेधानित्यत्वेन कुण्डमानय प्रक्षाल्यैनदित्यत्रा- प्येनद् प्रवृत्त्या तत्र च त्यदाद्यत्वाप्रवृत्त्या येन नाप्राप्तिन्यायाऽप्रवृत्ते । सत्वस्य सदाद्यत्वानपवादत्वस्यैव तक्रकौण्डिन्यन्यायानित्यत्वेनैनदोऽपि तदनपवादत्वस्यो- पपत्तेश्च । यत्तेवमेनश्चिनको न सिद्ध्यति एतच्छिन्नक इति प्राप्नोति इत्यग्रिमभा- ष्य त्वेकदेश्युक्ति । उपसर्जनत्वेनैनदादेशस्य तत्राप्रवृत्ते । न लुमतेति निषेधा- द्य । न लुमतेत्यस्यानित्यत्वं तु धर्मिग्राहकमानेनैकपदाश्रितलुक्स्यैव । तथा चैतेन कृतमेतत्कृतमित्यादौ नैनदादेशप्रवृत्तिरित्याहु । इत्यलमिति । अन्ये तु सावकाश'

कः कोऽवकाशो ऽनन्त्य इत्यादि नलोपः प्रातिपदिकेति सूत्रस्थभाष्यप्रामाण्येन त्रिपाद्यां न तक्रकौण्डिन्यन्यायः स्कोः संयोगाद्योरित्यादि तु निरवकाशत्वेन संयोगान्तलोपादिबाधकः । अत एव रथीतरसिद्धिः । अन्यथा नलोपं बाधित्वा नलोपे सत्यसिद्धत्वात्सवर्णदीर्घानापत्तिः । अत एव धुक् गुर्वृड्यादौ भष्भावयत्वादिषु कृतेषु जश्त्वादिसिद्धिः । अन्यथा ऽपवादत्वात्तैर्जश्त्वापवादत्वापत्तिः । रहाभ्यामिति निमित्तत्वेन कार्यित्वाभावस्तु हयवरडिति सूत्रस्थभाष्यवलादेव । अस्तु वा त्रिपादीमितरविधिषु यथा तथा । नलोपविषये तु इत् रथीनः रथीतरः । भूरिदावस्तुरभूरिदावतर इति भाष्यप्रयोगबलेन नोत्सर्गापवादभावः । अत एव नलोपःप्रातिपदिकसूत्रे भाष्ये ऽप्यनवकाशो रुर्नलोपं बाधिष्यत इत्युक्तं न त्वपवादो रुरित्याहुः । इदमेवन्याय्यमिति । अन्ये तु किन्प्रत्ययस्य कुरिति सूत्रे इदं तर्हि प्रयोजनं येभ्यः किन् विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्वं यथास्यान्मानोअग्नाक्, मानोअग्राणिति भाष्यात्कुत्वस्यासिद्धत्वात्पत्वे किन्प्रत्ययस्येति कुत्वं भवत्येव । पत्वस्य कुत्वापवादत्वं तु न त्रिपाद्यां तक्रकौण्डिन्यन्यायाप्रवृत्तेः । पदान्ते विशिष्य पत्वविधिकल्पकाभावाच्च । विश्वसृडादौ तु न कुत्वम् । किन्प्रत्ययस्येत्यतद्गुणसंविज्ञानबहुव्रीहिर्विज्ञानेपि स्पृशोनुदके इति सूत्रे ऽनुदकग्रहणेन किन्प्रत्ययविधायकशास्त्राङ्गभूतोपपदके क्विप्प्रत्यान्ते किन्प्रत्ययस्येत्यस्याप्रवृत्तेः । अनुदकग्रहणं तूदके उपपदे क्विपः प्रवृत्तये तत्रापि कुत्वप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव । तेनोदकशब्दे उपपदे उदकस्पृडित्येव । अस्तृकशब्दस्त्वस्यतेरौणादिके क्रन्प्रत्यये बोध्य इत्याहुः । ननु गवाक्शब्दस्य रूपाणीति मूलग्रन्थो ऽसङ्गतः । स्त्रीवेचाग्रतिभेदेन इत्युत्तरग्रन्थानुरोधेन पूजार्थस्याप्यनुकरणावश्यकत्वेन तत्र गवागिति रूपाभावादित्याशङ्कयाह । शब्दपरत्वेनेति । तथा च गवाञ्शब्दस्यानुकरणं प्रकृतिवदनुकरणमिति नलोप इति स्त्रीवेचाग्रतिभेदेन इति वाक्यशेषो नासङ्गत इति भावः । सोऽङ्किकालुमत्वादिति । सर्वनामस्थानत्वाभावाच्चेत्यपि बोध्यम् । स्वांगीत्येवेति । अत एव त्वस्यांपि तटानीति प्रयोगः सङ्गच्छते । इति हलन्ता नपुंसकलिङ्गाः ॥

स्वरादिनिपातमव्ययम् । सर्वेषामिति । तनच्छकिंप्रभवानानां सर्वेषामित्यर्थः । भाष्यप्रामाण्यादिति । एवं हि तत्र भाष्यम् । अथ सायंचिरयोः किं निपात्यते प्रत्ययसन्नियोगेन मान्तत्वं निपात्यते । नैतदस्ति मकारान्तः सायंशब्द इति दे-

पदेऽप्यनेन सायंशब्दः प्रत्याख्यायते। अव्ययादेवेत्युत्पत्तेः सिद्धत्वात् चिरमिभ्यस्य तु मान्तत्वं निपात्यत इति चिरमित्यव्ययत्वे तु सायंशब्दवच्चिरशब्दस्यापि प्रत्याख्यानं भाष्यकृत्कैयटौ वदेतामिति भावः। ननु वर्त्यन्तस्याव्ययसंज्ञाया यदुद्गतो नियत इत्यादौ विभक्तिश्रवणानापत्तिरित्याशङ्क्याह। उपसर्गाच्छन्दसीति। भाष्यस्वरसोऽप्येवमेवेति। एव हि तत्र भाष्यम्। अथ वा पुनरस्तु छन्दस्यमकारान्तमिति कथं प्रतामौ प्रताम इति। आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेन संज्ञा भवतीति। यदयं प्रशाम्शब्दं स्वरादिषु पठतीति। यदि च स्वरादिषु प्रशाम्शब्दपाठस्तदा शानतेजन इत्यस्मात्क्विपि तत्राव्ययसंज्ञार्थं पाठस्य चारितार्थ्येन ज्ञापकत्वासङ्गतिः। तस्मात्क्विपोनभिधानकल्पनं तु क्लिष्टमिति भावः। नत्र स्वरादिष्विति। निपातत्वादेव सिद्धेरिति भावः। अव्ययेति। इदं तत्पुरुषे तुल्यार्थे इति सूत्रस्य वचनम्। अव्ययग्रहणे एतेषां ग्रहणमिति तदर्थः। अकर्णिरिति। आक्रोशे नञ्यनिरिति करणोऽनिरिति भावः। मालेपीति। निपातत्वादेव सिद्धेरिति भावः। नन्वर्थतः सारूप्यग्रहणे गेये केन विनीतौ वामित्यत्राव्ययसंज्ञा न स्यात्। वामित्यस्य कर्मत्वाबोधकत्वादित्याशङ्क्याह। गेयेकेनेति। विभक्त्यन्तसमानार्थत्वस्यैवेति। युष्मच्छब्दप्रकृतिकविभक्त्यन्तसमानार्थत्वं युवामिति प्रथमाद्विवचनमादाय शब्दतः सारूप्यं वामिति द्वितीयाद्विवचनान्तत्वमादाय। नन्वेवं सति युगपदित्यादीनामपि एककाले इति विभक्त्यन्तमादायार्थतः सारूप्यम्। युगं पततीत्यर्थकयुगपच्छब्दमादाय शब्दतः सारूप्यं तथा विभक्तिप्रतिरूपकत्वादेव युगपदित्यादीनामव्ययत्वे सिद्धे युगपदत्यस्य पाठो व्यर्थ इति चेन्न। यच्छब्दप्रकृतिकविभक्त्यन्तमादायार्थतः सारूप्यं तच्छब्दप्रकृतिकविभक्त्यन्तमादायैव शब्दतः सारूप्यविवक्षितत्वेनादोषात्। नन्वेवं स्वरप्रतिरूपकत्वमपि शब्दतोऽर्थतश्च विवक्षणीयं स्यादित्याशङ्क्याह। स्वरादेस्तुनेति। अन्ये तु स्वराद्येकरूप्याय शब्दत एव सारूप्यं नार्थतस्तेन तस्मादित्यर्थकतदित्यस्य प्रथमान्तार्थकवामित्यस्य चाव्ययत्वसिद्धिः। अत एव धनवाचिनोऽस्तिशब्दस्य विभक्तिप्रतिरूपकत्वेनाव्ययत्वमिति मतुप्सूत्रे भाष्यकैयटोक्तं सङ्गच्छते। विभक्त्यन्तं च पदद्वयाघटितमेवेति न युगपदित्यादीनां पाठवैयर्थ्यमित्याहुः। लुप्तषष्ठीकमिति। इदमयुक्तम्। प्रथमान्तानामेव द्वन्द्वविधानेन तच्चितोरिति द्वन्द्वे षष्ठ्यन्तस्य प्रवेशानर्हत्वात्। तत्तदर्थविभा-

गइति । प्रकृतिप्रत्ययविभागस्तदर्थश्चेति वाक्यस्थतच्छब्दयोः प्रकृतिप्रत्ययपरयो-र्द्वन्द्व इति भावः । शब्दरत्ने तु वीप्सायां कृतद्विर्वचनस्य तच्छब्दस्यार्थशब्देन तत्पुरुष इत्युचितम् । चादिस्वरादिपठितानामिति । इदं विशेषणं व्यर्थम् । गौरित्यादावव्ययत्वापादकं इण असिरिति निष्पन्ने । ऽणइत्यादावव्ययत्वानापत्तिस्तु नास्माकं स्वरादिपाठसामर्थ्येन तत्सिद्धेः । विहितानांनियमपक्षइति । इदमुपलक्षणम् । प्राप्यमाणानां नियमपक्षेपीत्यस्यार्थस्य । अस्योपपत्तिरिति । असत्त्वविक्तित्वस्योपपत्तिः । अत्र पक्षे इत्यस्य जातस्य निवृत्तिरित्यनेनान्वयः । सर्वेष्वर्थेष्वित्यस्य सर्वविभक्त्युत्पत्तावित्यनेनान्वयः । सर्वेषु कर्मादिष्वर्थेषु द्वितीयाद्येकैकविभक्त्युत्पत्तौ जातायामित्यर्थः । कर्माद्यर्थयोग्यात्प्रातिपदिकाच्चेत्कर्मणि विभक्तिरिति प्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैवेत्येव सिद्धौ कर्माद्यर्थेत्यादिविशेषणं व्यर्थम् । तद्योग्यप्रातिपदिकात्प्रथमैवेति । इदं विशेषणं अव्ययेभ्योपि द्वितीयाद्यर्थम् । अर्थनियमइति । यत एव कारस्ततोन्यत्र नियम इति सिद्धान्तात् । अत्र पक्षइति । अर्थनियमपक्षे इत्यर्थः । प्रकृतार्थापेक्षप्रत्ययनियमपक्षमाह । कर्माद्यर्थेति । सामान्यापेक्षप्रत्ययनियमपक्षमाह । अर्थनियमपक्षे इत्यर्थः । प्रकृतार्थापेक्षप्रत्ययनियपक्षमाह । अथेति । ननु सर्वेष्वेतेषु पक्षेषु अव्ययानां प्रातिपदिकार्थसूत्रोदाहरणत्वमनुपपन्नम् । तथा च प्रातिपदिकार्थग्रहणं किमर्थं उच्चैर्नीचैरित्यत्रापि यथा स्यादिति प्रातिपदिकार्थसूत्रस्थं भाष्यं विरुध्यते । प्रातिपदिकार्थसूत्रस्य पर्युदासन्यायेन कर्मादियोग्यप्रातिपदिकार्थ एव प्रथमाबोधकत्वादिति चेत्प्रातिपदिकार्थसूत्रस्योक्तनिष्कृष्टार्थमनाश्रित्याव्ययानां तदुदाहरणत्वेनोपन्यास इत्याशयात् । वस्तुतस्तु प्रातिपदिकार्थसूत्रे कर्मादियोग्यप्रातिपदिकादित्यर्थे मानाभावादव्ययानां तदुदाहरणत्वमुपपन्नम् । तत्रार्थनियमे कर्मादिराहितप्रातिपदिकार्थे प्रथमैवेति नियमेन प्रथमैवाव्ययेभ्यः प्राप्नोति न द्वितीयादिः । अर्थनियमेसिद्धमिति । बहुष्विति सूत्रस्थभाष्यस्य प्रथमाया वचनत्रयं सिद्धमित्येवार्थः । प्रकृतार्थापेक्षप्रत्ययनियमे कर्माद्यर्थप्रतिपादनयोग्यप्रातिपदिकाच्चेद् द्वितीया तदा कर्मणि सत्येव न तु तदसत्वे इत्यादिरेव सूत्रार्थः । तेन गां दोग्धीत्यादावपादानत्वादावपि द्वितीयादिः । बहुष्विति सूत्रस्यस्यैकस्मिन्नेवैकवचनं न द्वयोर्न बहुष्विति भाष्यस्यापि संख्यावत्त्वयोग्येषु चेदेकवचनं तर्हि एकत्वे सत्येव न तु तदसत्व इत्यर्थः । न द्वयोर्न बहुष्विति तु फलितार्थकथन-

मिति दिक्। नन्वेकवचनमिति सूत्रं व्यर्थम्। द्वित्वबहुत्वयोर्द्विवचनबहुवचनोक्तार्थादेकवचनस्य तद्विषये प्रवृत्तिसिद्धेरित्यत आह। द्वित्वबहुत्वयोरिति। अप्राप्तप्रापणार्थमिति। सामान्यापेक्षप्रत्ययनियमपक्ष एव सिद्धान्त्यभिमत इति भावः। अन्ये तु सामान्यापेक्षः प्रत्ययनियमः तत्र डुफडादिभ्यो निरर्थकेभ्यो विभक्तेरप्राप्तौ एकवचनमित्यौत्सर्गिकमेकवचनम्। सार्थकाव्ययेभ्यस्तु प्रातिपदिकार्थ इति प्रथमैकवचनं दोषामन्यमहः, उच्चैरित्यादिवृत्तिविषये कर्मत्वान्वयाद् द्वितीयैकवचनम्। तेनात्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः एव स्व शब्दात् द्वितीयाप्रभृतीन्यन्येकवचनानि स्व पश्य, स्व आगत, स्व स्थित इत्यादिप्रयोगदर्शनात्। एवमपदिशेत्याद्यव्ययीभावात्तदर्थकर्मत्वादिमत्वे न द्वितीया तृतीयासप्तम्येकवचनानीत्यादि यथायथ बोध्यमित्याहुः। नानेन सर्वैकवचनमिति। किं तु प्रथमाद्वितीयातृतीयैकवचनान्येवेत्यर्थः। ज्ञापनाच्चेति। इदमुपलक्षणमव्ययादाप्सुप इति प्रत्याहारग्रहणाच्चेत्यपि बोध्यम्। नन्वेकत्वे एकवचनस्याविधानेन घट इत्युक्ते एकत्वानिश्चयो न स्यादित्याशङ्क्याह। घटइत्युक्तइति। ननु बहुष्वित्यादिसूत्रेष्वेकवचनमिति योगविभागमनाश्रित्योक्तनियमपक्षानाश्रित्याव्ययेभ्यः सर्वविभक्तीनां सर्वाणि वचनानीत्युक्तं तत्कुतो नोक्तमित्यत आह। बहुष्वित्यादिसूत्राष्विति। भाष्ये ननु विशिष्यासान्निधानात्तद्धितान्त इति तदन्तविधिं कथमत आह। बहुव्रीहिलभ्यविशेष्यइत्याहेति। इत्यभिप्रेत्याहेत्यर्थः। सञ्ज्ञाकार्यस्येति। लुक इत्यर्थः। तत्त्वेन। बहिरङ्गत्वेन। अव्ययीभावादाविति। वस्तुतस्त्वव्ययीभावस्य शक्तिलिङ्गविशेषयोगेपि वचनादव्ययत्वम्। आधये इत्यादेरन्वर्थसञ्ज्ञाबलेनाव्ययत्ववारणसंभवेपि सन्निपातपरिभाषाप्रयोजनकथनार्थं भाष्यकृतेनदुपेक्षितम्। उपाद्रास्तेति। समूलन्यपाठः। सन्निपातपरिभाषया क्त्विति निषेधस्य निवृत्तिरित्याशयेन सगुणपाठः। वस्तुतस्त्वत्वप्रवृत्तिपूर्वकालिककित्वमात्वस्योपजीव्य तच्च न क्त्विति चेति निषेधविनाश्यम्। यच्च निषेधेन विनाश्यमित्योत्तरकालिक न तदात्वस्योपजीव्य तस्मादेज्विषये स्वात्वविधानादकित्वसन्निपातान्निमित्तमात्व स्याघोरिति कित्वस्यानिमित्त किं त्वसन्नियुक्त चेत्त्वमिति कित्वाभावे न भवतीति कैयटोक्तरीत्यैव सन्निपातपरिभाषाविरोध उपपादनीयः। तत्र चात्वोपजीव्यकित्वस्य साक्षादेव कित्वेन विनाशः। भावाभावयोर्विरोधादिति। नैषा प्रतिबन्दी युक्ता। तस्मात्

व्याख्यानाद्राप्यप्रामाण्याच्च सन्निपातविघातकत्वं परम्परयाप्याश्रीयत इत्येवेत्युक्तम् । तादृशमहासञ्ज्ञाकरणात्समुदायस्य नान्ययत्वमित्येव वक्तुं युक्तम् । तादृशार्थानामित्यारभ्य मानाभावेनेत्यन्तो ग्रन्थः प्रकृतानुपयुक्तः । न ह्यत्रान्तर्गणकार्यं किञ्चित्प्राप्नोति यो नोपयुज्येत । साहचर्येणेत्युत्तरमर्थस्येति शेषः । प्रसिद्धश्चासावन्तरङ्गश्चासौ पदान्तरानपेक्षश्चासावनुपसर्जनीभूतश्चेति विग्रहः । अत्र प्रसिद्धान्तरङ्गपदान्तरानपेक्षेति विशेषणं व्यर्थम् । अनुपसर्जनीभूतलिङ्गाद्यनन्वयिन इत्येतावता पूर्तेः । अनरेवेति । अत्युच्चैसावित्यत्रावस्याप्यव्ययसञ्ज्ञाभावादेवेत्यर्थः । व्यर्थ एवेति । अव्ययसञ्ज्ञायां कार्यकालपक्षाश्रयणात् । अत्युच्चैरित्यादावनर्थं प्रवृत्ताव्ययसञ्ज्ञामादाय न लुक् । उच्चैराविति । उच्चैः शब्दात्परो द्विवचनान्तो ऽशब्दो बोध्यः । तस्य च सरादित्वेन विभक्तित्वाद्विहितविशेषणाभावे लुगापत्तिरित्याशङ्कावारणायेदम् । उच्चैराभ्यामिति । विहितविशेषणाभावे ऽत्र टापो लुगापत्तिरिति भावः । णिशसमासौ स्वादिः । यन्नत्येति तदव्ययमिति वाक्यशेषं व्याचष्टे । तद्धितेति । तद्धितेति पदं तस्मादित्यर्थकमित्यभिप्रेत्य व्याचष्टे । अभावादिसाहचर्यादेवेति । यद्धितेति व्याचष्टे । यद्विविधं रूपमिति । नैतीति व्याचष्टे । न प्राप्नोतीति ॥ इत्यव्ययानि समाप्तानि ॥ इति सुब्विभक्तिकार्याणि ॥

श्रीः । स्त्रियाम् । सत्वादीनांगुणानामिति । ननु ब्रह्मशब्दस्य नपुंसकत्वमात्मशब्दस्य पुंस्त्वं चितिशब्दस्य स्त्रीत्वं कथम् । सत्वादीनां गुणानां तत्राभावादिति चेन्न । परास्य शक्तिर्विविधैव । आत्मनि चैवं विचित्राश्च हीति श्रुतिसूत्राभ्यामात्मनि पुंशक्त्यादिसत्त्वेन सर्वलिङ्गोपपत्तेः सतामपि सर्वलिङ्गानां तत्तच्छब्दप्रतिपाद्यत्वावच्छेदेनैवाभिव्यक्तिरिति नातिप्रसङ्गः । शशविषाणादौ त्वसदेव लिङ्गं विषाणत्वादिवदवभासते । यद्वा ऽन्यथाख्यातिस्वीकारादन्यत्र सच्छशीयत्वं सति विषाणे ऽवभासते इति लिङ्गव्यवस्थासिद्धिः । केचत्तु शशविषाणादावन्तःपदार्थसद्भावात्तद्द्वारको लिङ्गयोग इत्याहुः । अजशब्दस्य स्त्रियामजा शब्दस्य पुंसि कदाप्यप्रयोगाच्छास्त्रीयमेव टावायभिधेयमिति वक्तुमशक्यमित्यभिप्रेत्याह । तत्रेति । तत्संभवेत्विति । अन्ये तु लौकिकलिङ्गस्य प्रतिपाद्यत्वसंभवे तदेव नोभयं गौरवादित्याहुः । उपचयाऽपचययोः स्तनोरिति शेषः । तन्मात्रविवक्षायामिति । विवक्षा च लोकव्यवहारानुवादिनी ग्राह्या न तु मायाकी । तदुक्तं हरिणा । स-

सन्निधाने निमित्तानां किंचिदेव प्रवर्त्तकम् । यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा । भावतत्त्वविद इति शिष्टा शब्दार्थेषु व्यवस्थिता, इति । लिङ्गं चार्थगतमेव न शब्दगतमिति प्रकृतसूत्रस्थभाष्यात्स्वमोर्नपुंसकादिति सूत्रस्थभाष्याच्च स्पष्टमेव गम्यते । स्त्रीपुन्नपुंसकादिशब्दानां प्रवृत्तिनिमित्तमेव लिङ्गं न ततो ऽन्यत् । तदपि प्रायेण शास्त्रीयमेव सति संभवे लौकिकमपि । तद्वाच्याभिमतमिति । इदं विशेषणं व्यर्थम् । व्यावर्त्याभावात् । एवंव्याख्यानमिति । षष्ठ्यन्तत्वमाश्रित्याजादीनां वाच्य यत् स्त्रीत्वमिति व्याख्याने इत्यर्थः । अतएव । स्त्रीत्वस्य द्योत्यत्वादेव । समुच्चयस्य । द्योतकसमुच्चयस्य । वाचकसमुच्चयस्तु, प्रायेण न दृश्यत इति भावः । अजातिरूपमेवेति । नन्वेव घटकिका ऽजिकेत्यादौ जातिलक्षणो ङीष् दुर्वारः । आज्ञानार्थयोगेपि जातिलक्षणानपायात् । कान्तस्याजादित्वेन टापो ऽप्रवृत्तेरिति चेन्न । अज्ञानत्वाद्यधिकप्रवृत्तिनिमित्तत्वे जातिमात्रप्रवृत्तिनिमित्तकत्वाभावान्ङीषो ऽप्रवृत्तेरिति दिक् । तदन्तस्यापीति । तदन्तस्यैवेत्युचितम् । व्याख्यानादेवेति । अनुपसर्जनाधिकारमूलात् । सामर्थ्येनेति । अजादीन इत्यस्य षष्ठ्यन्तत्वाश्रयणसामर्थ्येनेत्यर्थः । जातिश्चेद्वाच्येति । भाष्यकैयटयोस्तु जातिरित्यस्य न शूद्रेत्यंशे संबन्धः किं तु अमहत्पूर्वेत्यंशे शूद्रस्य स्त्री शूद्रेत्यत्र गौणमुख्यन्यायेन टाप् नेत्युक्तम् । प्रातिपदिककार्येपि स्त्रीप्रत्यये गौणमुख्यन्यायः प्रवर्तत इति तद्भावः । एवं स्यजस्य अजीत्येत गौणमुख्यन्यायेन टापो ऽप्रवृत्ते । यद्वा मुख्यार्थकेष्वजादिषु जातिलक्षणङीष चारित्वा चरितार्थस्य टापः पुयोगे परत्वान्ङीषा बाध । अयजे इन्द्रमित्यादौ सर्वेगदीनस्य गुणेनेव । जातिवाचकत्वाभावादिति । प्राधान्येन जातिविशिष्टवाचकत्वादित्यर्थः । नचात्रगौणत्वमिति । ननु शूद्रस्य स्त्री शूद्रेत तथा च कथ शूद्रशब्दस्तत्र गौण न च शूद्रशब्द' शूद्रमेवम्भिन्नेन स्त्रीबोधक इति तत्र गौण । शक्यतावच्छेदकारोप एव गौणी वृत्तिरिति नव्यासिद्धान्तात् । अत एवाग्नायी देवता ऽस्यामेय इत्यत्र मस्याद इति पुंवद्भाव' । अन्यथा तुल्ये प्रवृत्तिनिमित्ते भाषितपुंस्कत्वाभावात्स दुर्लभ इति चेन्न । अशूद्रा यदा शूद्रस्य स्त्री विवक्षिता तदा गौणत्वमित्याशयात् । जातिमात्रविवक्षयेति । कैयटे त्वसति जातिग्रहणे ऽमहत्पूर्वेति प्रतिषेधसामर्थ्याद् दरद्यामिति टाप् बाध्येतेत्युक्तम् । न चाभीर्या प्रतिषेधचारितार्थ्यं तत्रापि समासान्तीकारेण सुबुत्पत्ते पूर्वं टापो दुर्वारत्वात् । ननु महाशूद्र-

शब्दस्य महत्त्वविशिष्टशूद्रत्वप्रवृत्तिनिमित्तकत्वेन जातिमात्रप्रवृत्तिनिमित्तकत्वाभावेन कथं ङीपित्यत आह। प्रधानेनेति। उग्रायामिति। उग्रयामित्युचितम्। अजादित्वं वा कल्प्यम्। कचिदुग्रकन्यायामिति पाठः। अनुलोमसंकराणामिति। उत्तमवर्णादधमवर्णायामुत्पन्नानामित्यर्थः। मातृजातिवृत्तित्वादिति। मातृजातिमत्त्वेन स्मृतिबोधकत्वादित्यर्थः। अतएव। महाशूद्रीत्यत्र शूद्रशब्दस्याऽर्थवत्त्वादेव। ब्राह्मणादीनां क्षत्रियादिभिः क्रमेणान्वयः। अत्र क्षत्रियाद्या अनूढा एव ग्राह्याः। ननु ब्राह्मणादुग्रायामुत्पन्नस्य शंखस्मृतिबलेन शूद्रत्वावगमात्तत्र तां जातिमारोप्येति पूर्वग्रन्थासङ्गतिः। अत एव श्रीमत्कृष्णद्वैपायनादिभिः क्षत्रियासूत्पादितानां पाण्डवादीनां क्षत्रियत्वमिति चेन्न। औशनसस्मृतावनुलोमसङ्कराणां केषां चिज्जात्यन्तरकथनेन सदादीनीति सूत्रे भाष्ये आभीरत्वस्य शूद्रत्वव्याप्यत्वाभावोक्त्या च तेन संपूर्णशूद्रत्वानङ्गीकारात्। अत एव तत्र महाशूद्रशब्दस्य प्रयोगो न केवलशूद्रशब्दस्याशूद्राद्वृत्तमत्वात्तस्य। शूद्रधर्माश्च सर्वे न तत्र प्रवर्त्तन्ते। शङ्खस्मृत्या शूद्रत्वारोपाच्च केचिच्छूद्रधर्मास्तत्र प्रवर्त्तन्ते। अयमारोपो न गौणमुख्यन्यायप्रवर्त्तकः शास्त्रबोधितत्वात्कतिपयधर्मप्रापकत्वाच्च। इमां कुसृष्टिमनाश्रित्य तु कैयटेनोक्तम्। अमहत्पूर्वेति निषेधो न वक्तव्यः। न हि महाशूद्रीत्यत्र शूद्रार्थगतं स्त्रीत्वमिति टापः प्रसङ्गाभाव इति। एतेन पुंयोगे टाब्वारणाय जातिश्चेद्वाच्येत्यस्य मुख्यजातिमती चेद्वाच्येत्यर्थस्यावश्यकतया ऽऽभीर्यां शूद्रत्वारोपेण टापो ऽप्रसक्तेरमहत्पूर्वेति निषेधो व्यर्थ इत्यपास्तम्। अस्यारोपस्य शास्त्रबोधितत्वेन तद्धर्मप्रापकत्वेन च मुख्यसमशीलत्वात्। ननु महाशूद्रीत्यत्र योगार्थस्यापि सत्त्वेन जातिमात्रप्रवृत्तिनिमित्तकत्वाभावेन ङीप् न स्यादिति चेन्न। अवयवार्थस्य संभवमात्रेणाश्रयणेपि मुख्यार्थप्रवृत्तिनिमित्तस्य व्यभिचारवारणायानाश्रयणेन जातिमात्रेति मात्रपदेन तादृशस्यैव व्यावर्त्तनेनादोषात्। अत एव योगेन मन्त्रपदवाधकत्वेपि अगोत्रप्रत्ययान्तमानुषीत्यत्र जातिलक्षणङीप्सिद्धिः। केचित्तिति। आभीति भूयः प्रयोगदर्शनमत्रारुचिः। इत्युक्तैरिति। वस्तुतस्तूगिद्ग्रहणग्रहणवर्ज्यमिति व्यर्थम्। उगितश्चेत्यत्र वनो रचेत्यादावित्रामहत्पूर्वग्रहणेन स्त्रियामित्यधिकारे तदन्तविधिज्ञापनेनादोषात्। उगित्वाऽस्त्वयोः प्रातिपदिकाप्रातिपदिकसाधारण्येनोक्तनिषेधस्योगिन्श्चात इस्त्यिनयोरप्रवृत्तेश्च। स्पष्टं चेदमुगितश्चेति सूत्रे भाष्ये। अतएवेति।

टापोऽनपवादत्वेन, स्त्रचि ङीप प्रवृत्तेरेवेत्यर्थः । एतत्प्रत्याख्यातमिति । प्रत्याख्यानमित्युचित पाठ । एतस्य सगच्छत इत्यनेनान्वय । सूत्ररीत्येष्टस्येति । इदं चिन्त्यम् । ङीबन्तप्रयोगस्य सूत्ररीत्येष्टत्वे मानाभावादिति तर्कचन्द्रिकाकारा । केचित्तु पञ्चसादौ टाप्ङीपोरुभयोर्निषेधाय न षट्स्विति सूत्रे ङीपोनुवृत्तेरावश्यकतया मण्डूकप्लुतौ मानाभावेन टाबृचीत्यनेन ङीपो विधान सूत्रकृत्समतमित्याहु । असभेनेति । अमहत्पूर्वग्रहणाच्च । कार्यकालपक्ष इति । यथोद्देशपक्षे तु नान्तत्वसमानाधिकरणपदत्वस्यानल्विधत्वेन स्थानिवत्त्वेनापि सौलभ्यमिति भाव । तदन्तेपीति । अमहत्पूर्वग्रहणेन स्त्रियामित्यधिकारस्थविधिनिषेधसाधारण्येन तदन्तविधिज्ञापनादिति भाव । स्त्रियायत्प्राप्नोतीति । नन्वेवं सति प्रियपञ्चन्यादौ डाबुभाभ्यामित्यपि न स्यादिति चेदिष्टापत्ते । केचित्तु टाप्ङीपोरुभयोरनुवृत्त्या तयोर्निषेधेपि डाप्निषेधे मानाभाव । ङीबशे बाध्यसामान्यचिन्तया ऽन उपधेति ङीबपि नेत्याहु । आश्रयणवत्वादिति । बाध्यसामान्यचिन्ताश्रयणस्यान उपधेति ङीबभावस्य फलत्वेनानुपदमेव कीर्तनाच्चिन्त्यमेतत् । बहुयज्वभ्यामिति । इदमपि चिन्त्यम् । अन्नन्तत्वाभावेनानो बहुव्रीहेरित्यस्याप्राप्तेः । यथाचान्नन्तत्वाभावस्तथोपपादित श्वयुवेति सूत्रे शेखरे स्त्रिया यत्प्राप्नोति तन्नेत्यर्थाश्रयणबलाद् भूतपूर्वगतिरित्याशयो वा कल्प्य । वस्तुतस्त्वन्नन्तत्वमपि स्थानिवद्भावेनानेतुं शक्यम् । श्वयुवेति सूत्रस्थ शेखरस्तु चिन्त्य एव । ननु श्वयुवेति सूत्रस्य भाष्य कथं संगच्छतामिति चेन्न । अनोऽवयवस्याकारस्यैवाल्लोपो न इति लोपविधानादन्त्यस्य श्वयुवेतिसूत्रस्थशेखररीत्या ऽऽनेतुमशक्यत्वात् । एतेन धीवरीत्यादावल्लोपापादनमपास्तम् । अनउपधालोपिन । गृह्यमाणस्यचान्नन्तस्येति । धीवन्नित्यादेरित्यर्थः । ध्वनितवेदमिति । अनुपसर्जनादित्येतन्न संबध्यत इत्येतदित्यर्थ । इत्यनन्तरमिति । अनुपसर्जनाधिकारात्प्राग्वर्तिनि अनो बहुव्रीहेरिति सूत्रे उपधालोपिनो वेति न्यासकरणेन तत्रानुपसर्जनाधिकारासंबन्धो ध्वनित इति भाव । अन्यतरस्याग्रहणमिति । उपधालोपिनो वेति वाग्रहणमित्यर्थ । अन्यथेति । सुपर्वेत्यादौ डाप्प्रतिषेधयो सावकाशत्वाप्रतिभानाने इत्यर्थ । अन्ये तु गृह्यमाणस्यान्नन्तबहुव्रीहेर्बहुधीवेत्यादेरनुपसर्जनस्य सभवेन बहुदामानि पुराण्य,तिक्राता नगर्य,तिबहुदामेत्यादावन्नन्तबहुव्रीहेरुपसर्जनस्य च सत्त्वेनानुपसर्जनादित्यन उपधेति सूत्रे सबध्यत एव ।

वनो बहुव्रीहिप्रतिषेधे उपधालोपिनो वेति वक्तव्यमिति वनो रचेति सूत्रस्थं भाष्यन्तु हाबुभाभ्यामनुपसर्जनादित्युत्तरं तद्वक्तव्यमित्येवं परमित्याहुः । अनेनेति । वर्णात्कार इतिविहितकारप्रत्ययान्तनिर्देशेनेत्यर्थः । नमाप्नोतीति । सामर्थ्यान्निर्दिष्टपरिभाषाबाधे तु रथकस्याद्यावतिप्रसङ्ग इति भावः । उच्चारणार्थतयेति । धकित् हिरुगित्याद्यनुरोधेनेत्यर्थः । प्रत्ययस्थत्वांशेति । निर्मुक्तानुबन्ध एव प्रत्ययसञ्ज्ञाप्रवृत्त्याकाचिके इति समुदायस्य प्रत्ययत्वाभावादिति भावः । केवलेति । न च क्रान्तात्प्रत्ययादित्यर्थवारणाय स्थग्रहणमिति वाच्यम् । क्षिपकादीनां चेति निषेधेन ककारस्य प्रत्ययविशेषणत्वज्ञापनेनादोषात् । अणीति । टिड्ढेति ङीप् तु न । केवलमामकेति नियमात् । वार्तिकमतेपीति । भाष्यकारमते तु प्रत्ययलक्षणसूत्रस्य नियमार्थत्वेन न लुमतेत्यनेन स्थानिवत्त्वस्य निषेधे प्रत्ययलक्षणमप्यर्थान्निषिद्धम् । प्रत्ययलक्षणसूत्रस्य स्थानिवत्वानुवादकत्वात् । कन्यकेत्युत्तरं ध्रुवकेत्यपपाठः । गणे ऽपठितत्वात् । निर्दिष्टपरिभाषाप्रवृत्तेरिति । उत्तरांशविकल्पतस्मादितिपरिभाषाप्रवृत्तेरित्यर्थः । अलम्पूर्वाणामपीतिस्पष्टार्थमिति । सूत्रेऽपिशब्दो लम्पूर्वकाभिन्नार्थकः सोपि स्पष्टार्थ इत्यर्थः । अकाचिवाप्युर्नात्रिशिष्टास्तुपीति । ननु नञर्थान्वितैतदर्थेऽज्ञातार्थविवक्षायां समुदायात्पुञ्चत्तरमेवाकज्युक्त इति चेत्सत्यम् । पाठक्रमवैपरीत्येन योजनेनादोषात् । एवमयन्तस्वार्थिककान्तेपीति । एतेन हंसं तनोः सन्निहितं चरन्तं मुनेर्मनोवृत्तिरिव स्विकाया,मिति प्रयोगो व्याख्यातः । अकचि स्याद्यापत्तेः । स्वात्यानिष्क्रान्तेति । स्वस्मान्निष्क्रान्तेति विग्रहे तु नेत्यविकल्पः । ज्ञात्वेति निर्देशेन स्त्रीत्वबोधकस्वशब्द एवेत्यप्रवृत्तेरिति भावः । अनुपसर्जनात् । अनभिधानमेवेति । ननु टिड्ढाणञित्यादावत इत्यधिकारेणादन्तात् क्विपि लुको लोपस्य वा प्रसङ्गेन ङीपोप्रसङ्गादनभिधानं निर्मूलं व्यर्थं चेति चेन्न । दीर्घादप्यूङो विधानेनानभिधानस्य तदभिप्रायकत्वोपपत्तेः । अत्रोपसर्जनत्वं न शास्त्रीयं किन्तु लौकिकं पूर्वसूत्रे ऽप्रधानस्योपसर्जनसञ्ज्ञा क्रियते यावद्ब्रूयात्प्रधानाद्भुत्पत्त्यमप्रधानान्नेति तावदित्यनुपसर्जनादिति प्रकृतसूत्रस्थभाष्यात् । ननु पञ्चगवधन इत्यत्र द्विगोरिति टिड्ढेति वा ङीप् स्यात् वक्ष्यमाणदिशा टित्वस्याप्रत्ययवृत्तित्वेन प्रत्ययग्रहणपरिभाषाया अप्रवृत्तावपि अवयवे टित्वस्याचारितार्थ्येन समुदायोपकारकत्वावश्यंभावात् । स्पष्टा चेयं रीतिरनुपसर्जनादित्यत्र कैयटे इत्यत आह । पञ्चेति । आपिशलिनेति । इत्रश्रेत्यण् ततोध्येत्र्यां तदधीत

इत्यण् तस्य प्रोक्तान्लुगिति लुक् । अध्येत्रणुत्सुमइति । यतस्तन्निमित्तको न ङीबिति वाक्यशेषः । ननु तस्य लुप्तत्वे प्रत्ययलक्षणेन तमाश्रित्य ङीप् दुर्वार इत्याशङ्क्याह । अण्योऽकार इति । तदणनिमित्तकस्येति । प्रोक्ताणनिमित्तकस्येत्यर्थः । तदण । प्रोक्ताण । एतत्त्वोत्वे । अध्येतृत्वोत्वे । अतएवेति । वर्णाश्रये प्रत्ययलक्षणाभावादेवेत्यर्थः । नङीबिति । अध्येत्रणमाश्रित्येति शेषः । तदन्तविधि विनेति । ननु ग्रहणवतेति निषेधः स्वरूपेणोच्चारिते प्रातिपदिक एव नान्यत्र टित्त्वतथात्वादुक्तनिषेधाप्रवृत्तौ तदन्तविधि सुलभ एवेति चेन्न । ग्रहणमुपादानमात्र न तु स्वरूपेणेत्युगिनश्चेति सूत्रे कैयटेनोक्तेः । अत एव ण्यन्त्यकदृष्णिकुरुभ्यश्च वृद्धाच्छ इत्यादौ न तदन्तविधिः । सदुर्लभइति । अणन्तस्य गृह्यमाणत्वन्नु क्तदिशा बोध्यम् । अनन्वयापत्तेरिति । ननु एरपत्य स्त्री ई इत्यत्राणुरूप प्रातिपदिक संभवत्येवेति चेत्सत्यम् । द्व्यसजादौ तन्मात्रस्य प्रातिपदिकत्वासंभवेन तदन्तविधौ तत्साहचर्येण तद्देशेपि स इत्याशयात् । निष्कृष्यैकार्थीभाव इति । ययोर्वृत्तिस्तन्मात्रद्वयस्यैकार्थीभाव इत्यर्थः । अप्रातिपदिकत्वाच्चेति । नन्वेवं कदाचित्ततोपि ङीबिति पूर्वग्रन्थासङ्गतिरिति चेन्न । कर्मण्यणित्यस्य टिड्ढाणञित्यत्रोपस्थितिसामर्थ्येनाप्रातिपदिकत्वेपि ततो ङीबिति पूर्वग्रन्थाशयात् । तदन्तविधौ तु समस्ते कुम्भकारेतिसमुदाय प्रातिपदिकमादाय तदुपस्थितिचारितार्थ्ये सामर्थ्यविरह । कर्मण्यणित्येव सिद्धे शौल्किकामीति णविधानेनाप्रातिपदिकत्वेपि ङीप प्रवृत्तिरित्याशय । उद्गातिविस्तरइति । अन्ये तु अतिधीवरी प्रियपञ्चेत्यादावुगितश्च पंनोरच न पद्धित्यत्यादिविधिप्रतिषेधप्रवृत्तये ऽमहत्पूर्वग्रहणेन स्त्रियामित्यधिकारे तदन्तविधेर्ज्ञापितत्वात्तदर्थमनुपसर्जनाधिकार । क्रियानुपसर्जनाधिकारेण तदन्तविधिज्ञापनात्प्रागप्यणन्तात्प्रातिपदिकादित्यर्थस्त्वयाङ्गीकृतस्तथापिशाला ब्राह्मणीत्यत्र प्रोक्ताणमादाय ङीन्वारणायानुपसर्जनाधिकार आवश्यक इति न तस्य तदन्तविधिज्ञापकता । अतिमहतीत्याद्यर्थं स्त्रियामित्यस्य प्रकृतिविशेषणनिर्णयेन प्रोक्ताण स्त्रियामवृत्तावपि तदन्तस्य स्त्रियां वृत्ते । ननु स्त्रियामित्यस्य प्रकृतिविशेषणत्वमप्यनुपसर्जनाधिकार ज्ञाप्यमेवेति चेन्न । तदन्तविधिज्ञापकत्वमिच्छतोप्येतज्ज्ञापनं विना वैयर्थ्यानुद्धारेणावश्यकत्वात्स्त्रियामित्यस्य प्रकृतिविशेषणत्वे ज्ञापिते उक्तस्थले ङीब्वारणाय चारितार्थ्येन तदन्तविधिज्ञापकत्वासंभवः । अनुपसर्जनाधिकारस्थेषु

तदन्तविधेरुपयोगाभावश्च । ननु तत्प्रयोजनं कुम्भकारीय इत्यस्य पाक्षिकस्य वारणमिति चेन्न । अनुपसर्जने स्त्रीप्रत्यय इत्यनेन तदादिविधिप्रतिषेधेन तत्रापि पाक्षिकानिष्टप्रसङ्गस्य दुर्वारत्वात् । अर्थवत्सूत्रोक्तार्थवत्त्वाभावेनेति दूषणं तत्रापि समम् । कर्मण्यणित्यस्यात्रोपस्थितौ मानाभावः । तदादिनियमाभावेनाधिकस्य कार्यभ्नोऽव्यवेन न्यूनस्येत्यापि निर्मूलं किञ्च शौलिकामीति ज्ञापकाश्रयणेन कथञ्चिदुक्तप्रतिबन्दीवारणसंभवेपि काष्ठश्रिताया अपत्यं काष्ठश्रैतेय इति प्रयोगवारणाय निष्कृष्यैकार्थीभाव एव प्रायेण वृत्तिनिमित्तम् । भाष्यादिप्रामाण्यात्तु क्वचित्तदभावेपि तद्धितादिः । किञ्च स्त्रीभ्यो ढगित्यत्र स्त्रीवाचकानां ग्रहणमिति त्वदुक्तदिशा सर्वमिदं गजस्नानसमम् । तस्मादापिशलेत्यादौ ङीप् वारणमेवानुपसर्जनाधिकारप्रयोजनम् । तदुक्तमत्र सूत्रे भाष्ये आपिशलमधीते आपिशला ब्राह्मणीत्यत्र ङीप् माभूदित्ययमधिकार इति । इदं तर्हि प्रयोजनं प्रधानेन तदन्तविधिर्यथा स्यात् कुम्भकारी अत्र हि प्रत्ययग्रहणे इति परिभाषया ऽवयवाद्रुत्पत्तिः प्राप्नोतीत्येतत्सूत्रस्थं भाष्यमनुपसर्जनादित्येपयोगः प्रत्याख्यायत इति सर्वादिसूत्रस्थ भाष्यैकदेशयुक्तिरुक्तबाधकबलादिति सुधियो विभावयन्त्वित्याहुः । प्रयोजनाभावादित्यादिनेति । ननु भविषीष्टेत्यत्र भाष्यमते गुणापत्तिरिति चेदत्र केचित् । भूसुवोरिति सूत्रे तिङः सार्वधात्विति विशेषणादार्धधातुके लिङि गुणनिषेधो नेत्याहुः । अन्ये तु गाङो ङित्त्वेन न ङिदादेशानां ङित्त्वमिति ज्ञाप्यते तेन भविषीष्टेत्यत्र न दोषः । उक्तज्ञापकेनैवाचिनवमित्यादि सिद्धौ पिच्च ङिन्नेति तु भवन्तीत्यादौ शपः सार्वधातुकमिति प्राप्तङित्वनिषेधार्थमित्याहुस्तन्न । गाङो ङित्त्वस्य गाङ्कुटेति सूत्रे विशेषणार्थत्वात् । तत्फलमिणो गादेशे कर्मणि लुङि अगासातां ग्रामो देवदत्तेनेत्यत्राङित्त्वान्नेत्त्वम् । न त्वपादि धर्मिग्राहकमानाल्लादेशभिन्नमेवानुबन्धकार्यं स्थानिवद्भावेन । तेन भविषीष्ट वक्ष्यमाणेत्यादौ न दोष इत्यन्ये । ननु निरनुबन्धकपरिभाषया ढग्रहणे ढकोग्रहणं न स्यादित्याशङ्क्याह । निरनुबन्धकस्येति । शिलाया ढञ्छन्दसीत्यादेः । स्पष्टंचेदं भाष्येइति । निरनुबन्धकस्येत्याद्युक्तमित्यर्थः । ननु स्वरे विशेषः ङीपोप्युदात्तनिवृत्तिस्वरेणोदात्तत्वादित्याशङ्क्याह । एनोहीति । उपरञ्जकतयेति । इष्टानि इत्यत्रकत्वारणायात्राप्यादिरित्यावश्यकमित्यन्ये । द्वैर्षभूतेति । तेनेति शेषः । अपरिमाणेत्यत्र परिच्छेदकमात्रस्याग्रहणेन पारिभाषिकपरिमाणस्यैव ग्रहणेन चेति तत्त्वार्थः । दर्प-

शब्द सत्त्वसंख्यावदन्तो नपुंसकं तस्माठ्ठञो यथोल्लुक् च चित्तवति नित्य मिति विहितस्य लुक् । ननु विस्तशब्दस्येयत्ताविशिष्टसुवर्णपरत्वात्तस्य च विक्रेयस्यासंभवात्पचतीत्यनुपपन्नमित्याशङ्क्याह । पचेरिति । अत्रोन्मानत्वादिति । नन्वेवमाद्दिगोः पुच्छेति सूत्रे परिमाणशब्देन पारिभाषिकपरिमाणग्रहणेपि उन्मानस्यापि ग्रहणमिति स्वेन वक्ष्यमाणत्वादसंगतमेतदिति चेन्न । नव्यविवरणे आर्हादिति सूत्रे परिमाणशब्देनोन्मानस्य न ग्रहणमिति पक्षान्तरस्याप्युक्तत्वेन तद्रीत्यैतदनुसरणात् । पुरुषस्येति । प्रसारितः पुरुष इति वचनादिति भावः । उन्मानशब्देन तुलायामारोप्य यन्मीयते तदूर्ध्वाधरदिगवस्थितवस्तु परिच्छेदकं चेत्युभयमपि गृह्यत इति भावः । लोकव्यवहारादिति । द्विपुरुषी परिखेति लोकव्यवहारादित्यर्थः । उत्तरसूत्रानुरोधादिति । संख्यायाः संज्ञेत्युत्तरसूत्रानुरोधादित्यर्थः । संख्या हि न पारिभाषिकपरिमाणम् । बहुव्रीहेरूधसः । नन्वनङ्ङीषोः समानविषयकत्वेन पर्यायेण तयोः प्रवृत्त्या ङीप्पक्षे नानादिति कथं डाप्ङीपौ निषेधेषु प्राप्तेष्विति । अन्यसमच्छन्नामित्यत आह । समासान्तानामिति । तथा च पूर्वमनङ् पश्चान्ङीपिति नानयोः पर्याय इति डाप् ङीपाविति मूलं युक्तमिति भावः । बहुव्रीहेः किमिति । ऊधश्शब्दस्य नपुंसकत्वात्केवलात्तदन्तादुत्तरपदार्थप्रधानात्तत्पुरुषाच्च न ङीप् । अत्यूध शब्दस्य स्त्रियां वृत्तावपि तत्र संख्याव्ययादेरिति ङीपा भवितव्यं तथा च बहुव्रीहेरित्यनुक्तावपि तत्र एव एवं प्रवत्स्यन्तीति भावः । प्राप्तोधा इति । अत्रापि इतीति सूत्रस्य बहुव्रीहिग्रहणमत्युदाहरणमित्युपेक्षितम् । यद्यपि भोंडीपिति सुवच तथाप्यत्रापि बहुव्रीहिग्रहणम् । लक्षणान्तरसिद्धमिति । दामहायनान्ताच्चेति सूत्रासिद्धमित्यर्थः । घृतादित्वादिति । अथ विचारः प्रासङ्गिकः । ननु सुपङ्क्तीरित्यत्र हल्ङ्याब्भ्य इति सुलोपेन भवितव्यमित्याशङ्क्याह । ईप्रत्यय इति । छन्दसीवनिपावित्यनेन । विभाषामवृ । यद्यप्यमहत्पूर्वग्रहणेन स्त्रियामित्यधिकारे तदन्तविधिज्ञापनेन सपूर्वान्स्येत्यनुक्तावपि तस्य तत्त्व सिद्ध्यति तथापि असति तस्मिन्ननुपसर्जनादिति पत्युर्विशेषणं स्यात् तस्य गृह्यमाणविशेषणत्वनियमात्तथा च दृढपत्नीति बहुव्रीहौ न स्यादतः सपूर्वग्रहणम् । सपूर्वस्येत्युक्तौ तु तस्यैव विशेषणं गृह्यमाणस्यात् । फलान्तरमपि मूले स्पष्टीभविष्यति । किं पूर्वावयवोऽर्थवानेव उतानर्थकोपि नाथ इत्याह । विद्यमानपूर्वात्प्रथमान्तेति । नान्यइत्याह । अर्थाभिधानाच्चेति । अमहत्पूर्वग्रहणेन ग्रहणकेनेति निरिदम्यात्र प्रकरणे प्रकृत्यप्रज्ञापनात्प्रत्ययविधाना-

भावाच्चेत्यपि बोध्यम् । इत्यन्येइति । वस्तुतस्तु वहुवृषलपतिरिति बहुव्रीहेरपि मत्यन्तत्वात्तस्य चानुपसर्जनत्वादत्रापि नकारो भवत्येव । ननु मूले व्यस्ते कथ-मित्युक्त्वा समस्ते वृषलपत्नीत्यादौ नत्वानुपपत्तिशङ्कानेति लभ्यते तच्चासंगतम् । विभाषेति सूत्रे यज्ञसंयोग इत्यनुवृत्त्या वृषलस्य यज्ञानधिकारेण तत्राप्यनुपपत्ति-शङ्कानादवस्थ्यादित्याशङ्क्याह । नसंबध्यतइति । अत्र प्रमाणमाह । भाष्ये-इति । वृषलस्य पतिरिति । वृषलकर्तृकसुरतस्वामिनीत्यर्थः । ननु सपूर्वस्य किं गर्वा पतिरिति मूलमसंगतम् । सपूर्वस्येत्युक्तावप्येतद्दोषतादवस्थ्यात् । गवामित्यस्य पूर्वोच्चारितस्य सत्त्वादित्याशङ्क्याह.। अवयववाचीति । तेन । निपातनं । तत्रेत्यर्थ इति । तत्र सूत्रे इत्यर्थः । तेनेति । तत्र सर्वत्रेत्यङ्गीकारेणेत्यर्थः । आद्ये नक्षत्रेण युक्त इत्यण् । द्वितीये संधिवेलेत्यण् । तस्य विकार इत्यणि तु नेदम् । प्रतिपदो-क्तपरिभाषया नक्षत्रपदघटित शास्त्रेण विहिताण एव ग्रहणात् । इत्यपरइति । इद-मेव युक्तम् । विधित्वानुरोधादिति । मुख्यार्थैकतत्प्रवृत्तौ तत्र जातेरस्त्रीत्यनेन सिद्धौ नागग्रहणस्य नियमार्थत्वं वाच्यं स्यादिति भावः । गौरित्यर्थे इति । वृत्ति-मते त्वत्र नीलीत्येव । प्रतिपदोक्तपरिभाषायास्तेन प्रवृत्त्यनङ्गीकारादिति बोध्यम् । नक्पादीनामिति । ऊवर्णान्तत्वाभावेन ङीपोऽप्रवृत्तावपि गुणवचनेति ष्यङ्वार-णायैषां गुणवचनत्वं नेष्यत इति बोध्यम् । ऐक्यमित्यत्र ब्राह्मणादित्वात्ष्यञ् । श्लोकेतीविति । इदमप्ययुक्तम् । खरुसंयोगोपेति निषेधात् । पतिरयुचितम् । पुंयो-गादा । पुंस्येवयःप्रसिद्धइति । ननु शूद्रादिशब्देभ्यो वस्तुतः शूद्रत्वविशिष्टायां शूद्रस्य स्त्रीत्येवं रूपेण विवक्षितायां ङीप् न प्राप्नोतीति चेन्नेष्यत एवात्र ङीप् । चतुर्भिः प्रकारैरतस्मिन्स इत्येतद्भवति । तात्स्थ्यात् ताद्धर्म्यात्तत्सामीप्यात्तत्साहच-र्यादिति प्रकृतसूत्रस्थभाष्यादिति केचित् । अन्ये त्वथवा पुनरस्तु तस्यामेव प्रवृत्तशब्दइति तद्गतभाष्याद्युक्तविषयेपि ङीषिष्यते । वस्तुतस्तु जातिमत्त्वेपि शूद्र-स्य स्त्रीत्येवं रूपेण विवक्षिता न तु शूद्रत्वजातिमत्त्वेनेति न ततष्टाप् । सर्वत्र शक्य-तावच्छेदकारोप एव लक्षणेति न नियमः । सतिसंभवे शक्यतावच्छेदकारोपो लक्ष-णेति नाग्नेयः स्थालीपाक इत्यत्र पुंवद्भावालापत्तिरित्याहुः । गौरादिपु बोध्यमिति । देवकद्रुहिनेत्यर्थे तेन ङीपोऽविधानादसंगतमेतत् । तन्निषेधस्य । वृजकाभ्यां कर्तरीति निषेधस्य । नियमार्थमिति । पदस्यादिरिति विग्रहे सुबुत्पत्तेः प्राक् समासात्स्थशब्दस्यापदत्वात्पत्वनिषेधस्य सात्पदाद्योरित्यनेन सिद्धत्वात् ।

इति श्रीमद्राघवेन्द्राचार्यकृते विषमाख्ये लघुशब्देन्दुशेखरव्याख्याने स्त्रीप्रत्ययप्रकरणम् ॥

क्रियायोगएवेति॥ प्रायेणेति शेषः। तेन पचतिरूपादिभ्योऽभेनणादिभ्यश्च प्रथमा सिद्धि। नन्वेव 'त्रय काला' इत्यादौ प्रथमा न स्यात् सन्तीत्यध्याहारस्यासंभवादिति चेन्न। ज्ञायन्ते इत्यध्याहारसंभवात्। ननु मञ्चा क्रोशन्तीत्यादौ प्रथमा न स्याल्लक्ष्यार्थस्यानियतोपस्थितिकत्वादित्याशङ्क्याह। पदएवेति॥ अत्र समाधानान्तरमाह। शक्यतावच्छेदकेति॥ तथा च प्रातिपदिकस्य लक्षणायामपि लक्ष्यार्थस्य नियतोपस्थितिकत्व सुलभमिति भाव। अत एवाग्नायी देवतास्य स्थालीपाकस्याग्नेय इत्यत्र मस्यादे इति पुंवत्त्वसिद्धि। लक्ष्या सग्रह॥ लक्षणास्थलसंग्रह। ननु 'वीर पुरुष' इत्यत्र प्रथमा न स्याद्विशेषणविशेष्यभावस्याधिकस्य सत्त्वेन लिङ्गस्यैवाधिक्याभावादित्याशङ्क्याह। यद्यपीति॥ प्रथमाप्रवृत्तिरिति॥ इद पदसंस्कारपक्षे। इतरसत्त्वेति॥ न विद्यते भेदो भेदसंसर्गोऽवच्छेदकतया यत्र विशेषणविशेष्यभावे इति अभेदेनेत्यत्र बहुव्रीहिरिति भाव। नसंसर्गइति॥ संसर्गत्वे नीलो घट इत्यादौ षष्ठ्यापत्तिः। विशेषणविशेष्यभावे तु न षष्ठी, तस्य बोधसामान्यसामग्रीलभ्यत्वेनान्यलभ्यत्वात्। वचनग्रहणाभावे प्रातिपदिकप्रतिपादितसंख्याबोधकवचनस्याप्राप्तिमाह। उक्तार्थानामिति॥ प्रातिपदिकप्रतिपादितसंख्यान्यसंख्याप्रतिपादकवचनस्याप्यप्राप्तिरित्याह। प्रातिपदिकेति॥ तदप्राप्तिः॥ प्रथमाया अप्राप्ति। न च, "न केवला" इति न्यायविरोध इति वाच्यम्। इदानीं तदननुसंधानात्। ननु वचनग्रहणे कृतेपि द्व्यादिभ्य एकवचनाद्यापत्तिर्वचनशब्दस्य संख्यामात्रबोधकत्वादित्याशङ्क्याह। अनन्वितार्थकेति॥ द्व्यादिभ्यइति॥ एकशब्दात्तु नोपात्त। औत्सर्गिकैकवचनेनैव सिद्धेरिति भाव। सर्वविभक्तीति॥ वचनत्रयात्मकविभक्तीत्यर्थ। तद्धितश्चासर्वविभक्तिरितिवत्। अतएवलिङ्गेति॥ प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्ततदाश्रयमात्रग्रहणादेवेत्यर्थ। नमानामिति॥ प्रत्युत हर्यादिशब्देभ्यो नानार्थेभ्य प्रथमा न स्यादिति बोध्यम्। अस्य॥ परिच्छेद्यस्य॥ अनेकत्वेन॥ अनेकविधत्वेन॥ तद्वदिति॥ शक्यार्थमादाय प्रथमा कृत्वा पश्चाल्लक्षणेत्युक्तदिशेत्यर्थ। संख्यावाक्येति॥ द्व्येकयोर्द्विवचनैकवचन

इति वाक्यशेषार्थः । एतेन "एको द्वावित्यादौ वचनग्रहणाभावेऽप्युक्तार्थानामिति न्यायेन प्रथमा न स्यादिति न युक्तमेकमित्यादौ तन्न्यायेन द्वितीयाद्यनापत्तेः । संख्या विभक्त्यर्थ इति पक्षे ऽनभिहित इत्यस्यारम्भ इत्याकरे उक्तत्वेन तत्पक्षे सूत्रजबोधे संख्यायाः प्राधान्येनोक्तार्थानामिति न्यायस्य निर्बाधत्वात् । न च संख्यामात्रस्य प्रातिपदिकेनोक्तत्वेपि कर्मत्वादिबोधनाय द्वितीयेति वाच्यम् । एको द्वावित्यादावपि आश्रयपुंस्त्वादिबोधनाय प्रथमेति सुवचत्वात् । तस्य प्रातिपदिकेनोक्तत्वं तु न प्रथमाप्रवृत्तिप्रतिबन्धक" इति हरिदीक्षितोक्तमपास्तम् । अत्र केचित्– प्रातिपदिकेत्यादि सूत्राणि अर्थविधायकानि स्वादिसूत्रेणैकवाक्यतया प्रातिपदिकार्थादिषु प्रथमाविधायकानीत्येकः पक्षः, स्वादिसूत्रेण विहितानां नियामकानीत्यपरः पक्षः । तत्रापि द्वौ पन्थानौ । अर्थनियमः प्रत्ययनियमश्चेति । तत्र प्रातिपदिकार्थ एव प्रथमा, कर्मण्येव द्वितीयेति प्रत्ययनियमः । अन्यत्र प्रथमा न इति प्रत्ययस्यैवार्थान्तरे व्यावृत्तिपर्यवसानात् । तदाहुः– यत एवकारस्ततोऽन्यत्र नियम—इत्यभियुक्ताः । प्रातिपदिकार्थे प्रथमैवेत्यादिरर्थनियमः । उक्तयुक्तेः । तत्र प्रातिपदिकार्थ एव प्रथमेति प्रत्ययनियमपक्षे मात्रग्रहणं व्यर्थं नियमशरीरेणैव मात्रशब्दार्थलाभात् । अर्थनियमपक्षेपि मात्रग्रहणंव्यर्थं कर्मणि द्वितीयैवेत्यादिनियमेन कर्मत्वाद्याधिक्येन प्रथमाया व्यावृत्तिसिद्धेरित्याहुः । तत्र पक्षान्तरे मात्रग्रहणस्यानावश्यकत्वेपि प्रत्ययनियमपक्षे तस्यावश्यकत्वमाह । मात्रग्रहणाभावइति ॥ अपादानत्वादिबोधिनीति ॥ दुहेर्व्यापारद्वयार्थकत्वेऽपादानत्व-कर्मत्वोभयप्राप्तौ परत्वात्कर्मत्वम् । तदुक्तं भाष्ये "अपादानमुत्तराणि कारकाणि बाधन्त" इति । नियमाकार इति ॥ यत्रेति शेषः । ननु मात्रग्रहणे कृतेपि प्रातिपदिकार्थमात्रे सत्येव प्रथमेति नियमाकारपर्यवसानेनोक्तदोषतादवस्थ्यमित्याशङ्क्याह । तत्सत्त्वेऽपीति ॥ मात्रग्रहणसत्त्वे ऽपीत्यर्थः । कर्मादियोग्येति ॥ यथा अवश्यैवेत्यत्र व्यवच्छेद्यसंबन्धयोग्यस्यैव व्यावृत्तिस्तथा मात्रग्रहणव्यवच्छेद्यकर्मादियोग्यार्थकस्यैव व्यावृत्तिर्मात्रग्रहणसत्त्वे इति भावः । संबोधने च ॥ प्रवृत्तिनिवृत्तीति ॥ निवृत्तेरुदाहरणं– हे चैत्र अग्रे व्याघ्रोऽस्तीति निवर्तस्वेत्यध्याहारः । तत्त्वासंभवादिति ॥ तेन रूपेण संबोधनासंभवादित्यर्थः । उद्देश्यतयेति ॥ स्वोद्देश्यकप्रवर्तनाविषयतयेत्यर्थः । व्यवस्थयेति ॥ राजत्वस्या-

सिद्धावाद., सिद्धौ च 'द्वितीय'-प्रयोग इत्यर्थ. । अभिमुखीभवदिति ॥ अयं भाव । अभिमुखीकरणमभिमुखीभवनानुकूलो व्यापारस्तत्र विशेष्यभूतव्यापारस्या-विवक्षयाभिमुखीभवनमेव, विभक्त्यर्थोस्, विशेषणविशेष्यभावव्यत्यासेनाभिमुखी-करणप्रयोज्यमभिमुखीभवनं विभक्त्यर्थोस्तु वा, तच्च प्रकृत्यर्थविशेषणं प्रकृत्यर्थश्च स्वोद्देश्यकप्रवर्तनाविषयत्वसम्बन्धेन, स्वत्रे विशेषणमिति । ननु व्रजानि देवदत्तेत्य, त्र व्रजने देवदत्तस्य प्रवृत्तिनिवृत्त्योरभावात्तत्फलं प्रवृत्ति-निवृत्ति इत्यसङ्गतमत आह । जानीहीत्यादि ॥ शेषइति ॥ शेषशब्दार्थो नाध्याहार किं तु वाक्यै-कदेशन्यायेन श्रूयमाणस्य तदर्थान्तर्भावेण वृत्ति । तेन 'श्रूयमाणैकतिङित्यर्थ', इ-ति वक्ष्यमाणग्रन्थेन न विरोध । उद्देश्यविधेयभावइति ॥ स्वोद्देश्यकप्रवर्तना (प्रे-रणा) विषयत्वमित्यर्थः । प्राचीनमते तु देवदत्तनिष्ठ यदभिमुखीभवन तदनुकू-लव्यापारविषयीभूत, व्रजनमिति बोध । सबोधन च विभक्तिवाच्यम् । जानी-हीत्यस्य न शेष । तत्फल प्रवृत्तिनिवृत्ति इत्यपि तन्मते नास्ति । न चैव सति देवदत्तयज्ञदत्तविष्णुमित्रास्त्वं पचेति प्रयोगापत्ति, सबोध्यैकदेशस्य युष्मच्छ-ब्देन परामर्शानहीकारात्तस्यैव व्युत्पत्तेरिति बोध्यम् । व्रजानीत्यत्र विध्यादेरस-भवात्कथ, लोडित्याशङ्क्याह, । प्राप्तेकाल इति ॥ अतएवेति ॥ विधेयभूतक्रिया-यामेवान्वयादेवेत्यर्थ ॥ इति प्रथमा ॥

क्रियायाइति ॥ साध्यत्वेन भानात्साधनाकाङ्क्षेति भाव. । ननु क्रियाश-ब्दस्य प्रधानक्रियाया मुख्यत्वेन, कर्मादिकारकाणा तदनिवर्तकत्वेन कथ कारक-त्वमित्यत, आह । सर्वेषां चेति । ननु अनिष्यमाणपुत्राय गा दास्यामीत्यादौ क-थं सप्रदानत्व, तस्येदानीमसन्निहितत्वेन, कारकत्वासमवादित्यत आह । अस-न्निहितेति ॥ स्वज्ञानपूर्वकालत्वेनेति । स्वज्ञानस्य पूर्वकालवृत्तित्वेनेत्यर्थ । ननु पुत्रेणेव स्वज्ञानेन तस्याप्यसिद्धत्वामिति चेन्न । ज्ञानस्य सप्रदानत्वासभवेन ततो-ऽस्य विशेषात् । फलस्यापीति ॥ वस्तुतस्तोकेन पचति, ज्योतिष्टोमेन यजेतेत्यादौ भावनाभाव्यत्वाभिस्वर्गादिनिवर्तकत्वेन करणत्वस्येव स्तोक पचतीत्यादौ फलस्यभा-वनाजनकत्वमुपपादनीयम् । इयांस्तु विशेष । करणत्वेन, विवक्षाया तृतीया, उत्पाद्यत्वेन विवक्षाया द्वितीयेति । अत एव पचतीत्यस्य पाकेन करोति, पाकं करोतीति द्वेधा विवरण दृश्यते । बौद्धबटोडिति ॥ तदस्यास्त्यस्मिन्निति सूत्रे भा-

व्यक्तेयटयोर्बौद्धपदार्थानङ्गीकृत्य तत्र शब्दानां शक्तिमभ्युपेत्य तत्सादृश्याद्बाह्यपदार्थेषु घटादिशब्दप्रयोग इति सविस्तरं निरूपितम् । बौद्धइति ॥ स्मृतिं प्रति ज्ञानद्वारा जनकत्वायोगादेवमुक्तम् । पूर्वकालत्वेन ॥ अव्यवहितपूर्वकालस्थत्वेन । सत्कार्यवादे तु न कश्चिद्दोष इति बोध्यम् । कर्तुरीप्सिततमं कर्म ॥ नाभिप्रेतपरइति ॥ कोशे अभीष्टेऽभीप्सितमिति अभिपूर्वस्यैव तत्र रूढत्वात् । कर्तरिपष्ठीति ॥ ननु प्रकृत्यर्थकर्तुः प्रत्ययार्थकर्तरि कथमभेदान्वयो घटो घट इतिवदिति चेन्न । हरिं भजतीत्यादिप्रयोगे समवायिधात्वर्थकर्तुः प्रकृत्यर्थत्वेनाप्नोतिकर्तुः षष्ठ्यर्थत्वेन तयोर्भेदात् । सन्नन्तादिति ॥ ग्राममाप्नोतीत्यादावाप्नोतेः संबन्धानुकूलव्यापारे शक्तत्वेन तमादायेच्छायाः समानकर्तृत्वं बोध्यम् । ईप्सितमित्यत्र तु पिपक्षितस्तण्डुल इत्यादाविव व्यापारजन्यफलसंबन्ध आप्नोत्यर्थः । अत्रसंबन्धइति ॥ फलसंबन्ध इत्यर्थः । योग्यत्वाद्व्याख्यानाच्च । व्यपदेशिवद्भावेनेति ॥ वस्तुत उत्पत्तिरूपफलाश्रयत्वात्कर्मत्वं पाकं करोतीति विवरणदर्शनात् । कर्मत्वसिद्धिरिति ॥ ननु प्रथमयापि रूपसिद्धिरिति चेन्न । तथा सति 'सपूर्वायाः प्रथमाया' इति विकल्पापत्तेः । सकृत्त्वावित्यत्र यणनापत्तेश्च । ग्रामेवासइति ॥ संज्ञाद्वयसमावेशफलमिदम् । व्यापारलाभइति ॥ इदं निष्प्रयोजनम् । अन्यत्रबध्नातीति । न चान्यत्र बन्धनस्य मापनिष्ठाश्वगलविलाधःसंयोगो न फलमिति वाच्यम् । अरण्यस्थदण्डस्येवान्यत्र बन्धनस्यापि स्वरूपयोग्यतारूपफलजनकत्वमित्याशयात् । कर्तृपदाभावे प्रकृतधात्वर्थव्यापारजन्येत्यर्थलाभेनाश्वनिष्ठमक्षणजन्यो गलविलाधःसंयोग इत्यर्थप्रतीतेर्वा । फलाश्रयत्वेनाविवक्षणादिति ॥ तथा च फलाश्रयत्वेन विवक्षायां पयो भुङ्क्ते इति, करणत्वेन विवक्षायां पयसा भुङ्क्ते इति व्यवस्थया प्रयोगद्वयसिद्धिः । अन्वयवद्भारेति ॥ 'तमब्ग्रहणंकिमिति' यथाश्रुतमूलमसंगतमिति ध्वनितम् । वारयतीति ॥ इदं स्वार्थणिजन्तम् । फलाश्रयत्वमित्यर्थस्यैवेति ॥ तथा च कर्तुरिति न कर्मणि षष्ठी किं तु संबन्धे । संबन्धश्च स्वनिष्ठव्यापारवाचकधातूपात्तत्वं तच्च फलान्वयि । 'कर्तरि षष्ठी' इति पूर्वोक्तं तु प्राचामनुरोधेनेति भावः । वस्तुतः 'कर्तरि षष्ठी' इति प्राचीनोक्तपरित्यागे न किं चित्फलमस्तेमाणवकमित्यत्र दोषपदानातिरिक्तमिति तमब्ग्रहणं व्यर्थमेवेति केचित् । ईप्सिततमत्वं चेति ॥ अयं भावः । तमप्प्रत्ययः क्वचित्प्रकृत्यर्थतावच्छेदकगतातिशयबोधको यथा

विद्वत्तम इत्यादौ," प्रकृते तु प्रकृत्यर्थतावच्छेदकतावच्छेदकीभूतफलसंबन्धनिष्ठप्रकृतयात्वर्थप्रधानीभूतव्यापारप्रयोज्यत्वरूपातिशयबोधकमिति प्रत्यासत्तिलङ्गमिति। तथा च कर्तुरिति च कर्तव्यम् । प्रयोज्यत्वनिवेशादिति ॥ जन्यत्वनिवेशे तु पयोनिष्ठविभागस्य प्रधानीभूतव्यापारप्रयोज्यत्वेऽपि तदजन्यत्वात्कर्मत्वं न स्यात् । प्रयोज्यत्वं च साक्षात्परम्परासाधारणमिति न काप्यनुपपत्तिरिति भावः । इदं विचार्यते । 'कर्तुराप्यतमं कर्म' इत्येव कुतो न सूत्रितं तथा सति कर्तुरीप्सिततमं, तथायुक्तमिति च सूत्रद्वयं न कर्तव्यं भवति । कर्तृनिष्ठव्यापारप्रयोज्यफलसंबन्धाश्रयत्वं सूत्रार्थः । अग्नेर्माणवकं वारयतीत्यत्र स्वमेन कर्मत्वं, तन्निष्ठफलसंबन्धस्य कर्तृव्यापाराप्रयोज्यत्वात् । अत्र वदन्ति । काशीं गच्छन् पथि मृत इत्यत्र काश्याः कर्मत्वार्थमीप्सिततममिति । तथा चानीप्सितसमहार्थं तथायुक्तमिति । न हि काश्याः संयोगरूपफलाश्रयत्वमस्ति । एवं तण्डुल-विषक्षम्भृत इत्यादौ तण्डुलस्य फलसंबन्धानाश्रयत्वेन कर्मत्वानापत्तिः । ईप्सिततममित्युक्तौ तु फलसंबन्धप्रकारेच्छाविषयत्वात्कर्मत्वसिद्धिः । नन्वेवं काशीं न गच्छतीत्यत्र काश्याः कथं कर्मत्वं संयोगप्रकारेच्छाविषयत्वाभावादिति चेन्न । नञ्समभिव्याहारे संयोगाभावानुकूलव्यापारस्यैव गम्यर्थत्वेन संयोगाभावरूपफलाश्रयत्वेन कर्मत्वसिद्धेः । न चैवमग्नेर्माणवकं न वारयतीत्यत्रोक्तदिशा उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारस्य नञ्समभिव्याहारे वारयत्यर्थतयाग्नेः कर्मत्वापत्तिः । दुहियोगे पयस इवाग्नेरपि प्रधानीभूतव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वादिति वाच्यम् । कर्मत्वलक्षणे प्रधानीभूतव्यापारजन्यत्वस्यैव निवेशेनादोषात् । पयोनिष्ठविभागस्य गोनिष्ठव्यापारजन्यत्वेऽपि गोपनिष्ठव्यापारजन्यत्वस्यापि सत्त्वेन पयसः कर्मत्वसिद्धेः । न चैवं सति घटं जानाति इच्छतीत्यादौ कर्मत्वं न स्यात् स्वविषयीभवनानुकूलव्यापारस्य ज्ञानादिरूपस्य धात्वर्थतया स्वविषयीभवनस्य ज्ञानादिसमकालोत्पत्तिकस्य ज्ञानाद्यजन्यत्वात् । एवमग्नेर्माणवकं वारयतीत्यत्र माणवकस्य कर्मत्वानापत्तिः । उत्तरदेशसंयोगानुकूलव्यापाराभावस्य माणवकनिष्ठस्य प्रागभावरूपस्यानादित्वेन प्रधानीभूतव्यापारजन्यत्वादिति वाच्यम् । अस्तु तर्हि प्रयोज्यत्वनिवेशः । स्वविषयीभवनादेरपि स्वप्रयोज्यत्वस्यानुभवबलेनाङ्गीकारेणाद्ये दोषाभावात् । द्वितीये च कण्टकापसरणाद् दु खाभाव इत्याद्यनुरोधेन प्रागभावस्यापि प्रयोज्यत्वस्वीकारेणा-

दोषात् । अग्नेर्माणवकं न वारयतीत्यत्र तु नञ्समभिव्याहारे उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारः (गच्छन्तं माणवकं दृष्ट्वा तूष्णीं स्थितिरूपः) स च नाग्निसंयोगप्रयोजको माणवकव्यापारेणान्यथासिद्धेः । कारणत्वस्यैव प्रयोजकत्वस्याप्यन्यथासिद्धेरङ्गीकारात् । पयोनिष्ठविभागं प्रति तु गोपनिष्ठव्यापारमद्वारीकृत्यैव प्रयोजकं इति पयसः कर्मत्वासिद्धिः । कर्तुरीप्सिततममिति सूत्रे कर्तृग्रहणं त्वग्नेर्माणवकं वारयतीत्यत्राग्नेः कर्मत्वाभावाय । अग्निर्माणवकस्येप्सितो न चैत्रस्य । ननु कर्तृग्रहणं व्यापाराश्रयमात्रपरमन्यथा सार्थाद्धीयते इत्यत्र कर्मणिलकारस्य, शत्रूनगमयत्स्वर्गमित्यत्र च स्वर्गे कर्मत्वस्यानापत्तेः । आद्ये सार्थस्यापादानत्वात् । द्वितीये प्रधानानुरोधिकार्यस्य बलवत्त्वेन कर्तॄणां शत्रूणां कर्मत्वात् । तथा च माणवकनिष्ठव्यापारस्य प्रयोज्यसंयोगाश्रयस्याग्नेः कर्मत्वं दुर्वारम् । अथ तद्धातुजन्यबोधे मुख्यविशेष्यव्यापाराश्रयपरं कर्तृपदं तथा सति प्रधानीभूतव्यापारप्रयोज्यत्वार्थकतमब्ग्रहणवैयर्थ्यापत्तेः । प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता इत्यादौ अप्रधानीभूतव्यापाराश्रयेऽपि कर्तृपदप्रयोगदर्शनेन कारकप्रकरणे कर्तृशब्दस्य व्यापाराश्रयमात्रपरस्यौचित्याच्चेति चेत्सत्यम् । व्ययमेव कर्तुरिति, प्रत्याङ्भ्यामित्यादौ कर्तृपदस्य पूर्वस्येत्येतत्संनिधानेन व्यापाराश्रयमात्रवाचित्वेऽपि कर्तुरित्यत्र कर्तृपदं मुख्यव्यापाराश्रयमात्रपरं चेति । तमब्ग्रहणं तु इच्छागतोत्कटत्वबोधकं, तेन पुष्पाणि स्पृहयतीत्यत्र संप्रदानत्वं बाधित्वा परत्वात्कर्मत्वासिद्धिः । उत्कटे च "शेवन्तिके पुष्पे ममेच्छा, मल्लिकापुष्पे च उत्कटेच्छा" इति अनुभवद्वयसिद्धेः पुष्पेभ्यः स्पृहयतीत्यत्र स्पृहधातुरिच्छामात्रवाची, पुष्पाणि स्पृहयतीत्यत्र फलावच्छिन्नेच्छावाची । स्पृहेरीप्सित इत्यत्र धात्वर्थजन्यफलाश्रयत्वमात्रं विवक्षितं, न तु फलस्य धात्वर्थत्वमाग्रहः । कर्मसंज्ञायां तु यथा लाभस्तथोक्तं शेखरे । वक्ष्यमाणंयन्निर्बीजम् । फलसंबन्धानुकूलव्यापारार्थकस्याप्नोतेः कर्मप्रत्ययसमवधाने व्यापारप्रयोज्यफलसंबन्धार्थकत्वेन कर्मलक्षण इवात्रापि प्रत्यासत्त्या फले प्रकृतधात्वर्थत्वस्य दुर्वारत्वात् । 'तमब्ग्रहणं किमग्नेर्माणवकं वारयती'त्याधाकरग्रन्थस्तु प्रौढिवादेन प्रवृत्तः । ननु तण्डुलं पचतीत्यत्र घटस्यापि कर्मत्वापत्तिः । तण्डुलो विक्लिन्नो भूयाद् घटश्च भूयादिति समूहालम्बनेच्छामादाय घटस्यापि फलसंबन्धप्रकारेच्छाविषयत्वादिति चेन्नैवम् । फलसंबन्धनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यताश्रयत्वस्य विव-

क्षणेनादोषात् । परे तु सन्ग्रहणे फलाश्रयत्वयोग्यत्वम्यं निवेशः तात्पर्यग्राहकमन्यथा भूमिपतत्पर्णं मध्ये चैत्रेण धृतमित्यत्र भूमेः कर्मत्वानापत्तेः । न हि तत्र भूमिर्मेत्संयुक्ता भूयादिति पर्णस्येच्छा तस्याचेतनत्वात् । योग्यतानिवेशे तु पतनस्य भूमिसंयोगं प्रति स्वरूपयोग्यतारूपजनकत्वाद् भूमेः पतनजन्यसंयोगयोग्यत्वात्कर्मत्वसिद्धिः । तथायुक्तापिति तु अस्यैव प्रपञ्चः । पुष्पाणि स्पृहयतीत्यत्र नव्योक्तरीतिरेवानुसरणीयेत्यल पल्लवितेनेत्याहुः ॥ शक्तिमानर्थ इति ॥ द्योत्योऽर्थ इत्यर्थः ॥ तदर्थ इति ॥ वाच्योऽर्थ इत्यर्थः । हरिं नमस्कामिति ॥ क्रियाकारकभावसम्बन्धेन कर्मत्वशक्तिमद्धरिविशिष्टं भजनमिति बोधः ॥ नियमत्वमिति ॥ ननु कथं नियमत्वं क्रियाकारकभावसम्बन्धस्य प्रकृत्यर्थतुल्याभावेन तत्र स्वादीनामसिद्धेः । न च सोऽपि प्रकृत्यर्थः, विभक्तिस्तु द्योतिकेति वाच्यम् । तथा सति तस्य विशेषणतापत्तेः । किं च क्रियाकारकभावसम्बन्धस्य विभक्तिवाच्यत्वं न तु सूत्राक्षरलभ्यमिति चेन्न । सम्बन्धस्य सूत्राक्षरालभ्यत्वेपि भाष्यप्रामाण्येन द्वितीयावाच्यत्वाङ्गीकारात् । कर्मत्वशक्तेस्तु प्रकृत्यर्थत्वात्तदद्यो नियामकत्वमुपपद्यत एव ॥ द्योतकयोरिति ॥ उपसर्गोपपदयोः । तत्र हि हरिः सेव्यत इत्यत्र द्योतकयोरितहसुपोः समुच्चये द्वौ च पक्तस्तण्डुल इत्यादौ द्योतकवाचकयोः कृत्सुपोः समुच्चयः स न तस्वम् ॥ सूत्रमबोधे प्राधान्यम् । क्षधिअनयाइति ॥ ननु व्यति से इत्यत्र प्रत्ययादेव सर्वबोधः । एवमस्य स्त्री ई इत्यादौ प्रत्ययदेव सर्वबोधः । यदि "शिष्यमाण लुप्यमानार्थाभिधायी" ति न्यायेन तत्र निर्वाह इत्युच्यते तदा प्रकृतेरपि सम, किं च विदा, गर्गा इत्यादौ प्रकृतेरेवापत्यार्थवाचित्वदर्शनेन प्रत्ययस्य यिञादेरपत्यवाचित्वानापत्तिरिति चेत्सत्यम् । बाहुल्येन धातुप्रातिपदिकाभ्यामेव सुसिद्धर्थबोधेन तयोरेव वाचकत्वम् । व्यति से इत्यादौ तु क्वचिदेव शिष्यमाणद्योतकप्रत्ययात्प्रकृत्यर्थबोध इति विशेष इत्याशयात् । व्यतिसे इत्यस्य नत्ययते ऽसाधुत्वाच्च । प्रातिपदिकार्थस्येति ॥ प्रातिपदिकार्थनिष्ठकर्मत्वादेरित्यर्थः । तेन ॥ कृदादिना । एवं च प्रातिपदिकार्थमात्र इति मात्रग्रहणेन अन्यानभिहितकर्मत्वाद्याधिक्यस्यैव व्यवच्छेदः । न त्वन्याभिहितकर्मत्वाद्याधिक्यस्य । अत्र ताकिका — अनभिहित इति सूत्र कर्मादेर्विशेष्यत्वे द्वितीयादिरित्यर्थतात्पर्यग्राहकम । हरिं भजतीत्यत्र कर्मत्वादेर्विशेष्यत्वाद् द्वितीयादि । कृत कट इत्यादौ न तथेति न द्वितीयादिरिति वदन्ति । तत्र हरि

सेव्यते इत्यादौ वैयाकरणमते तिङर्थे कर्मादौ प्रथमान्तार्थान्वयेन तस्य विशेष्यत्वाद् द्वितीयाद्यापत्तेः। त्रोचस्त्विति ॥ परिनिष्ठिते प्रयोगे इति शेषः। स्वाश्रयद्वारेति ॥ स्वविशेष्यद्वारेत्यर्थः। वाच्यतावच्छेदकेति ॥ तच्च रूपं नियमेन क्रियाकाङ्क्षोत्थापकतावच्छेदकवैजात्यम्। तद्भिन्नस्यैवेति ॥ अत्र मूलं मृग्यम्। एतदेवाभिप्रेत्याह। वस्तुतस्त्विति ॥ समयः ॥ समाधानम्। नचान्येति ॥ अनन्वितार्थकात्विभक्त्यपेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वमिति भावः। षष्ठीवारितैवेति ॥ संबन्धस्य प्रातिपदिकार्थत्वेनादोषत्वादिति भावः। अनेनेति ॥ प्रातिपदिकार्थः संपन्न इत्यनेन। संबन्धस्यैवेति ॥ कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेत्यनुशासनादिति भावः। इतिबोध्यमि'त्युत्तरमितीति शेषेण वदन्तीति पूर्वेणान्वयः। इतरकारकाणामिति ॥ देवदत्तेन शत्य इत्यप्रयोगादिति भावः। वृत्तिविग्रहयोः प्राप्तिकर्त्रेति ॥ प्राप्त आनन्दो यमिति विग्रहवाक्ये यच्छब्दार्थो विशेष्यो द्वितीयार्थो विशेषणं व्युत्पत्तिवैचित्र्यात्। द्वितीयार्थे च कर्मत्वे आनन्दपदार्थस्य निरूपितत्वसंबन्धेनान्वयो व्युत्पत्तिवैचित्र्यात्। शब्दादिति ॥ प्राप्तिक्रियायाः शब्दतः साक्षात् कर्मण्यनन्वयादानन्दस्यैव तत्रान्वयादिति भावः। अधिकरणसप्तमीस्थले तु साक्षात् क्रियान्वयाभावेपि कारकत्वं भाष्यप्रामाण्यादिति बोध्यम्। परे तु— शय्य इत्यत्र साध्यत्वेन क्रियादेर्मानाभावेपि कर्मत्वस्य तन्निरूपितत्वे बाधकाभावः। न च कर्तुरीप्सिततमत्र कारकाधिकारात् क्रियाजनकत्वसमानाधिकरणं कर्मत्वं साध्यत्वेन क्रियामानमन्तरा न संभवतीति वाच्यम्। विशेषणतया भासमानस्य कर्मत्वादेः साध्यत्वेन भासमानक्रियापेक्षत्वेपि विशेष्यतयाभासमानस्य तस्य तेन रूपेण क्रियामानमन्तरेणाप्युपपत्तेः। 'समानार्थभङ्ग'इत्यप्ययुक्तम्। तावतामर्थानां संभवेन तत्त्वोपपत्तेः। अत एव वैयाकरणनये पाचक इत्यस्य पचतीति विवरणं सङ्गच्छते। 'सामानाधिकरण्यस्य हानि'रित्यप्ययुक्तम्। एकार्थीभावकल्पनातः पूर्वं स्थितस्य तस्योपजीव्यत्वात्। एतेन 'किं चे'त्याद्यपास्तम्। 'शब्दात् कर्मादेरि'त्यप्ययुक्तम्। शब्दतः क्रियान्वयित्वस्य कारकत्वप्रयोजकत्वे मानाभावाद् इत्याहुः ॥ 'उद्भूतशक्तित्वेन चे'ति पाठः। अतएवगतीति ॥ विभक्तिवाच्यतावच्छेदकरूपेण कर्मत्वादिशक्तेः सर्वत्र मानाभावादेव। तत्यकर्मत्वस्येति ॥ प्राप्तानन्द इत्यादौ भासमानकर्मत्वस्य, विभक्त्यवाच्यकर्मत्वस्येति वार्थः। नाक्रियान्वयनियमः ॥ क्रियायां

विशेषणतयान्वयनियमो नेत्यर्थः । क्रियाविशेषणत्वनियमेनेति । प्रातिपदिकार्थद्वारेति शेषः । विभक्तिप्रयोजकरूपेण । विभक्तिप्रवृत्तिप्रयोजकरूपेण । तत्तच्छक्त्वेन । तत्तच्छक्यतावच्छेदकत्वेन । मानमिति । शब्दशक्तिस्वभावादिति भावः । अत्र प्रमाणमाह । इष्यत इति चेदिति । इष्टशब्दसामानाधिकरण्यादिति । यद्यपीदं विग्रहे एव न वृत्तौ, तथापि विग्रहे कर्मत्वविशिष्टवाचिसुबन्तादित्यर्थोऽत्र विवक्षित इति भावः । तद्वाचकशब्देनेति । विग्रहस्येष्टशब्देन 'इष्यते' इति शब्देन चेत्यर्थः । कर्मत्वविशिष्टबोधकसुबन्तादिति । प्रथमान्तं च न तादृशं सुबन्तमिति भावः । वस्तुत कर्मत्वाविशिष्टइति । वास्तवकर्मत्वविशिष्ट इत्यर्थः । धात्वर्थफलविशेष्यमिति । सति संभवे वृत्तिविग्रहयोरर्थसाम्यं विशेषणविशेष्यभावसाम्यं चापेक्षितमिति भावः । तद्विषयस्य । छेदनस्य । अबोधीति । बुधे कर्तरि दीपजनेति चिण् । ज्ञानाकारानुकरणमिति । ज्ञानविषयबोधकः शब्द इत्यर्थः । शब्दाभिलप्यमानाकारइति । शब्दजन्यबोधविषयक इत्यर्थः । प्रथमान्तस्येति । प्रथमान्तघटितस्य नारद इतीति शब्दस्येत्यर्थः तथा नारद इतीत्यस्य नारद इत्येतच्छब्दजन्यबोधविषयोर्थः । एवं च विशिष्टार्थस्य कर्मत्वेपि तद्बोधस्याप्रातिपदिकत्वान्न द्वितीयेत्यर्थः । तद्वचनसामर्थ्येनेति । यादृशविभक्त्यन्तेनाव्ययीभावः प्रत्यासत्त्या तद्विभक्त्यर्थे वर्तमानमव्ययमित्यर्थ इति भावः । अभ्रआपइति । छान्दसत्वान्नात्राव्ययीभावो निपातएकाजिति न प्रगृह्यत्वं किं त्वनुनासिकविधानसामर्थ्यात्संहितायां अविवक्षणाच्छान्दसत्वाद्वा न सन्धिः । लिङ्कृत्तद्धितसमासैरिति । परिगणनाभावपक्षे आह । किंचेति । अस्यैवार्थस्येति । अधिकरणत्वशक्तेरित्यर्थः । तथायुक्तं चानीप्सितम् । प्रकर्षहीनस्यापीति । प्रधानधात्वर्थाप्रयोज्यस्यापीत्यर्थः । अनेकाशंम्यादिति । तथा च अश्मीनमकं वारयतीत्यत्र माणवकस्याप्यपादानत्वापत्तिरिति भावः । इदं चिन्त्यम् । तथायुक्तमित्यस्य प्रारणार्थानामित्यनेन अपवादत्वाद्बाधेपि कर्तुरित्यनेन परत्वात्कर्मत्वोपपत्तेः । न हि तस्यापवादः । प्रकर्षहीने तत्प्राप्तेः । तत्त्वाभावादिति । तथायुक्तत्वाभावादित्यर्थः । ननु विभागस्य धात्वर्थत्वाभावे प्रकृतधात्वर्थविभागाश्रयत्वनिबन्धनमपादानत्वमपि प्रयागस्य कथमिति चेन्न । फलतावच्छेदकसम्बन्धेन फलाश्रयत्व हि कर्मत्वोपयोगि । प्रयागादित्यत्र देवदत्तनिष्ठसमवायस्यैव फलतावच्छेदकसम्बन्धत्वेन प्रयागे तेन सम्बन्धेन फलाभावात् । अकथितं चेति । तदपवादत्वेनेति । एतदु-

तरं कर्तुरित्येतदेकवाक्यतापन्न 'कर्मणि द्वितीये' त्यादेरपि तथापत्येति पूरणीयम् । वैय्यर्थ्यमिति । दुह्याजिति परिगणनमनाश्रित्येदम् । त्वद्रीत्या तु कर्मत्वेन बोधार्थं सूत्रद्वयस्यावश्यकतया तद्वैयर्थ्यशंकाया असंगतिः । माणवकादपीति । अपि शब्दादग्रेरपादानत्वाविवक्षायामुभयत्र द्वितीया स्यात् ॥ तद्विवक्षायां तूभयत्र पञ्चमी स्यादिति भावः । परास्तमिति । कर्मत्वेत्यंशस्तत्वेनेत्यंशश्चेत्येतद्द्वयमपास्तमित्यर्थः । अतएव । प्रथमांशस्य अपास्तत्वादेव । तदपास्तत्वं तत्र्ये स्फुटीभविष्यति । केचि नु अत एव सम्बन्धार्थकत्वाभावादेव नाशङ्कितमित्युक्तरं सम्बन्धार्थकत्वं वक्तुमिति शेष इत्याहुः । कर्मयुक्तत्वाभावइति । कर्मणो ऽनुपादानात् । तदुपादाने तु तत्रैव नटस्यान्वयेन कारकत्वाभावः । सतिसम्भवइति । अविनीतं विनयमित्यत्र तु असम्भवादनन्तरमिति बोध्यम् । नानेनकर्मत्वमिति । ननु शास्त्रेण माणवकं धर्मं ब्रूते इत्यत्र शास्त्रस्य अकथितं चेत्यनेन कर्मत्वं दुर्वारं शास्त्रस्य धर्मेण प्रतिपाद्यप्रतिपादकभावसम्बन्धसत्त्वादिति चेन्न । तत्तद्धातुयोगे तत्तत्सम्बन्धविशेषस्यैव कर्मयुक्शब्देन विवक्षितत्वात् । ब्रूञ्योगे माणवकस्य धर्मेण स्वविषयकज्ञानेन आश्रयाश्रयिभावसम्बन्ध एव तेन विवक्षितः । एतेन क्षेत्रे धान्यं याचते इत्यत्र क्षेत्रस्य धान्यसंयोगेपि न कर्मत्वम् । स्वस्वामिभावसम्बन्धस्यैव तत्र ग्रहणात् । एतत्सर्वं व्याख्यानतो निर्णयम् । सम्प्रदानेति । माणवकं धर्मं ब्रूते इति संप्रदानोदाहरणम् । व्रजमवरुणद्धीति अधिकरणोदाहरणम् । प्रधानकर्मत्वं च गवादीनामिति । इदमकथितसूत्रमतवे बोध्यम् । तत्तत्त्वे तु अकथितसूत्राविहितकर्मत्ववत्त्वमेवाप्रधानकर्मत्वं तत्रैवं छादयः । गौनिष्ठेति । स च व्यापारो लोकप्रसिद्धः । यद्वाशिसूत्रारूढभाष्यविरोधमाशङ्क्य परिहरति । गर्गाइति । एवमेवेति । व्यापारद्वयार्थकत्वेनैवेत्यर्थः । अतएवेति ॥ परिगणितातिरिक्तानामपि व्यापारद्वयार्थकानां धातूनां सत्त्वादेवेत्यर्थः । कर्तुश्चकर्मणइति । तद्बोधकात् लादीनाद्धुरित्यन्वयः । द्विकर्मणामित्यत्र गणनिर्दिष्टानां ग्रहणान्न पुनरुक्तिः । उक्तप्रधानेति । कर्तृप्रत्ययसमभिव्याहारेत्युक्तेत्यर्थः । अनभिधाने बीजमाह । अतएवेति । कर्मसंज्ञैवेत्यनेन अपादानत्वव्यवच्छेदः । विनयेनचेति । अविनीतस्येति शेषः । यद्याचष्टेतदापायेनेति । स्वगतं ज्ञानं स्वस्माच्चत्र गच्छतीति कल्पनया । प्रकृतं । कर्तुरित्यनेन विहितं ।

एकार्थकत्वेनोक्तत्वेति । व्याप्नोतीत्यर्थकत्वे प्राप्नोतीति । द्रव्यद्वारैवेति । इदं
चिन्त्यम् । कालिकसम्बन्धस्य परिच्छेद्यपरिच्छेदकभावस्य वा साक्षात्सम्बन्धस्य
सम्भवात् । पर्यालोच्येति । इदमपि प्रायिकम् । तण्डुलादितात्पर्येणापि मासं त-
ण्डुलं पचतीति प्रयोगात् । तण्डुलादेरचिरेणैव पाकात् । सबहिरङ्गइति । तेन
मासमोदनः पच्यते इत्यत्र मासरूपे कर्मणि न लकार इति भावः । ते । कालाध्वा-
दिभिः । कर्मणिभावेचेति । यथा कर्मणि तथा भावेचेत्यर्थः । परे तु कालभावा-
ध्वेति भाष्योक्तवचनस्य युक्तिसिद्धार्थकत्वेपि भाष्योक्तेर्ग्रन्थ तथा कल्पना
नोन्येन । तथा च सकर्मकविषयेपीत्ययुक्तम् । अकर्मकाणामित्यस्य पूर्वेणाभिसम्ब-
न्धात् । त्वन्मते कालभावाध्वगन्तव्यादेश्च कर्मसंज्ञा इति वक्तव्ये अकर्मकाणामि-
त्यस्य वैयर्थ्यम् । मासमोदनं पचतीत्यत्र तु कालाध्वनोरिति द्वितीया । अत्यन्त-
संयोगाविवक्षायां मासस्य द्विरोदनं पचतीत्येव । कालभावाध्वेत्यत्र । कालग्रहणं
तु मासं द्विरोतेत्यादौ कर्मत्वार्थम् । आस्यते मास इत्यादौ कर्मणि लकारार्थं च ।
कालाध्वनोरित्यत्र कालग्रहणं तु सकर्मकधातुयोगे द्वितीयार्थम् । प्राक्तनमेवेत-
त्कर्मेति भाष्ये तु एकदेशयुक्तिः । किं च सकर्मकधातुस्थलेपि मासादेः कर्मत्वे
आप्नोत्यर्थकर्मण्येव लादयस्तु । तस्य प्राधान्यात् । प्रधानकर्मण्याख्येये लादी-
नाहुर्द्विकर्मणामिति वचनात् । ननु सम्बन्धप्रयोजकमासाद्येव मासमास्ते इत्यादौ
धात्वर्थः । आसनेन व्याप्नोतीति तु फलितार्थकथनमिति चेन्न । एवमपि कु-
रून् तण्डुलं पचतीति प्रयोगापत्ति । इष्यते तु कुरुषु तण्डुलं पचतीति । कु-
रवस्तण्डुलं पच्यन्तेति प्रयोगापत्तिश्च । कठिनपाकस्येति त्वदुक्तयुक्तेरनवता-
रात् । न चाधाररूपं कर्म बहिरङ्ग रुधेः प्रजरूपे कर्मणि लकारश्च न भवत्येव
अप्रधाने दुहादीनामित्युक्तेरिति वाच्यम् । व्यापारद्वयार्थकत्वेन व्रजस्य कर्तु-
रिति कर्मत्वे पक्षे तत्र लकारानापत्ते आधारत्वमात्रेण बहिरङ्गत्वस्य निर्बीजत्वाच्चे-
त्याहुः । गतिबुद्धीति । प्रधानानुरोधिकार्यस्यसर्वतोबलवत्त्वादिति । तत्फलं तु
मूलकेनोपदंशं भुङ्क्तेऽत्र मूलकस्य उपदंशक्रियानिरूपितकत्वेपि प्रधानभुजिक्रि-
यानिरूपितकरणत्वनिबन्धनतृतीयासिद्धि । परत्वात्तत्र तृतीयाया उपपादने तु
अस्य फलं मृग्यमिति केचित् । परे तु उपदंशक्रियायां कर्मत्वेन अन्वितस्यैव
भोजने करणत्वादन्तरङ्गत्वाद् द्वितीया प्रासानेन वार्यते । उभयत्र मूलकस्य शाब्द

एवान्वयः अन्यथा समासानापत्तेः । अत एव, कर्तुं शक्यते घट इत्यत्र प्रधानानुरोधिनी प्रथमा । हरिरपि : 'शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते' इतीत्याहुः । ननु गुरुं ग्राम इत्यत्र आक्षिप्तगत्यापि गत्यर्थत्वात् गत्यर्थेति कर्तरिक्तो न स्यादित्याशङ्क्याह । कर्तरिक्त इति । अतएव । आक्षिप्तगत्या गत्यर्थकत्वमित्यस्याभिमानिकत्वादेव । तस्यगत्यर्थत्वमेवेति । परे तु नवेतिसूत्रे भाष्ये अप्राप्त हारयति भारं देवदत्त इत्युक्ते नगतीति सूत्रे न ब्रह्निर्गत्यर्थ इति भाष्याच्च गत्युपसर्जनप्रापणार्थकस्य आक्षिप्तगत्या गत्यर्थकस्य च न गत्यर्थपदेन ग्रहणं ग्रामापणे इत्यत्र तु प्रापणं गतिश्चे गतिबुद्धीति सूत्रे अणाविस्यस्य प्रयोजनं निवृत्तेपणाद्गमेः ण्यन्ताण्णौ बोध्यमित्याहुः । सामर्थ्यादिति । शब्दाधिक्यादर्थाधिक्यमिति भावः । सामान्यापेक्षमिति । अयमनुक्तोपालंभः । क्तः कर्मणीति सूत्रे एतद्विरुद्धमनोरमाप्रन्थदर्शनात् । तत्त्वप्रत्यभिज्ञेति । विशेष्यांशत्यागेपि विशेषणांशे स एवात्रार्थ इति प्रत्यभिज्ञयेत्यर्थः । अर्थभेदेनवेति । वहधातोः स्यंदनप्रापणरूपार्थभेदेन शब्दभेद इत्यर्थः । कर्मत्वेनेति । इदं मातुः स्मर्यत इत्याद्यर्थम् । तत्सामर्थ्यादिति । नियमेन सिद्धे ऽकर्मकग्रहणसामर्थ्यादित्यर्थः । अन्यथा कालादेः कर्मसंज्ञाप्रयोजकव्यासादिरहितेर्थे एव अकर्मकत्वं स्यात् न तु मासमास्ते देवदत्तेनेत्यादौ इति वदन्ति । परे तु इच्छाक्रियतेत्यत्र भावे क्तः पीता गावो भुक्ता ब्राह्मणा इत्यादौ भावे क्तान्तादर्श आद्यजिति हरदत्तादिग्रन्थात् गतं तिरश्चीनमित्यादिप्रयोगाच्च क्तः कर्मणीति सूत्रे तयोरेवेति सूत्रे ऽविवक्षितकर्मणामपि अकर्मकपदेन ग्रहणम् । गतं तीरश्चीनमित्यत्र गत्यर्थ इति भाविक्त इत्यन्ये । इह सूत्रे तु अकर्मकपदेन अविवक्षितकर्मकाणां ग्रहणे न मानम् । लावयति केदारं देवदत्त इत्यत्र तु अर्थान्तरे वृत्त्या ऽकर्मकत्वम् नाविवक्षया प्रेपणांशत्यागात् । विशेषणांशे तत्त्वप्रत्यभिज्ञायामपि विशेष्यांशत्यागेनार्थन्तरत्वसम्भवात् । प्रत्युत न च केचित्कालभावाध्वपरिकर्मकाः तदेवं विज्ञास्यामो यत्कर्म भवति न च भवति तेनाकर्मणा न चेत्कर्म क्वचिदपि न भवतीति भाष्याभ्यां अत्यन्तविद्यमानकर्मकाणामेव गतिबुद्धीति सूत्रे ग्रहणमिति लभ्यते । अन्यथा कालादिकर्मणो ऽविवक्षाया कालादिकर्मराहित्यसम्भवेन तदसङ्गतिः स्पष्टैव । एवं गत्यर्थाकर्मकेतिसूत्रेपि अविवक्षितकर्मणो न गृह्यन्ते । दत्तवान्पक्वानित्याद्यर्थे दत्तः पक्व इत्याद्यापत्तेः ।

नचैवमुक्तभाष्याभ्यां सकर्मकधातुयोगेऽपि कालादीनामकर्मकत्वमिति गत इति वाच्यम् ॥ न च केचिदप्यकर्मकाः कालभावाध्वभिरकर्मका भवन्तीति पूर्वभाष्यस्य न चैतत्कर्मकालादिरूपं क्वचिदप्यकर्मकेन भवति किं तु सर्वत्राकर्मके भवतीत्युत्तरभाष्यस्य च अर्थाङ्गीकारात् यत्कर्म भवति न तु भवतीति भाष्यस्य तु तण्डुलादिरूपं कर्म क्वचित्सकर्मके भवति क्वचित्सकर्मके न भवतीति तेनैव कर्मणाऽकर्मकत्वं ग्राह्यम्। न तु कालादिकर्मणा। तस्याकर्मकमात्रे सत्त्वादित्यर्थः। न च कालादिकर्मणा सकर्मकेष्वभावेन तैरेवाकर्मकाः पच्यादयोऽकर्मकपदेन गृह्यतामिति वाच्यम्। तथा सति गतिबुद्धीति सूत्रे गत्यादिग्रहणवैयर्थ्यापत्तेः। अत एव ओदनादेः सम्बन्धित्वेन विवक्षायां पाचयत्योदनस्य देवदत्तेनेत्यादय एव प्रयोगाः न तु देवदत्त इति वदन्ति। पूर्वकर्मणोऽविवक्षया भावे क्तः पश्चात्कर्मणो विवक्षाया इति तु क्तपूर्वी कटं अधीती व्याकरणे इत्यादिभिन्नप्रयोग एव न तु सर्वत्र। तेन तथा विवक्षया तण्डुलान्पच्यतेति तण्डुलान्पक्व इति च भावे लकारादयोऽसाधव। इन्विषयेतु तण्डुलेषु पक्वी पक्वपूर्वीतण्डुलमित्यादयः साधव एव। करोत्यन्विषयस्येति कृतपूर्वीकटमिति वार्तिकभाष्यप्रयोगाभ्यां तथावगमात्। भ्रान्त देशमित्यत्र तु गत्यर्थकेसाधुत्वं। ओदनस्य पच्यते देवदत्तेनेत्यादौ भावे लकारस्तु साधुरेव। मातुः स्मर्यतेति भाष्यात्। सर्वथा ओदनादेः कर्मणोऽविवक्षया पच्यते देवदत्तेनेत्यादौ भावे क्तो भवत्येव। इच्छता क्रियतेत्यत्र भावे क्त इति हरदत्तेनोक्तत्वात्। एवं च कर्मणोऽविवक्षा त्रेधा। सर्वथा तदप्रयोगः सम्बन्धित्वेनाविवक्षया तत्प्रयोगः पूर्वमप्रयोगः पश्चात् प्रयोगश्चेत्याहुः। द्वद्वेति। वस्तुत प्रयोगश्शाभिनीति समुदायस्यानुकरण न तु द्वन्द्वे: पूर्वनिपातापत्तेः। न्यभिविशते सन्मार्गमित्यत्र कर्मत्वापत्तेश्च। अविकृताया इति। अभिनिविशित्यानुपूर्व्या प्रयोगे तदर्थाधारः कर्मेति सूत्रार्थः। आरोप्येति। अयथोन्तरकृत्वेन सत पूर्वे प्रवृत्तेरिति भावः। अत्रेद बोध्यम्। क्ते द्वितीयेति चान्द्रसूत्रात् पुरुषारावनमृतोति प्रयोगाच्च क्ते योगे द्वितीयापि साध्वी। एवचौश्रमेः आत्मोदरकुक्षिष्विति चान्द्रसूत्रात् कृति न सन्ति कुक्षम्भरा विश्रामहेतुरित्यादिप्रयोगाच्च विश्रामकुक्षिम्भरादयः साधवः। एव गीष्पतिर्धिषणो गुरु आप्यमम्यं इत्यादिप्रयोगाद् गीष्पत्यादयो व्याकरणान्तरे साधवो ज्ञेया। ये तु

एतद्व्याकरणविरुद्धाः व्याकरणान्तरे साधुत्वेन अनुक्तास्तदपि चुलुक्यां कुम्भयोनिश्चकारेत्यादयः प्रयोगाः ते त्वसाधव एवेति । अत्रान्तमिति । अन्तरायां पुरीति भाष्यप्रयोगात् स्त्रियामप्यन्तरा शब्द इति भावः । तस्यैवेति । अवधित्वस्यैवेत्यर्थः । तेन हलो ऽनन्तरा इति सूत्रे द्वयोश्चैवान्तरेति भाष्यप्रयोगः सङ्गच्छते । उभयमस्तीति । यत्र द्रोणो व्रीहिरस्तीत्युच्यते तत्र खारीव्रीहिरप्यस्त्येव । खार्याः द्रोणव्याप्यत्वादिति भावः । निरूपकमिति । एवं च भक्तो विष्णुं प्रतीत्यत्र निरूपकत्वं द्वितीयार्थः । स्वामीति । तथा च लक्ष्मीर्हरिं प्रतीत्यत्र स्वामित्वं द्वितीयार्थ इति भावः । भागशब्देन च स्वत्वविशिष्टमुच्यते । यद्यपि स्वत्वं द्वितीयार्थ इत्युक्तावपि न किंचिद्बाधकं तथापि लक्षणत्वस्य द्वितीयाप्रकृत्यर्थनिष्ठत्वेन तदनुरोधादेवमुक्तम् । भागवाचकाद् द्वितीयापत्तिभ्रमवारणार्थं च । अन्वयइति । कर्मत्वेति शेषः । परिच्छेदकत्वम् । निर्णायकत्वम् । तथा च विषयभूतेप्रित्यस्य प्रत्यादिद्योत्येषु तन्निर्णयेषु चेत्यर्थ इति भावः । सामर्थ्याभावादिति । वृक्षस्य सेचने एवान्वयादिति भावः । ननु प्रतिपरिच्छेद्यसम्बन्धस्य वृक्षान्वयात्सामर्थ्यं सूपपादमित्यरुचेराह । किं च प्रत्यादेरिति । क्रियाविशेषकत्वइति । इदं चिन्त्यम् । क्रियाविशेषद्योतकत्वस्य प्राचीनैरप्यनङ्गीकारात् । व्याप्यव्यापकभावसम्बन्धस्यैव तन्निर्णयत्वोक्तेः । वस्तुतस्तु प्रत्यर्थमित्यत्र प्रतिशब्दार्थः सम्बन्धो वीप्सा च । अर्थमर्थं प्रतीति विग्रहवाक्ये तु प्रतिशब्दः सम्बन्धमात्रे वर्तते न तु वीप्सायाम् । वीप्सा तु द्विर्वचनद्योत्या इति नाव्ययीभावः । तदुक्तं हरदत्तेन । अर्थमर्थं प्रतीत्यत्र प्रतिशब्दो न वीप्सायां वर्तते । किं तर्हि कर्मप्रवचनीयत्वात् सम्बन्धमवच्छिनत्ति । वीप्सा तु द्विर्वचनद्योत्या । अतोऽर्थमर्थंप्रतीत्यत्र नाव्ययीभावः । प्रत्यर्थमिति वृत्तौ तु वीप्सायां प्रतिरस्तीति समासो भवति प्रतिनोक्तत्वाद्वीप्साया द्विर्वचनाभावः । तथा च लक्षणेत्थंभूतेति सूत्रे वीप्सापदं तद्विषयसम्बन्धपरम् । तेनार्थमर्थं प्रतीति वाक्ये प्रत्यर्थमिति वृत्तौ च प्रतेः कर्मप्रवचनीयत्वादुभयत्र द्वितीयासिद्धिरिति । तदेतत्सर्वमभिप्रेत्याह । वृत्तिविषयेइति । ननु क्रियायोगाभावादिति कथमुक्तं प्रतिद्योत्यसम्बन्धं क्रियागतत्वादिति चेन्न । उपसर्गाः क्रियायोगेत्यत्र क्रियायोगस्त्रेधा । स्वार्थात् प्रच्याव्य धातोरर्थान्तरे स्थापनं यथा 'अनुभवतीति' । क्वचित्क्रियागत-

त्रिशेषोक्तिः यथा 'प्रपचतीति' । प्रक्रमप्रकर्षौ हि प्रशब्दार्थः । क्वचित्धात्वर्थानुवादकत्वम् । यथा, कुतो ऽध्यागच्छतीति । कर्मप्रवचनीययोः सम्बन्धस्तु उभयगतत्वात् न, क्रियामात्रगतं इति आशयात् । कर्मप्रवचनीयसंज्ञाया उपसर्गसंज्ञापवादत्वव्यवहारस्तु तद्भावाभिमात्रेण । एतेन द्वयोः सम्बन्धस्य क्रियात्विधात् तयो प्राप्तिरिति शेखरोक्तमपास्तम् । युक्तत्वस्याभावादिति । कर्मप्रवचनीययुक्ते द्वितीयेत्यत्र युक्तशब्दः सम्बन्धप्रतियोगिपर इति भावः । धात्वर्थमात्रेति । उपसर्गाः क्रियायोगेऽत्र धात्वर्थानुवादकत्वमपि योगशब्दार्थ इति भाव । अतएवेति । उपरस्थुल त्वया सुपिक्तं किं तवात्र फलं भवति इत्यत्र सेकस्य पूजात्वेपि तत्कर्तुर्मूर्खत्वेन निन्दा प्रतीयते तु सूजेनि भाव । प्रथमैवेति । विन्दुपदादिति शेषः । इति द्वितीया । कर्तृप्रत्ययसमभिव्याहारेति । कर्मप्रत्ययासमभिव्याहारेत्यर्थः । भावप्रत्ययसमभिव्याहारेति, वा । तेन नान्योन्याश्रयः । असाधुत्वेति । क्रियाया परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा तत्र, करणं तत्तदा स्मृतमिति । अनविवक्षयैतदुक्त्या अतथापुनेपि विवक्षया करणत्वसूचनात् । उभयोगलक्षापद्यीति । इदमयुक्तम् । कर्तृसाहचर्येणसाक्षाद्धात्वर्थाश्रये कर्मण्येव षष्ठीप्रवृत्ते । अत एव, लोक पाक इत्यादौ न षष्ठी । करण तु न धात्वर्थाश्रयः । धात्वर्थं भेदेनान्वयि कर्म, गृह्यते इति तु न युक्तम् ॥ मास शयिता कुरुनधिशयिता इत्यादौ षष्ठ्यापत्ते । मास शयितेत्यत्र आप्नोत्यर्थस्य कल्प्यमानत्वेन शेते इति स्वाभाविकार्थस्य मासो नाश्रय । तेन मनसा देवीत्यादौ करणे तृतीया साध्व्येव । साहित्यमिति । विद्यमानत्वमपि सहशब्दार्थ । तेन सहैव दशाभि पुत्रैर्दशभि भार वहति गर्दभीत्यत्र तृतीया सिद्धा । पुत्राणा विद्यमानत्वपीति तदर्थं । समानकालिकेति । तात्कालिकेतिवत्समानकालिकेति युक्तम् । क्रियादिमत्वमिति । पुत्रेण सहागत इत्यादौ पुत्रकर्तृक आगमनक्रियासमानकालिक आगमनकर्ता पिता आगत इति बोध । केचित्तु, समभिव्याहृतक्रियासामानकालिकत्वमेव सहार्थ । तच्च आगमनक्रियान्वयि । अत एव सह कृत्वा सहयुध्वेति सिद्धमित्याहुस्तन्न । सपुत्र पितर हन्तीति प्रयोगानापत्तेस्तस्मात् सहार्थस्य पित्रर्थेऽन्वयः । अप्रधाने इति तु पुत्रेण सह पितुस्स्थौल्यमित्यत्र पितृपदात्तृतीयावारणाय । पुत्रनिष्ठस्थौल्यसमानकालि-

कस्थौल्यवत् पितुः स्थौल्यमिति बोधः । कर्तृत्वादेवेति । सहार्थघटकमप्यंग-मनं धात्वर्थत्वत्साध्यत्वेन भासत इति भावः । मुख्यमुदाहरणमिति । ननु तिलैः सह माषान् वपति पुत्रेण सह पितरं हन्तीत्यत्र कर्मत्वेन द्वितीया प्राप्नोतीति त-दपिमुख्यमुदाहरणमिति चेत् । अस्तु । नतृतीयेति । कमण्डलुपाणिपदार्थस्य लक्ष्यलक्षणभावेन छात्रेन्वयविवक्षायामिदम् । सविशेषणे विधिनिषेधाविति न्या-येन विशेषणे कमण्डलौ लक्षणत्वपर्यवसानसम्भवात् । लुकोदुर्वारत्वमिति । उरणसूत्रस्थेभक्तत्वे वर्त्ततेत्यत्र इत्यादिःशेषो न सिध्यतीति भाष्यं तत्रत्यविवरणग्र-न्थश्च प्रौढ़त्वेति तद्विरोधः । लक्षणे इत्येव सिद्धे इत्थंभूतेति व्यर्थमिति केचित् । दैवादिकस्येति ॥ तस्यापि अछोपे सत्तेति रूपसम्भवात् । व्यापारवदेवेति । त-ज्जन्यत्वेसति तज्जन्यजनको व्यापारोत्र विवक्षितः न धात्वर्थमात्रम् । निर्व्यापार-त्वादिति । पुण्यजन्यस्य दर्शने हेतोरन्यस्याभावात् । सज्ज्ञानद्वारेति । ज्ञान-निष्ठं हेतुत्वं विषये आरोप्यत इति भावः । इति तृतीया । क्रियामात्रस्येति । तेन दाशगोघ्नौ संप्रदाने भैष्यब्रुवोर्हविषो देवतासंप्रदाने इत्युपपन्नं भवति । तत्र क-र्मसंप्रदानयोर्भक्ष्यभक्षयितृभावः सम्बन्धः । एवमन्यत्रापि यथा प्रयोगं सम्बन्ध-ऊहनीयः । संप्रदानमिति महासंज्ञाकरणं सर्वनामस्थानमिति वत् । सएवोद्देश्य-इति । अत एव उद्देश्यत्वं चतुर्थ्यर्थं इत्यभियुक्ताः । अन्तरङ्गत्वादिति । वि-प्रापेक्षयेति शेषः । कर्म । फलेनाभिसम्बन्धुमिष्टम् । विप्रस्तु फलाश्रयेणाभिसम्ब-न्धुमिष्ट इति स बहिरङ्गः । साधकादेति । न च क्रियया यमभिप्रैति तत्रापि यसंग्रहणाभावेन अकर्मकविषयेपि वार्तिकेन संप्रदानसंज्ञा दुर्वारेति वाच्यम् । वटो भवतीत्यत्र कर्तृसंज्ञायाश्चारिताथ्यात् । न हि तत्र वार्तिकं प्रवर्तते अचेतनत्वेन इच्छाया असंभवात् । एवं रथो गच्छतीत्यादिसकर्मकविष-येपि कर्मसंज्ञा चरितार्थेति बोध्यम् । बाधकेति । क्रिययेति सहयोगे तृतीया । पत्ये शेत इत्यत्र च पतिशयनयोरुद्देश्योद्देश्यिभावः संबन्ध इति भावः । केचित्तु करणे तृतीया । शयनादिक्रियया सुखादिनायं सम्बन्धुमैच्छति स संप्रदानमिति वार्तिकार्थ इत्याहुः । किमनयेति । कर्मणेति सूत्रं क्रिययेति वार्तिकं च व्यर्थ-मिति भावः । दाशगोघ्नौ तादर्थ्येत्येव सिद्धमत आह । तत्संप्रदानकमिति । अतएव ॥ संप्रदानान्वितदानबोधार्थत्वादेव ॥ तदर्थत्वाभावेनेति ॥ मुक्तये हरिं

भजतीत्यत्र ज्ञानद्वारा हरिद्वारा भजनस्येव गवादिद्वारा दानस्य तादर्थ्यसंभवात् । प्रौढ्येदम् । पतिमनुकूलयितु शेत इति सम्प्रत्ययात् । क्रियार्थोपपदस्येति सिद्धम् । देवदत्तामिति ॥ आधिकरणसत्त्वावत् कर्मसंज्ञाप्यस्या बाधिका स्यादिति भावः ॥ ङीप्समासपदेनेति । सन्नन्तस्यापि वुद्धिपक्षार्थयोरित्यनेन ग्रहणमिति भाव । ज्ञाप्यमान इत्येव सुवचम् । एव स्पृहेराप्यमिति सुवचम् । क्रुधद्रुह । क्रोधादयो ज्ञनादिवत्सविषया । य प्रतिकोप इत्यस्य यद्विषयक. कोप इत्यर्थ । दानरूपमिति । स्वस्वोत्पत्तिरित्यर्थः । नतद्बोधात्प्रतिरिति । प्रातिपदिकार्थसूत्रस्थशेखरेणास्य विरोधपरिहारश्चिन्त्य । साक्षात्प्रभृतीनि चेत्यत्र च्व्यर्थ इत्युक्तेराह । ऊर्यादिष्विति । एकस्या एवेति । एकजातीयाया इत्यर्थ । यथा इको यणचीत्यादौ । आधिकरणसप्तम्या सतिसप्तम्याश्च प्राप्तौ आद्या बलवतीति । नित्यमिति । अत्र पक्षेप्येव । नम स्वस्तीत्यत्र साहचर्येणाव्ययस्यैव ग्रहणात् । अव्ययत्वन्तु नात्र । लिङ्गसङ्ख्यायोगात् । इत्यादेनेति । चतुर्थीनित्यर्थ । स्त्रिया अपि गन्तृप्राप्यत्वेनाध्वत्वादिति भाव । तेन गन्तृप्राप्ते ग्रामे ग्राम गच्छतीत्येव । मनुजनपिष्ठिते ग्रामे तु ग्राम ग्रामायेत्युभयं साधु । नीवह्योर्गत्यर्थत्वाभावात्तद्योगे न चतुर्थी । चतुर्थी चेति वक्तव्ये द्वितीयाग्रहण परामपि कृद्योगलक्षणां षष्ठीं बाधितुमिति वृत्तिः । इति चतुर्थी । इत्याहुरिति । परे तु सतो ध्रौव्यस्याविवक्षितत्वमिति भाष्यस्यायमर्थ । अध्रौव्यस्य सतोपि आविवक्षितत्वं ध्रुवपदार्थत्वेनाविवक्षितत्वम् । प्रकृतधात्वर्थव्यापाराश्रयत्वरूपाध्रौव्यस्यैव ध्रुवपदव्यावर्त्यत्वात् । यद्यपि ध्रुवपदस्य सामान्यतो व्यापारानाश्रये शक्ति । तथापि अपायपदसन्निधानात् प्रकृतधात्वर्थव्यापारानाश्रयपरं ध्रुवपदम् । तदावेशाविवक्षणादित्यप्ययुक्तम् । तथा सति त्रस्तादिपदप्रयोगानापत्ते । अर्थविवक्षया हि शब्दप्रयोग । विभागोपयोगित्वेन अविवक्षणादित्यर्थे तु लोकसिद्धधातिरिक्तेर्थे इत्युत्तरग्रन्थासंगति । पर्णद्वारेत्यप्ययुक्तम् । एवमेव ब्राह्मणस्य पितर पन्थानं पृच्छतीत्यादौ ब्राह्मणस्यापि कारकत्वापत्तेस्तात्पर्यग्राहक विनापि सर्वत्र कारकमित्यस्य क्रियाजनकत्वेन विवक्षितमित्यर्थकत्वात् । तात्पर्यग्राहकमित्यप्ययुक्तम् । अपायेत्यस्याभावे नटस्य शृणोति फलाना तृप्त माषाणामश्नीयादित्यादौ अपादानत्ववारणाय अपायेत्यस्यावश्यकत्वात् । अपायेत्युक्तौ अपाये धात्वर्थ

सत्येव अपादानसंज्ञेति न कश्चिद्दोषः। किं च स्पन्दियोगे अपादानत्वाभावाय तत्। तत्र हि विभागो न धात्वर्थ इति वक्ष्यते। व्यापाराभावबोधनायेत्य-प्ययुक्तम्। धावतोऽश्वात् पतित इत्यादौ व्यापारे सत्यपि ध्रुवत्वस्य भवताङ्गीकारेण तदभावबोधनासंभव इत्याहुः। क्रियाश्रयत्वादिति। तत्त्वेन विवक्षणादित्यर्थः। शब्दरूपेति। परस्परमेषशब्दरूपवाचकशब्दोपाधिकतो वाच्यमेषभेदः। अपा-यस्य। अपरसरणस्य। उपादानात्। बोधनात्। एतदुत्तरं परस्परशब्दार्थस्या-पायाश्रयत्वादपादानत्वं दुर्लभमिति शेषः। उभयोरित्यतः पूर्वं क्रियाभेदेपीति शेषः। क्रियायाएकत्वादिति। भेदेनाप्रतिभासमानत्वादित्यर्थः। एकत्वारोपा-दिति वा। परे तु पञ्चकृत्वः पचति पुनः पुनः पचति इत्याद्यनुरोधेन धातूपात्त-क्रियायां एकत्वारोपाङ्गीकारेपि परस्परस्मान्मेषावपसरत इत्याद्यनुरोधेनारोपितै-कत्वाविरुद्धोपि वास्तवभेदो ध्रुवत्वसम्पादक इत्यङ्गीक्रियते। अन्यथा ध्रुवत्वो-पपादनासम्भवात्। तदुक्तं हरिणा। मेषान्तरक्रियापेक्षं अवधित्वं पृथक्पृथक्। मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक्पृथगिति। भाष्यानुसारिमतं तु न क्षोदसह-मित्युक्तम्। प्रधानक्रियान्वयित्वेन विवक्षितं कर्तृसंज्ञमिति न परस्परशब्दार्थस्य कर्तृत्वम् अधिकमग्रे स्पष्टीभविष्यतीत्याहुः। ग्रामादायातीत्यत्र विभागस्य द्विष्ठ-त्वेपि देवदत्तनिष्ठसमवायस्यैव फलतावच्छेदकसम्बन्धत्वेन विवक्षणात्तेन सम्बन्धे-न ग्रामस्य विभागानाश्रयत्वान्न कर्मत्वम्। देवदत्तनिष्ठविभागं प्रति प्रतियोगित्व-रूपमवधित्वमस्त्येवेति पञ्चमी भवति। संयोगानुकूलइति। तेन ग्रामादायाति नगरमित्यत्र नगरस्य कर्मत्वम्। व्यधिकरणेति। वृक्षनिष्ठसमवायस्यैवात्र फलता-वच्छेदकसम्बन्धत्वात्तेन सम्बन्धेन विभागव्यधिकरणो व्यापार इति भावः। बाधइति। एवमेव ग्रामं गच्छति चैत्र इत्यत्र संयोगस्य द्विष्ठत्वेन चैत्रे ग्रामस्य कर्तृत्वेन बाधः। चैत्रनिष्ठसमवायो न फलतावच्छेदसम्बन्धित्वेन विवक्षितः किं तु ग्रामनिष्ठः स तथेत्यपि केचित्। एतेन चैत्रस्य कर्मत्ववारणाय कर्मलक्षणे परसमवेतत्वं विशे-षणं देयमिति तार्किकोक्तमपास्तम्। उक्तरीत्या निर्वाहे तस्य व्यर्थत्वात्। एतेन ग्रामादायतीत्यादौ ग्रामस्य कर्मत्ववारणाय व्यापारव्यधिकरणफलाश्रयत्वं कर्मत्वं आयातेस्तु व्यापारसमानाधिकरणविभागार्थं न तु ग्रामनिष्ठो विभाग इति ग्रामस्य न कर्मत्वमिति प्रयासोऽप्यपास्तः। विभागद्वयानङ्गीकारेपि उपपत्तेरुक्तत्वात्।

अपादानत्वस्याबाधइति । अपादानत्वलक्षणे फलतावच्छेदकसम्बन्धेन विभागा-
श्रयत्वं न निविष्टम् । किं तु विभागप्रतियोगित्वरूपमबाधित्वमेवेत्यपादानस्य-
प्राप्ति देवदत्तयज्ञदत्तौ परस्परं त्यजत इत्यादौ देवदत्तनिष्ठव्यापारमादाय
यज्ञदत्तस्य कर्मत्वं यज्ञदत्तनिष्ठव्यापारमादाय च देवदत्तस्य कर्मत्वम् । व्या-
पारव्यधिकरणफलाश्रयत्वस्य कर्मलक्षणे निवेशे ऽयं प्रयासः समाश्रयणीयो भवति ।
फलतावच्छेदकसम्बन्धेन फलाश्रयत्वं कर्मत्वमित्याश्रयणे तु उक्तक्लेशो नादर-
णीयः । परे तु इमौ अन्योन्यं स्पृशतः अन्योन्यं त्यजत । गुजस्यात्मानमा-
त्मना इत्यादौ कर्मणः परत्वात् कर्तृसंज्ञा प्राप्नोति । न च शब्दोपाधिकृतमर्थ-
भेदमादायात्र व्यवस्था । तथा च देवदत्तादिशब्दार्थादन्योन्यादिशब्दार्थो
भिन्न एव । तथा च तत्र फलतावच्छेदकसम्बन्धेन फलाश्रयत्वं व्यापारव्याधि-
करणफलाश्रयत्वं चास्तीति कर्मत्वम् । कर्तृत्वं च न तदर्थे विवक्षितं किं तु देव-
दत्तादिशब्दार्थे इति वाच्यम् । तथापि भेदान्तरक्रियापेक्षमिति हर्युक्तपक्षे कर्तृ-
त्वस्य दुर्वारत्वात् । न हि हरिणा शब्दोपाधिकृतार्थभेदः समाश्रितः । तथा सति
क्रियाभेदकल्पनवैयर्थ्यापत्तेः । किं च सकर्मकाणां प्रतिषेधो वक्तव्यः अन्योन्यं
स्पृशत इति भाष्यविरोधः शब्दोपाधिकृतभेदाश्रयणे कर्तृकर्मणोर्भेदेन कर्मस्थक्रि-
यया तुल्यक्रियकर्तुरभावात् । कल्पितभेदेन निर्वाहे वास्तवभेदमादाय दोषापा-
दनायोगात् । तस्मात् प्रधानव्यापारप्रयोज्यफलान्वयि कर्म । प्रयोज्यांतं अमेर्मा-
णवकं वारयतीत्यत्राग्नेः कर्मत्ववारणाय । कर्तुरिति तथायुक्तमिति च अत्रैव
तात्पर्यग्राहकम् । एवं च ग्रामं गच्छति देवदत्त इत्यत्र देवदत्तस्य न कर्मत्वं
फलानन्वयात् । प्रधानव्यापारान्वयी कर्ता । तेन परस्परस्मान्मेषावपसरत अ-
न्योन्यं स्पृशत त्यजत इत्यादौ परस्परादिशब्दार्थस्य न कर्तृत्वम् । प्रधानक्रि-
यानन्वयात् । ध्रुवमपाय इत्यस्यायमर्थः । अपायो विभागानुकूलो व्यापारः तस्मि-
न् साध्ये ध्रुवं विभागानुकूलव्यापारानाश्रयत्वे सति विभागाश्रयः । इदमव-
धित्वम् । तत्र प्रत्यासत्त्या यद्विभागाश्रयत्वेनापादानत्वं तद्विभागानुकूलव्यापारना-
श्रयत्वम् । तेन पर्वतात्पततोऽश्वात्पततीत्यादौ पुरुषनिष्ठविभागमादायापादानत्वं
तदनुकूलव्यापारानाश्रयत्वमश्वस्यास्त्येवत्यपादानत्वम् । एवं त्रस्तादश्वादित्यादौ
बोध्यम् । यद्यपि पतनत्रासादेरपि पुरुषाश्वविभागानुकूलत्वं वास्तवमस्ति । त-

चापि यद्धात्वर्थप्रत्ययपादानत्वं विभागानुकूलतद्धात्वर्थानाश्रयत्वं तस्य सुस्थमेव। ननु परस्परस्मान् मेषाविस्यादौ धात्वर्थैक्याद्बाधो दुर्वार इति चेत्सत्यम्। यत्कर्तृनिष्ठव्यापारजन्यविभागमादायापादानत्वं तत्कर्तृव्यापारानाश्रयत्वं ध्रुवत्वम्। तच्च मेषान्तरक्रियापेक्षं सुलभम्। धातुना निवृत्तभेदक्रियाप्रतिपादनेपि वस्तुतस्तत्तत्कर्तृनिष्ठक्रियाभेदोस्त्येवेति तमादाय व्यवस्थासंभवस्येव। तथा च यत्कर्तृनिष्ठविभागानुकूलव्यापारमादायापादानत्वं तद्व्यापारानाश्रयत्वं तद्व्यापारे ध्रुवत्वं फलितम्। सतो ऽध्रुवत्वस्येति भाष्यस्योक्त एवार्थः। ध्रुवमिति तु एकपर्णतात्पर्येण पर्णात्पर्णं पततीति प्रयोगवारणाय। पर्णनिष्ठविभागानुकूलव्यापारस्य पर्णे सत्वात्। एवं चैत्रश्चैत्रं गच्छतीति प्रयोगवारणाय कर्मलक्षणे प्रधानव्यापारानाश्रयत्वं विशेषणं देयम्। ग्रामादायातीत्यत्रोक्त एवार्थः। ग्रामं त्यजतीत्यत्र संयोगनाशानुकूलो व्यापारस्त्यजेरर्थः। न तु विभागानुकूलः सः। विभागस्तु संयोगनाशाङ्गिन्न एव। तेनापाय इत्युक्तेर्नात्रापादानात्वम्। अपाय इत्युक्तौ ग्रामं त्यजति ग्रामादायातीत्यनयोरविशेषप्रसङ्गः। ननु वृक्षात्पर्णं पतति ग्रामादायातीत्यादौ विभागरूपफलाश्रयत्वेन कर्मत्वे प्राप्ते अपादानत्वारम्भादपादानत्वं तदपवादः स्यात्। तथा च अपादानमुत्तराणि कारकाणि बाधन्त इति भाष्यासंगतिः। किं च गोः पयो दोग्धीत्यत्र गोपयसोर्विभागाश्रयत्वाविशेषात्कर्मत्वं अपादानत्वं वा स्यादिति चेन्न। पतत्यायात्योर्व्यापारसमानाधिकरणो विभागोर्थः। सामानाधिकरण्यविशिष्टविभागत्वं फलतावच्छेदकम्। विभागस्यैकत्वेपि तदवच्छिन्नाधिकरणत्वं न वृक्षग्रामयोरिति न कर्मत्वप्राप्तिः। वृक्षग्रामनिष्ठविभागीयसमवायस्य फलताच्छेदकसंबन्धत्वानङ्गीकाराद्वा। तथा च ग्रामं त्यजतीत्यत्र विभागस्य फलत्वाङ्गीकारेपि न दोषः। ग्रामनिष्ठविभागीयसमवायस्यैव फलतावच्छेदकसंबन्धत्वेन तेन संबन्धेन फलाश्रयत्वाद् ग्रामस्य कर्मत्वम्। व्यापारसमानाधिकरणविभागानुकूलव्यापार एवापायशब्दार्थ इति त्यजति योगे नापादानत्वम्॥ अपादानत्वस्य कर्मत्वेन बाधो वा। त्यजत्यर्थशरीरे व्यापारव्यधिकरणत्वनिवेशो व्यर्थ एव। ग्रामनिष्ठसमवायस्यैव फलतावच्छेदकसंबन्धत्वे वास्य तात्पर्यम्। एकव्यापारार्थकत्वे पयोनिष्ठसमवायस्य फलतावच्छेदकत्वेन तस्य कर्मत्वम्। गोस्तेन संबन्धेन विभागानाश्रयत्वान्न कर्मत्वम्। व्यापारद्वया-

र्थकत्वे तु प्रधानव्यापारानाश्रयत्वात् पुरुषस्य गोरित्यपादानत्वं प्राप्तं कर्मत्वेन बाध्यत इत्याशयेनापादानमुत्तराणीत्युक्तं भाष्ये । विभागानुकूलव्यापारस्यापाय शब्दार्थत्वे तु व्यापारद्वयार्थकद्रुहेरतथात्वान्न गोरपादानत्वप्रसक्तिः । तथापि नपतेरिव विशेषणतया ऽपायार्थत्वमाश्रित्य बाध्यबाधकभाव उक्तो भाष्ये । अपायमित्यस्य प्रयोजनमुक्तमेवेत्याहु. । अविवक्षणादिति । स्वरूपत एवेत्यर्थः । अवधित्वेऽपयोगित्वेनेत्यन्ये । भयभीरिति । किमन्तावेताविति भावः । धातुनिर्देशे तु व्यधिकरणबहुव्रीहिराश्रयणीयः स्यादिति भाव । सर्वसंज्ञापवादइति । इदमयुक्तम् । संज्ञान्तराप्राप्तिविषये चोराद्बिभेतीत्यादौ चारितार्थ्यात् । तस्मात् कस्य बिभ्यति देवाश्चेत्यादौ हेतुत्वस्याविवक्षायां संबन्धित्वेन विवक्षायामपादानत्वाभावाय । हेतुग्रहणे तु हेतुत्वेन विवक्षायामेव तत् । भयग्रहणं किम् । दुर्भिक्षेणेन त्रायेत्यत्र मा भूत् । हेतौ तृतीयैव यथा स्यात् । भयहेतुरित्युक्तौ तु भयत्राणार्थकत्राधातुयोग एवैषा । तेनाप्यस्य हेतोस्त्रायत इत्यपि सिद्धम् । अन्यथा कारकविभक्तेर्बलवत्त्वात् पञ्चम्येव स्यात् । तिरस्कारेति । अन्यत्र कर्मसंज्ञा बाधिकेति भेद । अध्ययनात्पराजयतेस्तत्रापि अध्ययनविषयकग्लानिबोधेन तत्रापि परं जानाति भावीभीर्ष्यतीति वत् कर्मत्वप्राप्तेः । सयोगादीति । कूपादन्ध वारयतीत्यत्र संयोग । पापान्माणवक वारयतीत्यादिसंग्रहायाविषयम् । अत्र कूपो मत्संयुक्तो भूयादिति नान्धस्येच्छा तथापि उत्तरदेशो मत्संयुक्तो भूयादितीच्छामादाय कूपस्य अनभीप्सितत्वम् । व्यापारमात्रस्याक्षेप इति पाठ । प्रयोजककाङ्क्षायामिति शेष दर्शनाभावानुकूलइति । दर्शनाभावेच्छयेति वक्तुमुचितम् । प्रत्यासत्तिलक्षणमिति । तथा च तस्या अप्रयोगात् नोमभवानाविसस्यायं विषय इति भाव । विशिष्टस्याक्षेपलभ्यत्वेपीति । वस्तुतस्तु कर्मसंज्ञात्र बाधिका भविष्यति । तस्मात् मात्रा स्वस्यादर्शनमिच्छतीत्यत्र मातुर्मा भूत् । न च कर्तृसंज्ञा बाधिका । अन्तर्धावित्यस्याभावे अपादानत्वस्य कर्तृत्वापवादत्वापत्ते । अन्तर्धावित्युक्तौ तु दर्शनाभावेच्छापूर्वकव्यवहितदेशस्थितिपर्यन्तार्थकधातुयोग एव अपादानत्वमिति न कश्चिद्दोष । माया शबलम् । मायावच्छिन्नम् । जगदुपादानेति । विवर्तोपादानमिति शङ्करमतम् । परिणाम्युपादानमिति भट्टभास्करमतम् । यथोर्णनाभि. सृजते गृह्णते चेति दृष्टान्तानुरोधात् । ब्रह्मशरीर मायोपादानं न तु ब्रह्म न ह्यूर्णनाभिश्चेतन तन्तूपा-

दानं किं तु तच्छरीरं तथात्रापि औपचारिकमिति परे, । तत्रप्रकाशतइति । प्रथममित्यस्याध्याहारोपि धातोर्न प्राथम्यमर्थ इति । बोध्यम् । शेषत्वविवक्षया । तेन आजघ्ने इति आत्मनेपदसिद्धिः । तत्राकर्मकाधिकारादविवक्षितकर्मणोऽप्यकर्मकत्वात् । इतिशेषइति । तेन न ल्यब्लोप इति भावः । न पञ्चमीति । ननु निपातानां द्योतकत्वेन नात्र दोषः । अन्यथा पटपदोत्तरं षष्ठी स्यात् । एवं घटाद्भेद इत्यत्रापि न दोषः । अन्यपदेन विशेषणतया वा अन्यत्वार्थकग्रहणात् । इत्यरुचेराह । घटादेकइति । अर्थग्रहणे ऽत्र पञ्चमी स्यादिति भावः । एवं त्वशब्दयोगेपि । असाधुत्वे गमकमाह । इतरग्रहणमिति । वचनावश्यकत्वेनेति । यतश्चाध्वकालनिर्माणमिति वचनावश्यकत्वेनेत्यर्थः । पञ्चम्यन्तार्थस्येति । स्वार्थे पञ्चमीति भावः । अतएवेति । विभक्तेरध्याहारादेवेत्यर्थः । विभागद्वारकं च कार्तिक्यवधिकत्वं आग्रहायण्या इति भावः । कार्तिकीमादाय गते । इदं प्रभृतीत्यस्य विवरणम् । तथा च कार्तिक्या इत्यस्य विभक्ते इत्यनेन शाब्दो ऽन्वयः प्रभृतीत्यनेनार्थोन्वयः । मयकालमादायेति । अत्र गते इति न शेषः । तथा अवीचीमारभ्येत्यत्र विभक्त इत्यस्य न शेषः । अवीचिर्भूभागविशेषः । एवमन्यत्रापीति । पाटलिपुत्रात्प्रभृति मथुरापर्यन्तं वृष्टो देव इत्यत्र । पञ्चम्याअपीति । पञ्चम्या एव ज्ञापने पुनः पञ्चम्येति सूत्रं व्यर्थं स्यादिति भावः । अस्मादेवनिपातनादिति । अनेन सूत्रेणात्र पञ्चमीत्यन्ये । तत्प्रयोजको हेतुश्चेति विहितकर्तृसंज्ञावर्जितमित्यर्थः । तेन शतेन देवदत्तेन यज्ञदत्तो बन्धित इत्यत्र न । अत्र शतं तत्प्रयोजक इति हेतुसंज्ञं कर्तृसंज्ञं च । अर्थासंगतेरिति । अत्र भावाभावान्यतरस्याङ्गीकार इत्यर्थ इति केचित् । अन्याभ्यविपरीतेति । अन्याभ्यविपरीतपूर्वनिपातस्य द्वन्द्वे । एतेन प्रत्युदाहरणस्य दक्षिणेन ग्राममित्यस्य पूर्वं निर्देशो निर्बीजः स्यादिति भावः । सूत्रद्वये पञ्चमीपदानुवृत्तये वार्तिकम् । द्रव्यभिन्नेति । स्तोकशब्दे द्रव्यवाचित्वस्यापि सत्त्वेन द्रव्यवचनाभिन्नेत्यर्थो न संभवतीति भावः । अर्थभेदाच्छब्दभेदे तु तथोक्तावपि न दोषः । द्रव्याभिन्नवचनत्वं विशेष्यतया विवक्षितम् । ननु धर्मवचना अमीति वक्ष्यमाणत्वात्सर्वनामपरामर्शयोग्यत्वं स्तोकत्वस्यास्तीत्यरुचेराह । लिङ्गेति । नपुंसकभिन्नलिङ्गेत्यर्थः । परंपरयेति । द्रव्यद्वारेत्यर्थः । स्तोकंपचतीति । ज्योतिष्टोमेन यजेतेतिवत् करणतया फलस्यान्वये तु तृतीयापञ्चम्यो

भवत एवेति बोध्यम्। द्रव्यविशेषणभिन्नवचनत्व अद्रव्यवचनत्वमित्यग्रे । इति प्रथमी । तत्तद्रूपेणेति । चैत्रसयुक्ते धने देवदत्तस्येदं न चैत्रस्येत्यादौ । सबन्धत्वेनेति। देवदत्तस्य पुत्रपाणिकम्बलनीत्यादौ। तन्मूलकेसंबन्धइति । यथा छागस्य हसित अङ्के सुप्त इत्यादौ कर्तृक्रियाभावमूलकजन्यजनकभावसमन्धविवक्षा । समूहइति । निरूप्यनिरूपकभावापन्न इति शेष । प्रत्येक तु न संबन्धत्वम् । द्विष्ठत्वात् । ससर्गविधयेति । लाघवात् प्रकारतयाभाने तत्प्रतियोगिकसबन्धान्तरस्य भानमङ्गीकर्तव्यमिति गौरवम् । प्रत्ययार्थ प्रधान इति व्युत्पत्तिशरीरे प्रधानपद प्रकारतान्याविषयतावत्परम् । सबन्धस्यैवेति । तथा च सता गतमित्यादौ सर्वत्र जन्यजनकभावसबन्धस्यैव विवक्षेत्यर्थ । सयोगसबन्धावाञ्छेनेति । प्रयोगसबन्धेपि न षष्ठी । चैत्रसयुते अन्यस्वामिके धने चैत्रस्येद धनमिति प्रयोगापत्ते । अत एव मतुप्सूत्रे भाष्ये पर्वते वृक्षा सन्ति न तु ते तस्य किं चित् इति। तस्याएवेति । अन्यतरस्यां ग्रहण समुच्चयार्थमिति भाव । मातुर्गुणस्मरणमिति। गुणैर्मातु स्मरणमित्यर्थ । गुणानां करणानां शेषत्वविवक्षया षष्ठी । भवत्येवेति । अनेन षष्ठ्यां तु समासो न स्यादिति शेष । तत्र हेतु समासनिषेधादिति वक्ष्यमाण । अतएवेति । शेष इत्यस्यानुवृत्तेरेवेत्यर्थ । अविवक्षितइति । अन्ये तु धातूनामनेकार्थत्वाद्वचि करोत्यर्थे । ल्युट् च कर्तरि । तथा च वचनशब्द कर्तृशब्दसमशील इत्याहु । कर्मत्वेनविवक्षायामिति । इदमुपलक्षणम् । हिंसायां चोरस्य क्राथनमित्यन्यानापत्ति । हेतुमण्णिचि प्रेरणाबोधापत्ते । क्रथक्रथमित्यादेरिति । ननु निपातनात्परत्वाच्चिण्णमुलोरिति दीर्घविकल्पे क्रथ क्रथमित्यस्य सिद्धि । क्रथयतीत्यादि तु नेष्यत एवेति चेन्न । निपातस्य शेषषष्ठीसंनियोगशिष्टत्वाभावे णिचुसंनियोगविशिष्टत्वे षान्तरङ्गत्वादौर्णे पश्चात्प्रवर्तमानदीर्घविकल्पेन जातस्यानिवृत्ते । एव सति मित्त्वैय्यर्थ्यमापततीति चेन्न । तद्बलेन चौरादिकत्वमपीति कुतो न कल्प्यते । घटादित्वचौरादिकत्वयो कल्पने सूत्रे क्राथेति निर्देशोप्युपपन्न । क्रथयतीत्यपि सिध्यति स्वन्मते निपातनाद्वृद्धि कल्प्या । मित्त्वसामर्थ्येन क्रथं क्रथमित्यादौ जातनिवृत्तिश्च कल्प्या । मन्मते तु चुरादित्वमेक कल्प्यम् । तदप्याकृतिगणत्वात्सिद्धमिति कल्पनालाघवम् । एव सति घटादे क्रथ क्रथ क्रथयति अक्राथि इति च सिध्यति ।

तव तु तन्न सिध्येदित्यभिप्रायेण कथयतीत्यादेश्चानापत्तिरित्युक्तम् । अक्रधीत्यादेश्चेति पाठस्तु सुगमः । द्वयारम्भाच्चेति । आमस्येति कर्मणि द्वितीयया सिद्धम् । न च शेषत्वविवक्षायां द्वितीयार्थम् । वैदिकोदाहरणे शेषत्वविवक्षयैव प्रयोग इत्यत्र मानाभावात् । विभाषोपसर्गे इति च व्यर्थमेव । समासविकल्पस्य शेषषष्ठ्यैव सिद्धौ दिवस्तदर्थस्य नोपसर्गेति न्यासेनैव सिद्धेः । द्वितीयार्थमिति । शेष इत्यस्य संबन्धे कर्मत्वाविवक्षायां कर्मणि द्वितीयेत्यनेनैव द्वितीयासिद्धौ एतद्भाष्यासंगतिरिति भावः । वेदे शेषत्वविवक्षयैव द्वितीयान्तप्रयुक्तामित्यत्र उपक्रमोपसंहारादिकं तात्पर्यलिङ्गं न किंचिदस्ति । मार्वेद्वयस्येति । इदं चिन्त्यम् । शेषषष्ठ्या उक्तप्रयोगासिद्धेः । एतत्सूत्रद्वयेति । विभाषोपसर्गे द्वितीयाब्राह्मणेति सूत्रद्वयेत्यर्थः । भाष्यन्त्विति । नित्यषष्ठीप्राप्तौ द्वितीयार्थमिति भाष्यमित्यर्थः । सुधियोविभावयन्त्विति । केचित्तु स्वरयादिभाभाष्यात् कर्मादीनामविवक्षा शेष इति भाष्ये बहुवचननिर्देशाच्च कृत्वोर्थेत्यत्र शेष इति संबध्यते । न च षष्ठीशेषेति सूत्रोक्तं भाष्यकृतास्मृतमिति वाच्यम् । अत्र मानाभावात् । दिवस्तदर्थस्येति सूत्रे शेषपदं न संबध्यते । उत्तरसूत्रद्वयारम्भात् । शतस्य दीव्यतेति भावे लकारस्तु शतस्येत्यत्र शेषे षष्ठीमाश्रित्य सुलभः । न चैवं सूत्रोपात्तसकर्मकाणामकर्मकवचनमिति वार्तिकवैय्यर्थ्यमिति वाच्यम् । कर्मणि षष्ठ्यामेव मातुः स्मर्यतेत्यादौ भावे लकार इत्यभिसंधाय वार्तिकप्रवृत्तेः । शेष इति वर्तते इति मत्याख्यानभाष्यं तु स्मराम्यहं मातरमिति प्रयोगसिध्यर्थं मुख्यतः प्रवृत्तम् ॥ आनुषङ्गिकं तु मातुः स्मर्यतेत्यत्र भावे लकारसाधनम् । अधीगर्थादयः प्रेष्यन्तुवपर्यता इति कैय्यटग्रन्थे तु दिवस्तदर्थस्येत्येतदाभिन्ना इति पूरणीयम् ॥ नपदान्तसूत्रे वरेयलोपस्वरवर्ज्यद्विर्वचनादीनीति भाष्यग्रन्थे पर्युदासकोटौ दीर्घपदस्य भवता पूरणात् एवं च शति द्वितीया ब्राह्मणेति सूत्रस्य भाष्यमप्युपपन्नम् । ज्ञो विदर्थस्येत्यत्रापि शेष इति संबध्यते अन्यथा मण्डूकानुवृत्तित्त्वीकारापत्तेः । शतं दीव्यतीत्यादितु अर्थान्तरे साधु ॥ एवं च अक्षैर्दीव्यतीत्यत्रापि दिवस्तदर्थस्येति षष्ठीभवत्येव । क्रीडाव्यवहाराभ्यामन्यत्राक्षैर्दीव्यतीति प्रयोगः । अनयोरर्थयोस्तुतृतीयां नाभित्वा परत्वात्षष्ठ्येव ॥ मनसा देवी इति तु गुत्याद्यर्थान्तरे साधु । एतेन प्रतिपदविधानाषष्ठी न समस्यत इति वचनं षष्ठीविधानसामर्थ्यलभ्यमिति केन चिद्ध-

कमणास्तीत्याह ॥ कर्तृकर्मणो कृति ॥ भेदेनान्वयेति । वस्तुत साक्षाद्वा-त्यर्थाश्रय इत्युचितम् । तेन वैकुण्ठमधिशयितेत्यादौ न षष्ठी। प्रसङ्गादाह ।क्रिचे-ति । परे तु मनरीत्यावेति विशेष्य एव द्वितीयान्तस्यान्वय ॥ विशेष्ये बाधात्तु विशेषणे सपर्यवस्यतीति रीत्येत्यर्थ । इद चिन्त्यम् । द्वितीयाया कारकविभक्तित्वेन प्रकृत क्रियान्वय एव प्रवृत्ते । मलोपवचनस्यार्थमेवस्यादिति । इदमुपलक्षण म-लोपवचनमसगतमेव स्याद् मकारस्यैवाभावाद् इत्यर्थस्य। न च षष्ठीबहुवचने आ-मि तत्संगति । क्रियाविशेषणे बहुत्वाभावेन बहुवचनाप्रवृत्ते । वाक्येमलोपश्चेति । इदमयुक्त गौरवेण तथा नोक्तमिति समाधानसभवात् । वैयधिकरण्यादिति । वि-शेष्येण सामानाधिकरण्याभावादित्यर्थ ॥ समासाभावात् । विशेषण विशेष्येणेति समासाभावात् । नमार्वत्रिकइति । परे तु भूतपूर्व इति निर्देशेन विस्पष्टादीनीति व-चनेन च सुपसुपेति समासोऽव्ययवद्धारकसामर्थ्येपि प्रवर्ततेऽत एव नात्यायनकष्टचा-प इति रघुकाव्यप्रयोग सगच्छते । तत्र हि नात्यायतेति क्रियाविशेषणम् । ए-व पुरुष सततोत्थित नित्यप्रवासी शीघ्रभोजी शीघ्रगामीत्यादय प्रयोगा सगच्छ-न्ते। मलोपवचन तु व्यस्तप्रयोगे तथात्मा कुलार्थ वाक्ये मलोप इति गौरवान्नोक्तमि-त्याह् । कर्तृत्वाभावे इत्येव पाठ । कर्तृ कर्तृत्वाभावे इति पाठे तु कर्तृपदमधिश-ब्दार्थो ऽध्यारोहणाश्रयपरमान लोकेत्युत्तरार्थं कृद्ग्रहणमित्याशङ्क्याह । नलोके-तिसूत्रेइति । ननु पूर्वेण महेत्यत्र कर्तृत्वादेव तृतीया सिद्धेति भाष्यात्क्वचिद्व्यया-र्थस्यापि साध्यत्वेन मानमिति सहयोगे षष्ठीवारणाय कृद्ग्रहणफल समवतीति चेन्नात लोकेति निषेधेनाद्यापात कृदव्ययस्यैव ग्रहणमिति शेषरस्तु प्रायोभिप्राय । भेदिका-देनदत्तस्येति । स्त्रीप्रत्ययोरिति नियमस्य प्रतिषेध । कर्तरिकर्मणिचेति । अत्र-कर्तरीत्यस्योदाहरण चिन्त्यम् । तादृशक्रियाकर्तुरनभिहितस्य कुत्राप्यदर्शनादिति केचित् ।परे त पाचितपूर्वीतण्डुल देवदत्तेन यज्ञदत्त इत्युदाहरण कर्तु समवत्येन। अत्र ण्यर्थकर्तरीति । न प्रकृत्यर्थकर्तरि । प्रधानाप्रधानयोरिति न्यायात । प्रकृत्यर्थ-स्य णिजर्थविशेषणत्वेन टनिप्रत्ययार्थविशेषणत्वासभवाच्चेत्याह् । पृथक्प्रयोगेणे-ति । तेन देवदत्तेन पक्त्रिमित्यादौ षष्ठी नेति मुचितम । एवमेवाणितृण णच-स्त्रियामत्र इत्येतद्विषयेपि कर्तृकर्मणोरिति न तत्र नाद्वित विना कृदन्तस्याप्रयोगेण कृदन्तशक्तिमप्रयोज्यक्रियाकर्तृकर्मणाभावात् । के चित्तु तद्धिताश्रये म-

भूदित्येतदर्थं कृद्ग्रहणं तण्डुलानां पाचकतर इत्यादौ तु अन्तरङ्गः कारकयोगः पश्चादतिशययोग इति न दोष इत्याहुः ॥ वृत्तिर्नस्यादिति । वृत्तस्य विशेषणयोगो नेति तु न शङ्क्यम् । शरैः शातितपत्र इत्यादावविवक्षितक्रियायामपि कारकान्वयस्वीकारात् । एवं तण्डुलानां पाचकपुत्र इति समासः । तण्डुलानां पाचकैरिति इन् प्रत्ययश्च भवत्येव । ननुक्तप् ॥ १ ॥

इति श्रीमद्राघवेन्द्राचार्यविरचितायां लघुशब्देन्दुशेखरव्याख्यायां विषमपदवाक्यविवृतौ कारकप्रकरणम् ॥ ॥ अविघ्नमस्तु ॥



१ एतावान्कारकस्य भाग उपलब्धः । तदग्रिमपर्यन्तं प्रति प्रकरणं किंचित् त्रुटितमेव वर्त्तते इति नास्यामावृत्तौ मुद्रितोऽग्रिमो भागः ।